ओजसंख्या यदाभीष्टा ध्रुवासु विरतौ तदा ।
गो[1] लता युग्मसंख्ये तु [1]विरतौ गुरुता लघोः ॥ ६.२ ॥

तथा –

[2]गुरुअं[2] च्चिअ एक्कलहू[3] विरामविसयंसि विसमसंखाए ।
जमललहू लहुअ च्चिअ[4] समसंखासंठिओ होइ ॥ ६.३ ॥

× क × प-विसर्ग-अनुस्वार-व्यञ्जनाह्रादिसंयोगे ॥ ७ ॥

जिह्वामूलीये उपध्मानीये विसर्जनीये अनुस्वारे व्यञ्जने ह्रादिवर्जिते संयोगे च परे ह्रस्वोऽपि गो भवति वक्रश्च । 'अह्रादि' इति समस्तव्यस्तसंग्रहात्[5] ह्रसंयोगे[6] ह्रसंयोगे रसंयोगे च न गुरुः । आदिशब्दाद्यथादर्शनम् । ह्रादिसंयोगे[7] च यथा –

स्पृष्टं[8] त्वयेत्यपह्रियः खलु कीर्तयन्ति ॥ ७.१ ॥

तथा –

तव ह्रियापह्रियो मम ह्रीरभूत् शशिग्रहेऽपि द्रुतं न धृता ततः ।
वहल[9]भ्रामरमेचकतामसं मम प्रिये क्व समेष्यति तत् पुनः ॥ ७.२ ॥

*

धनं प्रदानेन श्रुतेन कर्णौ ॥ ७.३ ॥ इत्यादि ।

*

[3]लीलासिताब्जमुत दर्पणमातपत्रं किं दन्तपत्रमथ किंशुकमौलिरत्नम् ।
किं चामरं तिलकविन्दुरथेन्दुविम्बमेतद्दिवो निह्नुतदीप्ति मुदे न कस्य ॥ ७.४ ॥

प्राकृतेऽपि यथा –

[4]जह ण्हाउं[10] ओइण्णे अब्भुत्तमुल्हसिअमंसुअद्धंतं[11] ।
जंहय[12] णं[13] ण्हाओसि[14] तुमं सच्छे गोलानईतूहे ॥ ७.५ ॥
अब्भुत्तं[15] अभिषिक्तम् । तूहं तीर्थम् ॥ ७.५ ॥

तथा –

[5]वोद्रहद्रहंमि पडिआ । [6]कुवलयखित्तद्रहि० ॥ ७.६ ॥ इत्यादि ।

---

1) विरतौ गुरुता लघोरिति – लक्षणवशाल्लघुत्वे प्राप्ते गुरुत्वम् । 2) गुरुअच्चिएति – एकलघुविवक्षावशाद् गुरुर्भवति द्विलघुर्लघुरेव । 3) लीलासितेति वृत्ते दर्पणमिति क्लीबेऽपि दृश्यते । दन्तपत्रमिति – ताडङ्कम् । एतद्दिव इति – दिवः स्त्रीत्वात् तस्या धर्मा लीलासिताब्जादयो भणिताः । 4) जह ण्हाउं ति – स्नातुमवतीर्णे सात्त्विकभाववशात् आर्द्रे सत् उल्लस्तं अंशुकपर्यन्तं 'अद्धंतो पेरंते' इति वचनात् । उद्धृतशफरी दृष्ट्वा चकितो न स्नात इति संटङ्कः । 5) वोद्रहद्रहंमि पडिअत्ति – तेच्चिअ सुहया तेच्चेअ पंडिआ ते जयंति जिय(अ)लोए । वोद्रहद्रहम्मि पडिआ तरंति जे चेव लीलाए ॥ ग्रामीणतरुणसमूहह्रदे । अत्र च 'द्रे रो न वा' [ सि० है० ८.२.८० ] इति सूत्रेण विकल्पे न लोपः । 6) कुवलयखित्तद्रहित्ति – पंकयपंकि वहोडि, कुवलयखित्तद्रहि । विवत्ति वाडिहि वल्लि, ससहरु ·· गहि । निम्मवि करवयणाहर, पुह लीलावइहि । उग्घीट्ठी निअ सिट्ठि, निवाइ पयावइहि ॥

---

१ गौ A   २ गरुय P   ३ इक्कलहू A   ४ च्चिय AP.   ५ व्यस्तसमस्तस० A.   ६ ह्रसयोगे N
७ ह्लादिस० AB   ८ स्पष्टं A   ९ वहुल A   १० न्हाउं A   ११ उल्लसियमसु० A   १२ जहयं N   १३ न E.
१४ न्हाओसि A   १५ अब्भुत N.

एषु अतीव्रप्रयत्नत्वं संयोगस्य गुरुत्वाभावे हेतुः । तीव्रप्रयत्ने तु[१] भवत्येव गुरुः । यथा – 'वर्हभारेषु केशान्' इत्यादि । केचित्तु ×क ×पयोरपि परत्र स्थितयोः पूर्वस्य लघोर्गुरुत्वं नेच्छन्ति । यथा –

प्रणतसुरवरधरणनृप× परमविजितमदमदनजनन[२]मरण ।
सकलुपजनसलिलकतक× कनकमय सुतनु जिनवर वृपभ जय[३] ॥ ७.७ ॥

**दीर्घप्लुतौ ॥ ८ ॥**

द्विमात्र-त्रिमात्रौ वर्णौ ग[४]संज्ञौ भवतः वक्रौ च ॥ ८ ॥

**स द्विमात्रः ॥ ९ ॥**

स गसंज्ञो द्विमात्रो भवति । [1]एकमात्रे असती मात्रा आरोप्यते । त्रिमात्रे सती निराक्रियते ॥ ९ ॥

**एदोतौ पदान्ते प्राकृते ह्रस्वौ वा ॥ १० ॥**

पदान्ते वर्तमानौ एकार-ओकारौ प्राकृतभाषायां वा ह्रस्वौ भवतः । यथा –

[2]पच्चूसगयवरुम्मूलिआएँ उड्डीणससिविहंगाए ।
धवलाइं गलंति निसालयाएँ नक्खत्तकुसुमाइं ॥ १०.१ ॥

*

[3]उअ पोम[५]रायमरगयसंवलिआ णहयलाओं ओअ[६]रइ ।
णहसिरिकंठब्भट्ठ व्व कंठिआ कीररिछोली ॥ १०.२ ॥

इँ हिँ इत्येतयोः [4]ह्रस्वत्वं शब्दानुशासने सा[७]नुनासिकत्वविधानात् सिद्धमिति नेहोच्यते । अपभ्रंशे त्वपदान्तयोरपि 'कादिस्थैदोतोरुच्चारलाघवम्' [ सि. है. ८. ४. ४१० ] इति 'पदान्ते उँ हुँ हिँ हँ काराणाम्' [ सि. है. ४. ८. ४११ ] इति च ह्रस्वत्वं शब्दानुशासने निर्णीतमिति नेहोच्यते ॥ १० ॥

**तुर्यो[८]ऽंशः पादोऽविशेषे ॥ ११ ॥**

छन्दसश्चतुर्थो भागः पादसंज्ञः अविशेषे सामान्याभिधाने । यत्र तु द्विपदी-पञ्चपदी-षट्पदी-अष्टपदी चेति विशेषाभिधानं तत्र [5]द्वितीयाद्यंशोऽपि पादः ॥ ११ ॥

---

1 ) एकमात्रे असती मात्रारोप्यत इति – अन्तलघौ एकमात्रे असती मात्रारोप्यते । त्रिमात्रे प्लुते सती निराक्रियते गुरोर्द्विमात्रत्वेन संमतत्वात् । 2 ) पच्चूसगयवरुत्ति – प्रभातगजवरोन्मूलितायाः उड्डीनचन्द्रविहंगाया. श्वेतानि क्षरन्ति निशालताया. नक्षत्रकुसुमानि । 3 ) उअ पोमरायत्ति – उअत्ति पश्य । पोमरायत्ति – पद्मरागः । णहयलाओ इत्यत्र सूत्रं फलितम् । ओअरइत्ति – अवतरति । भट्ठ व्व – भ्रष्टेव । कंठिएत्ति – कण्ठाभरणम् । कीररिछोलीति – शुकश्रेणि. । 4 ) ह्रस्वत्वं शब्दानुशासने इति – प्राकृतलक्षणे । 5 ) द्वितीयाद्यंशोऽपि पादः । प्रथमादिरपि द्वितीयाद्यपेक्षया द्वितीयाद्यंश उच्यते ।

---

१ तु dropped in A. पुनर् E २ °मरण BFP ३ जय ॥ पथ्या AB ४ गसंज्ञौ ABP. ५ पउमराय AP ६ ओयरइ CDN. ७ सानुनासिक० to ह्रस्वत्वं शब्दानुशासने dropped in N ८ तुर्यौंशी A.

**वृत्तम्** ॥ १२ ॥

प्राङ् मात्राछन्दोभ्यो यदभिधास्यते तद्वृत्तसंज्ञं ज्ञेयम् । [1]तच्च स्थिरगुरुलघ्व्[१]क्षर-विन्यासमिष्यते । [2]पाटन-संयोगयोरभावात् । मात्राछन्दांसि तु जातिरिति प्रसिद्धानि ।

यदाहुः –

पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ॥ १२.१ ॥

वृत्तं च समार्धसमविषमभेदात् त्रेधा । तत् क्रमेण लक्षयति –

**समैः पादैः समम्** ॥ १३ ॥

पादैश्चतुर्भिस्तुल्यलक्षणैः समं वृत्तम् ॥ १३ ॥

**समार्धमर्धसमम्** ॥ १४ ॥

यस्य तुल्ये अर्धे तद्[२]र्धसमं वृत्तम् ॥ १४ ॥

**अन्यद्विषमम्**[३] ॥ १५ ॥

आभ्यामन्यद्विषमं वृत्तम् ॥ १५ ॥

**श्रव्यो विरामो यतिः** ॥ १६ ॥

विरमणं विरामो विश्रामः । [3]स श्रुतिसुखो यतिसंज्ञः । सा[५] च तृतीयान्तेषु गद्यादिनिर्देशेषु उपतिष्ठते । गादयश्च साकाङ्क्षत्वात् यतिरित्यनेन संबध्यन्ते । तेन[६] गाद्य-वच्छिन्नैरक्षरैर्यतिः क्रियते इत्ययमर्थः सिध्यति । तत्रैषा यत्युपदेशोपनिषत् पठ्यते –

यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः ।
गादिच्छिन्नपदान्ते च लुप्तालुप्तविभक्तिके ॥ १ ॥

तत्र [4]'यतिः सर्वत्र पादान्ते' यथा –

नमोऽस्तु वर्धमानाय स्पर्धमानाय कर्मणा ।
तज्जयावाप्तमोक्षाय परोक्षाय कुतीर्थिनाम् ॥ १६.१ ॥ इति ।

न पुनरेवं यथा –

नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे ॥ १६.२ ॥ इति ।

[5]'श्लोकार्धे तु विशेषतः' इत्यत्र सन्धिकार्याभावः स्पष्टविभक्तित्वं च विशेषः । यथा –

नमस्यामि सदोद्भूतसिन्धनीकृतमन्मथम् ।
ईश्वराख्यं परं ज्योतिरज्ञानतिमिरापहम् ॥ १६.३ ॥

1) तच्च स्थिरगुरुलघ्वक्षरेति – आर्यादौ हि गुरुलघ्वोर्व्यभिचारिता न त्वत्र समे छन्दसि । लघुद्वयस्थाने गुरुर्न भवति गुरुस्थाने लघुद्वयं न भवतीति भाव. । 2) पाटनसंयोगयोरभावादिति – गुरोर्लघुद्वयकल्पना पाटनं लघुद्वयस्य गुरुकल्पना संयोग. । 3) स श्रुतिसुखो यतिसंज्ञ. । श्रुतिं सुखयति श्रुतिसुखः । कर्मण्यण् । 4) यति. सर्वत्र पादान्ते इति – पूर्वापरपादयोः समासेऽपि पादान्ते यतिः क्रियते । 5) श्लोकार्धे तु समासोऽपि न भवति ।

१ लघुक्षर० A. २ तद dropped in N. ३ विषमं वृत्तं AB ४ all the four words dropped in B ५ सा च तृतीयान्तैर्गाद्यवच्छिन्नैरक्षरै. क्रियते F ६ तेन dropped in CENP. ७ गकारादिपदान्ते च P ८ शसाकार्ध० B ९ नमस्यानि B

अत्र[१] ईश्वरमित्यस्य पूर्वमकारेण सन्धिर्न कर्तव्यः। स्पष्टविभक्तिकत्वं च अत्रैव। न त्वेवं यथा –

सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी –।
पिञ्जरीकृतपादा[२]ब्जद्वन्द्वं वन्दामहे शिवम् ॥ १६.४ ॥

[1]'गादिच्छिन्नपदान्ते च [2]'लुप्तालुप्तविभक्तिके' यथा –

[3]उत्तुङ्गस्तनकलशद्वया नताङ्गी[३] लोलाक्षी विपुलनितम्बशालिनी च[४] ॥ १६.५ ॥
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु ॥ १६.६ ॥ इति।

'लुप्तालुप्तविभक्तिके' इति 'यतिः सर्वत्र पादान्ते' इत्यनेनापि संबध्यते।

यथा –

[4]न[५]मस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे।
त्रैलोक्यनगरारम्भमूलस्तम्भा[६]य शम्भवे ॥ १६.७ ॥ इति।

तथा –

वशीकृतजगत्कालं कण्ठेकालं नमाम्यहम् ॥ १६.८ ॥ इति।

क्वचित्तु पदमध्येऽपि गकारादौ यतिर्भवेत्।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥ २ ॥

यथा –

[5]पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशौ ॥ १६.९ ॥ इति।

तथा –

[6]कूजत्कोयष्टिकोलाहलमुखरभुवः प्रान्तकान्तारदेशाः ॥ १६.१० ॥ इति।

तथा –

[7]हासो हस्ताग्रसंवाहनमपि तुलिताद्रीन्द्रसारद्विषोऽस्य ॥ १६.११ ॥ इति।

वैरिञ्चा[७]नां तथोच्चारितचतुरऋचां चा[८]ननानां चतुर्णाम् ॥ १६.१२ ॥ इति।
खङ्गे[९] पानीयमाह्लादयति हि महिषं पक्षपाती पृषत्क[१०]ः ॥ १६.१३ ॥ इति।

1) गादिच्छिन्नेति – गादिसंख्यावच्छिन्नाक्षरं पदम्। मयूरव्यंसकेति समासः। 2) लुप्तालुप्तेति – लुप्तविभक्तिकत्वं तु एकार्थे इत्यनेन न तु अनतो लुगिति। 3) उत्तुङ्गस्तनेत्यत्र – 'बिम्बोष्ठी नरवरमुष्टिमेयमध्या सा नारी भवतु मनः प्रहर्षिणीति' उत्तरार्धं पिङ्गलपाठे। इदं प्रहर्षिणीछन्दो लुप्तविभक्तिकोदाहरणम्। 4) नमस्तुङ्गेति– अन्यस्मिन्नपि मूलस्तम्भे चमरः स्यात् इति हर्षाख्यायिकायाम्। 5) पर्याप्तं तप्तेत्यादि वृत्तं सूर्यशतके। 6) कूजत्कोयष्टीति वृत्तमिदं मेघकाव्ये। 7) हासो हस्ताग्रेति वृत्ते तुलिताद्रीन्द्रसारेति – तुलिताद्रिश्चासौ इन्द्रसारो वज्रं तस्य द्विट् महिषासुरः।

१ अत्रेकारेण पूर्वस्य मकारस्य सन्धिर्न० E २ पदाब्ज A ३ नताङ्गीति F ४ AB add बिम्बोष्ठी नरवरमुष्टिमेयमध्या। सा बाला भवतु मन प्रहर्षिणीति ॥ इति पिङ्गलपाठ। E also adds the same two lines, but reads 'र्षिणी ते and drops इति० पाठ। ५ तमस्तुङ्ग A ६ भा in स्तम्भाय dropped in A; the whole line dropped in F ७ वैरञ्चाना AE. ८ वाननानां ABCD ९ पङ्गे CN. १० वृषत्क A

'गकारादौ' इति किम्?, पदमध्यं[1] यतिः पादान्ते[2] मा भूत्।

यथा—

प्रणमत भववन्धक्लेशनाशाय नारा—
यणचरणसरोजद्वन्द्वमानन्दहेतुम्॥ १६.१४॥ इति।

पूर्वोत्तरभागयोरेकाक्षरत्वे तु पदमध्ये यतिर्दुष्यति।

यथा—

एतस्या गण्डतलममलं गाहते चन्द्रकक्षाम्॥ १६.१५॥ इति।

*

एतासां राजति सुमनसां दाम कण्ठावलम्बि[3]॥ १६.१६॥ इति।

*

सुरासुरशिरोनिघृष्टचरणारविन्दः शिवः॥ १६.१७॥ इति।

*

पूर्वान्तवत्स्वरः सन्धौ क्वचिदेव परादिवत्॥ ३॥ अ।

योऽयं पूर्वपरयोरेकादेशः स्वरः सन्धौ विधीयते स क्वचित्पूर्वस्य अन्तवद् भवति क्वचित्परस्य आदिवत्। उभयादेशत्वात्। यथा पित्रोः पुत्रः पितुश्च मातुश्च भवति। तत्र पूर्वान्तवद्भावो[4] यथा—

[1]स्यादस्थानोपगतयमुनासंगमेवाभिरामा[5]॥ १६.१८॥

*

[2]जम्भारातीभकुम्भोद्भवमिव दधतः[6]॥ १६.१९॥ इति।

तथा—

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये॥ १६.२०॥ इति।

परादिवद्भावो[7] यथा—

स्कन्धे विन्ध्याद्रिबुद्ध्या निकषति महिषस्याहितोऽसूनहार्षीत्॥ १६.२१॥ इति।

*

शूलं तूलं तु गाढं प्रहर हर हृषीकेशकेशोऽपि वक्र—
श्चक्रेणाकारि किं ते०॥ १६.२२॥ इति।

अत्र हि स्वरस्य परादिवद्भावे व्यञ्जनमपि तद्भक्तत्वात् तदादिवद्भवति।

'यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ।'

इति अन्तादिवद्भावविधावपि संबध्यते। तेन

अस्या वक्त्राब्जमवजितपूर्णेन्दुशोभं विभाति॥ १६.२३॥

इत्येवंविधा यतिर्न भवति।

1) स्यादस्थानोपगतेति वृत्तं मेघकाव्ये। 2) जम्भारातीभेति वृत्तं सूर्यशतके।

१ पदमध्ये यतिर्दुष्यति पादान्ते० A २ पदान्ते EF ३ कण्ठावलीति B ४ भावो dropped in E ५ सगमेनाभि० AEP ६ दधत सान्द्रसिन्दूररेणुमिति AB. ७ क्वचित्परस्यादिवत्। यथा F.

द्रष्टव्यो यतिचिन्तायां य[1]ाद्यादेशः परादिवत् ॥ ३ ब ।

यथा —

[1]अच्छिन्नप्रसराणि नाथ भवतः पातालकुक्षौ यशां —
स्यद्यापि क्ष[2]पयन्ति कोकिलकुलच्छायासपत्नं तमः ॥ १६.२४ ॥

*

विततघनतुषारक्षोदशुभ्रासु दूर्वा —
स्वविरलपद्मालां श्यामलामुल्लिखन्तः ॥ १६.२५ ॥ इति ।

*

नित्यं प्राक्पदसंबद्धाश्चादयः प्राक्पदान्तवत् ॥ ४ अ ।

चादिभ्यः पूर्वं यतिर्न कर्तव्येत्यर्थः ।

यथा —

स्वादु स्वच्छं च सलिलमिदं प्रीतये कस्य न स्यात् ॥ १६.२६ ॥ इति ।

'नित्यं प्राक्पदसंबद्धा' इति किम्?, [2]अन्येषां पूर्वान्तवद्भावो मा भूत् ।

यथा —

मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ १६.२७ ॥ इति ।

*

इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे ॥ १६.२८ ॥ इति ।

*

परेण नित्यसंबद्धाः प्रादयश्च परादिवत् ॥ ४ ब ।

प्रादिभ्यः परा यतिर्न भवतीत्यर्थः ।

दुःखं मे प्रक्षिपति हृदये दुःसहस्त्व[3]द्वियोगः ॥ १६.२९ ॥ इति ।

'परेण नित्यसंबद्धाः' इति किम्?, अन्येभ्यः प[4]रापि यतिर्यथा स्यात् ।

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ॥ १६.३० ॥

[3]अयं च चादीनां प्रादीनां च एकाक्षरत्वेन एकाक्षराणामेव पदान्तयतौ अन्तादिवद्भाव इष्यते न त्वनेकाक्षराणां पदमध्ययतौ । तत्र हि पदमध्येऽपि चामीकरादिष्विव यतेरभ्यनुज्ञातत्वात् । तत्र चादीनां यथा —

प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ॥ १६.३१ ॥ इति ।

प्रादीनां यथा —

दूरारूढप्र[5]मोदं हसितमिव परिस्प[6]ष्टमासां सखीभिः ॥ १६.३२ ॥ इति ।

1) अच्छिन्नप्रसराणीति — अस्य पूर्वार्धमिदम् — अत्यासन्ननिपन्न(ण्ण)पन्नगवधूगीतोत्सवप्रक्रमे पत्युर्भोगभृतां ददन्ति किमपि प्रीतिं मुहुः श्रोत्रयोः । 2) अन्येषां पूर्वान्तेति — अनित्यसंबद्धानाम् । 3) अयं च चादीनां इति — चादय. पदस्यान्ते प्रादय आदौ यतिभाजो भवन्तीति भावः ।

१ यद्या० A २ क्षिपयन्ति A ३ तद्वियोग AEP ४ परा यति FP ५ प्रमोहं A ६ स्पृष्टं E
२ छन्दो०

तदेतत्सर्वं श्रव्यपदेनैव गतार्थमिति न सूत्रितम् । अनिर्दिष्टयतिकेऽपि च छन्दसि श्रव्यैव यतिः करणीया । न पुनरेवं यथा –

[1]तेन शशिमुखि गतेन सखि किं प्रियेण कुरु मानमपि तस्मिन् ।
स तव वरतनु समदनः स्वयमेव समेति चरण[1]युगम् ॥ १६.३३ ॥ इति ।

तथा हि –

[2]अबह्वर्थापि मधुरा मनो हरति भारती ।
तमोनिचयसंकाशा मत्तनादेव कोकिला ॥ १६.३४ ॥ इति ।

त्र्यादिर्गादिः ॥ १७ ॥

त्रिचतु[2]रादिः संख्या क्रमेण गघङादिसंज्ञा ॥ १७ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ संज्ञाध्यायः प्रथमः समाप्तः ॥ १ ॥ ग्रंथाग्रं १२५, अ० १८ ।

1) तेन शशिमुखीति – इयं सप्तपञ्चाशन्मात्रारूपाऽऽर्या पुन. सर्वथापि यतिरहिता । 2) अबह्वर्थेति – वृत्तत्वं च पूर्वकथागतम् । इत्याचार्य० प्रथमोऽध्याय. संपूर्णः ॥

१ चर० dropped in A २ त्रिचतुरादिसख्या AP



# अथ द्वितीयोऽध्यायः ।

छन्दः ॥ १ ॥

आशास्त्रपरिसमाप्तेः छन्द इत्यधिकृतं वेदितव्यम् ॥ १ ॥

पादः ॥ २ ॥

पाद इत्यधिकार आशास्त्रपरिसमाप्तेः ॥ २ ॥

इदानीमेकाक्षराद्याः षड्विंशत्यक्षरावसानाश्छन्दोजातीराह–

**एकाक्षरोक्ता जातिः ॥ ३ ॥**

एकाक्षरपादा उक्ता नाम भेदसंग्रहात्मिका जातिः ॥ ३ ॥

**अत्युक्ता - मध्या - प्रतिष्ठा - सुप्रतिष्ठा - गायत्री - उष्णिग् - अनुष्टुब् - बृहती - पङ्क्ति - त्रिष्टुब् - जगती - अतिजगती - शक्वरी - अतिशक्वरी - अष्टि - अत्यष्टि - धृति - अतिधृतयः एकैकवृद्धाः ॥ ४ ॥**

उक्तात एकैकाक्षरवृद्धपादा अत्युक्तादयः । तत्र द्व्यक्षरा अत्युक्ता जातिः । त्र्यक्षरा मध्या । चतुरक्षरा प्रतिष्ठा । एवं यावदेकोनविंशत्यक्षरा[1] अतिधृतिः ॥ ४ ॥

**कृतिः प्रा[2]विसमभ्युदश्च ॥ ५ ॥**

प्र - आङ् - वि - सम् - अभि - उ[3]द् इत्येतेभ्यश्च परा कृतिरेकैकवृद्धाक्षरा । विंशत्यक्षरा कृतिः । एकविंशत्यक्षरा प्रकृतिः । द्वाविंशत्यक्षरा आकृतिः । त्रयोविंशत्यक्षरा विकृतिः । चतुर्विं[4]शत्यक्षरा संकृतिः । पञ्चविंशत्यक्षरा अभिकृतिः । षड्[5]विंशत्यक्षरा उत्कृतिः इ[6]ति ॥ ५ ॥

अथासामेव जातीनामुपयोगिनो भेदानाह–

**उक्तायां गः श्रीः ॥ ६ ॥**

उक्तायां जातौ गुरुरेकाक्षरः पादः स च श्रीनामा । यथा–

गी-,र्धीः । श्रीः, स्तात् ॥ ६.१ ॥

**अत्युक्तायां गौ स्त्री ॥ ७ ॥**

यथा –

भ्रातर्, दृष्टा । इष्टा, सा स्त्री ॥ ७.१ ॥

पद्ममित्येके ॥ ७.१ ॥

---

१ एकोनविं० BFP, एकान्नविं० C. २ प्राट्वि० च कृति NP ३ उत् ABP ४ चतुर्विं० to अभिकृति· dropped in A. ५ एवं पड्विं० A ६ इति dropped in A, इति यावत् E

**लौ मदः ॥ ८ ॥**

जय, जिन । जित-, मर्द[1] ॥ ८.१ ॥

**पुष्पमिति कश्चित् ॥ ८.१ ॥**

**ग्लौ दुःखम् ॥ ९ ॥**

यथा –

कस्य, नात्र । दुःख-, मस्ति ॥ ९.१ ॥

**ल्गौ सुखम् ॥ १० ॥**

यथा –

जिनः, स वः । क्रियात्, सुखम् ॥ १०.१ ॥ २।४ ॥

**मध्यायां मो नारी ॥ ११ ॥**

यथा –

निःसारे, संसारे । सारं किं, स्यान् नारी ॥ ११.१ ॥

**यः केशा ॥ १२ ॥**

यथा –

पुरंध्री, सुवेशा । इयं सा, सुकेशा ॥ १२.१ ॥

**धूरिति भरतः ॥ १२.१ ॥**

**रो मृगी ॥ १३ ॥**

यथा –

वल्लभा, गेहिनी । या मृगी-, लोचना ॥ १३.१ ॥

**तडिदिति भरतः ॥ १३.१ ॥**

**सो मदनः ॥ १४ ॥**

यथा –

विरहे, ऽभ्यधिकम् । मदनो, दहति ॥ १४.१ ॥

**रजनीति भरतः । केचित्तु भ्र[2]-भ्य-ज्र-स्ताम् एकैकोऽपि अब्धिः, शङ्खः, शुभ्रं, दुग्धं इत्याहुः ॥ १४.१ ॥ ३।४ ॥**

**प्रतिष्ठायां म्गौ कन्या ॥ १५ ॥**

**मगणो गुरुश्च । यथा –**

सर्वैर्देवैः, येहां चक्रे । सेयं मन्ये, धन्या कन्या ॥ १५.१ ॥

---

१ जितमद N २ भ्र AN.

भ्गौ[1] सुमुखी ॥ १६ ॥

भगणो गुरुश्च । यथा–

क्षीणतनुर्, मद्विरहे । याश्रुमुखी, सा[2] सुमुखी ॥ १६.१ ॥

ललितेति भरतः ॥ १६.१ ॥

ज्गौ[3] विलासिनी ॥ १७ ॥

जगणो गुरुश्च । यथा–

न लभ्यते, घनस्तनी । धनं विना, विलासिनी ॥ १७.१ ॥

जयेति भरतः ॥ १७.१ ॥

र्गौ समृद्धिः ॥ १८ ॥

रगणो गुरुश्च । यथा–

पुण्यपात्रे, शुद्धचित्तैः । या प्रदत्ता, सा समृद्धिः ॥ १८.१ ॥

पुण्यमिति[4] भरतः ॥ १८.१ ॥

न्गौ मृगवधूः ॥ १९ ॥

नगणो गुरुश्च । यथा–

तव पुरो, नयनयोः । किमिव सा, मृगवधूः ॥ १९.१ ॥

य्गौ व्रीडा ॥ २० ॥

यगणो गुरुश्च । यथा–

तथा तेन, कृतं भर्त्रा । यथा चित्ते, ऽभवद् व्रीडा ॥ २०.१ ॥

स्गौ सुमतिः ॥ २१ ॥

सगणो गुरुश्च । यथा–

भज धर्मं, वद सत्यम् । त्यज पापं, सुमतिः सन् ॥ २१.१ ॥

भ्रमरीति भरतः ॥ २१.१ ॥

त्गौ[5] सोमप्रिया ॥ २२ ॥

तगणो गुरुश्च । यथा–

विभ्राजते, खे रोहिणी । चारुद्युतिः, सोमप्रिया ॥ २२.१ ॥ ४।८ ॥

सुप्रतिष्ठायां रो गौ प्रीतिः ॥ २३ ॥

यथा–

यस्य नैवार्थाः, नैव कामिन्यः । नापि वैराग्यं, तस्य का प्रीतिः ॥ २३.१ ॥

---

१ भगौ N. २ सा सुखी । ललिलतेति भरत A. ३ जगौ A. ४ पुण्यं० to भरत dropped in B, पुण्यमिति FP ५ Sutra 22 with com. dropped in BFP.

**र्लगा विदग्धकः ॥ २४ ॥**

रगणो लघुगुरू[1] च । यथा–

यौवनेन वा, कार्मणेन वा । यो न दग्धको, ऽसौ विदग्धकः ॥ २४.१ ॥

वागुरेति भरतः ॥ २४.१ ॥

**भो गौ पङ्क्तिः ॥ २५ ॥**

यथा–

फाल्गुनमासे, फुल्लवनान्ते । पावकतुल्या, किंशुकपङ्क्तिः ॥ २५.१ ॥

अक्षरोपपदेत्यन्ये । कुन्तलतन्वीति भरतः ॥ २५.१ ॥

**भ्लगा रतिः ॥ २६ ॥**

भगणो लघुगुरू[1] च । यथा–

साधुचरणा-, म्भोजयुगले । हन्त विदुषो, राजति रतिः ॥ २६.१ ॥

**जो गौ सती ॥ २७ ॥**

यथा–

स्वभर्तृभक्ता, विशुद्धशीला[2] । निरीहचित्ता, सती सतीयम् ॥ २७.१ ॥

शिखेति भरतः ॥ २७.१ ॥

**त्लगा नन्दा ॥ २८ ॥**

तगणो लघुगुरू च । यथा–

चित्ते सरला, वेषे तरला । दाने पृथुला, नन्दा महिला ॥ २८.१ ॥

**य्लगा जया ॥ २९ ॥**

यगणो लघुगुरू च । यथा–

ममानीयत, मनः कान्तया । मुखेनोल्लस-, ज्जिताम्भोजया ॥ २९.१ ॥

**म्लगाः सावित्री ॥ ३० ॥**

मगणो लघुगुरू[3] च । यथा–

जैनेन्द्रं मुखं, दिश्याद्वः सुखम् । जिग्ये येन सा, सावित्री प्रभा ॥ ३०.१ ॥

**सो गौ घनपङ्क्तिः ॥ ३१ ॥**

यथा–

क्रियया हीनं, यदिह ज्ञानम् । रहिताम्भोभिर्-, घनपङ्क्तिः सा ॥ ३१.१ ॥

**न्लगा अभिमुखी ॥ ३२ ॥**

नगणो लघुगुरू[4] च । यथा–

शशिवदना, मृगनयना । अभिसरति, त्वदभिमुखी ॥ ३२.१ ॥

---

१ लघुर्गुरुश्च P. २ विसुद्धसीला B. ३ लगौ A ४ लगौ A.

मृगचपलेत्यन्यः। कमलमुखीति भरतः ॥ ३२.१ ॥ ५।१० ॥

**गायत्र्यां मौ सावित्री ॥ ३३ ॥**

यथा—

देवानां यः [1]स्वर्णैः, साक्षात्क्षोभं निन्ये।
स ब्रह्मा ब्रह्मा किं, यत्कान्ता सावित्री ॥ ३३.१ ॥

**म्रौ तटी ॥ ३४ ॥**

मगणरगणौ। यथा—

कामेभ्यो [2]निस्पृहं, यस्योच्चैः स्यान्मनः।
किं कुर्यात्तस्य सा, मन्दाकिन्यास्तटी ॥ ३४.१ ॥

**सौ रमणी ॥ ३५ ॥**

यथा—

[1)]रजनीरमण-, प्रतिभे वदने।
तिलकं शशकं, कुरुते रमणी ॥ ३५.१ ॥

नलिनीति भरतः ॥ ३५.१ ॥

**त्यौ तनुमध्या ॥ ३६ ॥**

तगणयगणौ। यथा—

लावण्यपयोधिः, सौभाग्यनिधानम्।
सा कस्य न हृद्या, बाला तनुमध्या ॥ ३६.१ ॥

**स्भौ गुरुमध्या ॥ ३७ ॥**

सगणभगणौ। यथा—

चपलाक्षेकर-, नयना सा किल।
रमणीकोविद, गुरुमध्या तव ॥ ३७.१ ॥

**यौ सोमराजी ॥ ३८ ॥**

यथा—

[2)]स वः पातु कुन्द-, त्विषा देहभासा।
समुद्द्योतितान्तो, जिनः सोमराजी ॥ ३८.१ ॥

---

अथ द्वितीयाध्याये पर्याया लिख्यन्ते—

1) रजनीरमणेत्यत्र शशकमिति—शशस्य तुल्यं शशकम्। तुल्ये कप्रत्यये संकुचितमिति भावः। 2) स वः पातु इत्यत्र सोमराजीति—चन्द्रप्रभः। सोमेन लाञ्छनेन राजते। कर्तुर्णिन्।

---

१ देव· किं स ब्रह्मा N  २ नि स्पृहं P.

**न्यौ शशिवदना ॥ ३९ ॥**

नगणयगणौ । यथा –

मनसिजलीला-, कुलगृहभूमिः ।
कुवलयनेत्रा, शशिवदनेयम् ॥ ३९.१ ॥

**मुकुलितेत्यन्यः । मकरशीर्षेति भरतः ॥ ३९.१ ॥**

**र्मौ मालिनी ॥ ४० ॥**

रगणमगणौ । यथा –

केतकीसंसृष्टैः, मालतीसंपृक्तैः ।
पङ्कजैरर्हन्तं, मालिनी सोपास्ते[1] ॥ ४०.१ ॥

**भ्यौ कामलतिका ॥ ४१ ॥**

भगणयगणौ । यथा –

भाति मृदुपाणि-, पल्लवमनोज्ञा ।
हासकुसुमश्रीः, कामलतिकेयम् ॥ ४१.१ ॥

**म्सौ मुकुलम् ॥ ४२ ॥**

मगण[2]सगणौ । यथा –

यातोऽस्तं शशभृन्, मार्तण्डोऽभ्युदयम् ।
व्याकोशं कमलं, नीलाब्जं मुकुलम् ॥ ४२.१ ॥

**वीथीति भरतः ॥ ४२.१ ॥**

**न्रौ शफरिका ॥ ४३ ॥**

नगणरगणौ । यथा –

कुवलयेक्षणे, रमयतो मनः ।
तव विलोचने, शफरिकाचले ॥ ४३.१ ॥

**गिरेति भरतः ॥ ४३.१ ॥**

**र्नौ कच्छपी ॥ ४४ ॥**

रगणनगणौ । यथा –

लक्ष्यते सरसि, चन्द्रमःसदृशि ।
लक्ष्मकान्तिरिह, कच्छपी पयसि ॥ ४४.१ ॥

**भ्रौ लघुमालिनी ॥ ४५ ॥**

---

१ सोमपास्ते F  २ मगणौ A.

भगणरगणौ । यथा –

त्वद्वदनाग्रतो, मण्डलमैन्दवम् ।
संप्रति लक्ष्यते, श्रीलघु[1] मालिनी ॥ ४५.१ ॥

**स्यौ विमला ॥ ४६ ॥**

सगणयगणौ । यथा –

निपतन्ति यस्मिन्, सरला दृशस्ते ।
तमुपैति लक्ष्मीर्, विमला च कीर्तिः ॥ ४६.१ ॥

**त्रौ जला ॥ ४७ ॥**

तगणरगणौ । यथा –

जातास्तव द्विपत्-, स्त्रीणां दृशो नृप ।
अश्रान्तमश्रुभिः[2], पर्यस्तकज्जलाः ॥ ४७.१ ॥

**म्यौ [3]सुनन्दा ॥ ४८ ॥**

मगणयगणौ । यथा –

श्रीमत्पार्श्वनाथ, त्वत्पादाब्जयुग्मे ।
भूयान्निर्विकल्पा, भक्तिर्मे सुनन्दा ॥ ४८.१ ॥

**भ्मौ विक्रान्ता[2] ॥ ४९ ॥**

भगणमगणौ । यथा –

नो भटसिंहास्ते, त्वद्रिपुपुर्यन्तः ।
वासरति सिंहाः, बिभ्रति विक्रान्ताः ॥ ४९.१ ॥

**स्मौ सूचीमुखी ॥ ५० ॥**

सगणमगणौ । यथा –

अधुना पक्ष्मपोर्, नवतीक्ष्णास्त्रत्वम् ।
इह जज्ञे सूची-, मुखया केतक्या ॥ ५०.१ ॥

**य्मौ शिखण्डिनी ॥ ५१ ॥**

यगणमगणौ । यथा –

हहा पान्थस्त्रीभिः, पिधीयन्ते कर्णाः ।
मुहुर्व्योतन्वाने, शिखण्डिन्यारावम् ॥ ५१.१ ॥ ६।१९ ॥

1) सुनन्दाच्छन्दसि सुनन्दा इति–सुष्ठु नन्दयतीति । लिहाद्यच् संज्ञाया अभावात् नन्द्यादिनो न भवति कृदन्तप्रथमपादे । 2) विक्रान्तायां सिंहा इति–हे राजन् सांप्रतं त्वद्रिपुपुरीमध्ये न ते भटसिंहाः किं तु शून्यत्वात् सिंहा एव विक्रान्ताः सांप्रतं दृश्यन्ते । शून्यानीति भाव. ।

१ श्रीर्लघु० N  २ अश्रुभि A
३ छन्दो०

**उष्णिहि मौ गो गान्धर्वी ॥ ५२ ॥**

यथा –

स श्रेयांसि श्रेयांसः, श्रीमान्देवः पुष्णातु ।
क्षोभायाभूद्यच्चित्ते, गान्धर्वी न क्रीडापि ॥ ५२.१ ॥

**र्जौ ग उष्णिक् ॥ ५३ ॥**

रगणजगणौ गुरुश्च । यथा –

[1]उष्णिहीव संसृतौ, स्याद्ध्रुवं रजो गुरु ।
नो भवेद्यदि क्षितौ, श्रीजिनेन्द्रशासनम् ॥ ५३.१ ॥

शिखेति भरतः ॥ ५३.१ ॥

**ज्सौ गः कुमारललिता ॥ ५४ ॥**

जगणसगणौ गुरुश्च । यथा –

[2]नरेन्द्रगणसेना-,वृतः प्रथितशक्तिः ।
दधासि नृपते त्वं, कुमारललितानि ॥ ५४.१ ॥

अत्र केचिद् द्वाभ्यां विरतिमिच्छन्ति ।

इदं वदनपद्मं, प्रिये तव विभाति ।
इह व्रजति मुग्धे, मनो भ्रमरतां मे ॥ ५४.२ ॥

**म्सौ गो मदलेखा ॥ ५५ ॥**

मगणसगणौ गुरुश्च । यथा –

यावत्केसरिनादो, नायाति श्रुतिमार्गम् ।
तावद्गन्धगजानां, गण्डे स्यान् मदलेखा ॥ ५५.१ ॥

**र्सौ ग उद्धता ॥ ५६**

रगणसगणौ गुरुश्च । यथा –

या बभूव सुदर्पा, वैरिणां नृप सेना ।
त्वत्प्रतापविलासे, सोद्धतापि गतश्रीः ॥ ५६.१ ॥

**त्सौ गो भ्रमरमाला ॥ ५७ ॥**

---

1) उष्णिहीव संसृताविति – यथा उष्णिहि छन्दसि रजो गुरु स्यात् । कोऽर्थः । रात् जः रजः गुरु अक्षर रगणो जगणो गुरुश्चेति लक्षणं यथा उष्णिहि छन्दसि भवति तथा संसारेऽपि रज. पापलक्षणं गुरु महत् स्यात् यदि जिनेन्द्रशासनं न स्यादिति भावः । 2) नरेन्द्र[गण]सेनावृत इति – नरेन्द्रगणानां राजसमूहानां सेना । पक्षे नरेन्द्रभूतानां गणानां प्रमथादीनाम् । प्रथिता शक्ति. सामर्थ्यं यस्य । पक्षे शक्तिः प्रहरणम् । कुमारः स्कन्द. ।

---

१ रजौ A  २ गुरु CEN  ३ गुरु यथा A

तगणसगणौ गुरुश्च । यथा–

कुन्दे विचकिले वा, मन्दारकुसुमे वा ।
प्रीत्या मधुरसाढ्ये, भ्रान्ता भ्रमरमाला ॥ ५७.१ ॥

**रौ गो हंसमाला ॥ ५८ ॥**

यथा[1]–

शैवलालीनिराशा, पङ्कजे बद्धवासा ।
किं बकोटावलीयं, हन्त सा हंसमाला ॥ ५८.१ ॥

**भौ गः कलिका ॥ ५९ ॥**

यथा[2]–

[1]स्पर्शनमात्रवशाद्, या मकरन्दमुचा ।
किं भ्रमर भ्रमता, सा[3] कलिता कलिका ॥ ५९.१ ॥

सोपानमित्यन्यः । भोगवती[4]ति भरतः ॥ ५९.१ ॥

**भसौ गो विधुवक्त्रा ॥ ६० ॥**

भगणसगणौ गुरुश्च । यथा–

अह्नि विरहतप्ता, रात्रिमभिलपन्ती ।
उद्यति विधुबिम्बे, म्लायति विधुवक्त्रा ॥ ६०.१ ॥

**मभौ गः सरलम्[5] ॥ ६१ ॥**

मगणभगणौ गुरुश्च । यथा–

पापाभ्यासात्कुटिलं, चेतो रौद्रं भजते ।
शास्त्राभ्यासव्यसनाद्, धर्म्यं ध्यानं सरलम् ॥ ६१.१ ॥

**भनौ गश्चित्रम् ॥ ६२ ॥**

भगणनगणौ गुरुश्च । यथा–

[2]कीर्तिरिह भवतः, कुन्दकुसुमसमा ।
रञ्जयति हृदयं, चित्रमिदमधिकम् ॥ ६२.१ ॥

**नौ गो हरिविलसितम् ॥ ६३ ॥**

यथा–

सपदि बलिनृपान्, समिति नियमयन् ।
प्रथयसि न विभो, न हरिविलसितम् ॥ ६३.१ ॥

---

1) स्पर्शनमात्रेत्यत्र मकरन्दमुचेति–मकरन्दं मुञ्चति इति मकरन्दमुचा । मूलविभुजेति कः ।
2) कीर्तिरिहेत्यत्र चित्रमिति–शुभ्रा सती हृदयं रक्तयतीति चित्रं पक्षे रागं प्रापयतीति भावः ।

---

१ रगणद्वयं गुरु च । यथा C  २ भगणद्वयं गुरुश्च । यथा P.  ३ सा dropped in A.
४ भागवतीति A.  ५ सरलं dropped in A.

चपलेत्यन्ये । द्रुतगतिरिति[1] भरतः ॥ ६३.१ ॥

**भ्जौ गः शारदी ॥ ६४ ॥**

भगणजगणौ[2] गुरुश्च । यथा–

उज्ज्वलनिशाकरा, चारुकमलाकरा ।
कस्य न मनोरमा, श्रीर्भवति शारदी ॥ ६४.१ ॥

**त्नगा मधुकरिका ॥ ६५ ॥**

तगणनगणौ गुरुश्च यथा–

पान्थ श्रय दयितां, प्राप्तो मधुसमयः ॥
गायन्त्यनुविटपं, प्रीता मधुकरिकाः[3] ॥ ६५.१ ॥

वज्रमित्यन्यः ॥ ६५.१ ॥

**स्जौ गो विमला ॥ ६६ ॥**

सगणजगणौ गुरुश्च । यथा–

समशत्रुमित्रता-, मवलम्ब्य निर्ममः[4] ।
भज वीतरागतां, विमलात्मको भव ॥ ६६.१ ॥

**ज्रौ गः सुभद्रा ॥ ६७ ॥**

जगणरगणौ गुरुश्च । यथा–

कुमारपाल देव, त्वदीयविक्रमेण ।
महौजसः[5] सुभद्रा-, पतेः स्मृतं न केन ॥ ६७.१ ॥

**न्यौ गः कुमुद्वती ॥ ६८ ॥**

नगणयगणौ गुरुश्च । यथा–

पतिविरहे यान्य-, मुखमपि नापश्यत् ।
कलयति सा श्लाघाम्, इह कुमुदिन्येका ॥ ६८.१ ॥

**य्सौ गो मुदिता ॥ ६९ ॥**

यगणसगणौ गुरुश्च । यथा–

लतानां कलिकाभिः, प्ररोहत्पुलकेव ।
वसन्तागमनेऽस्मिन्, वनश्रीर्मुदितेयम् ॥ ६९.१ ॥

**न्रौ गो मनोज्ञा ॥ ७० ॥**

नगणरगणौ गुरुश्च । यथा–

भुवनजैत्रमन्त्रं, रतिपतेरधीते ।
पिकगिरा मधुश्रीर्, अतिमनोज्ञयासौ ॥ ७०-१ ॥

---

१ द्रुतगारिति A. २ भरेगणजगणौ A ३ मधुकरिका A. ४ निर्मम N ५ महोज. सु० A

**स्त्रौ गो दीप्ता ॥ ७१ ॥**

सगणरगणौ गुरुश्च । यथा—

नवसिन्दूरभासो, मुकुलाः किंशुकेऽमी ।
ध्रुवमाग्नेयबाणाः, रतिनाथस्य दीप्ताः ॥ ७१.१ ॥ ७।२० ॥

**अनुष्टुभि त्रौ गौ विभा ॥ ७२ ॥**

तरगगाः । यथा—

देव त्वयि क्षमानाथे, क्षीणान्यभूभुजां कीर्तिः ।
पूर्वाद्रि[1]भाजि मार्तण्डे, का वा विभास्तु ताराणाम् ॥ ७२.१ ॥

**र्यौ ल्गावनुष्टुप् ॥ ७३ ॥**

रयलगाः । यथा—

कुर्वते विवेकारतिं, ये विरागहेतुष्वपि ।
ते पठन्ति चित्रं मुहुर्, बालिशा अनुष्टुब्धिया ॥ ७३.१ ॥

**[2]गीर्गीर्विद्युन्माला ॥ ७४ ॥**

समानेनैकादिरिति वचनाद् [3]गीरिति गचतुष्टयं गृह्यते । मौ गाविति तु न कृतं चतुर्भिश्चतुर्भिर्यथा विरतिर्ज्ञायेतेति । यथा—

सत्यं रम्याभोगा भोगाः, कान्ताः कान्ताः प्राज्यं राज्यम् ।
किं कुर्वन्तु प्राज्ञा यस्माद्, आयुर्विद्युन्मालालोलम् ॥ ७४.१ ॥

**भौ गौ चित्रपदा ॥ ७५ ॥**

यथा—

[1]व्योमनि सागरतीरे, पर्वतशृङ्गनिकुञ्जे ।
भ्राम्यति भीमकुलेन्दो, चित्रपदा तव कीर्तिः ॥ ७५.१ ॥

**न्रौ ल्गौ सुमालती ॥ ७६ ॥**

नरलगाः । यथा—

परिहृतोत्पलावली, कनककेतकी तथा ।
भ्रमर मालतीकृते, तदिति सा सुमालती ॥ ७६.१ ॥

**भ्तौ ल्गौ माणवकं घैः ॥ ७७ ॥**

भतलगाः । घैरिति त्र्यादिर्गादिरिति वचनाच्चतुर्भिरिति लभ्यते । यतिरिति चोपतिष्ठते । तेन चतुर्भिर्यतिरिति सिद्धम् ॥ यथा—

[2]शीतरुजान्योऽन्यरणद्, दन्तरवैर्विस्वरकम् ।
साम पठन् माणवको, ऽशासि मुहुर्यत्र शुकैः ॥ ७७.१ ॥

---

1) व्योमनि सागरेत्यत्र चित्रपदेति—चित्राणि पदानि, स्यादित्याद्यन्तरूपाणि स्थानानि वा यस्याः सा । पक्षे या भ्रमति सापि चित्राणि पदानि पदन्यासा यस्या एवंविधा स्यात् । 2 शीतरुजान्योन्येत्यत्र विस्वरकं अव्यक्तम् । शुकैरिति—एतावता यत्र पुरे शुका अपि विद्यापारगाः सन्ति तदा मनुजानां का कथा ।

---

१ पूर्वादिभाजि N. २ गीगी वि० A गीर्गी वि० C ३ गीति ABCP.

**त्रौ ल्गौ नाराचम् ॥ ७८ ॥**

तरलगाः । यथा –

[1]दुर्वारवैरिदन्तिनां, कुम्भस्थलेषु निश्चलः ।
त्वत्कीर्तिकेतुवंशवन्, नाराच एष शोभते ॥ ७८.१ ॥

**म्नौ गौ हंसरुतम् ॥ ७९ ॥**

मनगगाः । यथा –

[2]मञ्जीरक्वणितयोग्यां, कुर्वाणं श्रवणभोग्याम् ।
आदत्ते बत मनांसि, यूनां हंसरुतमेतत् ॥ ७९.१ ॥

**न्जौ ल्गौ ललितगतिः ॥ ८० ॥**

नजलगाः । यथा –

मणिरसनास्वनिताद्, अनुसृतहंसकुलैः ।
श्रितमिव शिष्यपदं, ललितगतौ सुतनोः ॥ ८०.१ ॥

**र्जौ गौ सिंहलेखा ॥ ८१ ॥**

रजगगाः । यथा –

[3]पर्णपातमात्रभीत, कृष्णसारपोत[१] तात ।
किं विलम्बसे महो[२]रमन्, त्वं जहीहि सिंहलेखाम् ॥ ८१.१ ॥

**ज्रौ ल्गौ प्रमाणी ॥ ८२ ॥**

जरलगाः । यथा –

[4]तव प्रमातुमिच्छ[३]तां, यशश्चुलुक्यभूपते ।
समग्रमानजित्वरी, जगत्त्रयी प्रमाण्यभूत् ॥ ८२.१ ॥

**मत्तचेष्टि[४]तमिति भरतः ॥ ८२.१ ॥**

**[5]र्जौ ग्लौ समानी ॥ ८३ ॥**

रजगलाः । यथा –

रागरोषमोहदोष-, दारुदाव[५]पावकस्य ।
तीर्थिकैः समं जिनस्य, नो [6]समानिका कलापि ॥ ८३.१ ॥

1) दुर्वारवैरीत्यत्र केतुश्चिह्ने (श्चिह्ने) पताकायाम् । 2) मञ्जीरक्वणितेत्यत्र मञ्जीरयोर्नूपुरयोर्यत् क्वणितं रणितं तस्य योग्या अभ्यासस्ताम् (योग्यां श्रमम् B) । 3) पर्णपातेत्यत्र पोत तातेति – पुत्रवत्सले तात· । हे कृष्णसारपोत तात । सिंहलेखामिति – सिंहस्य मर्यादाम् । 4) तव प्रमातुमित्यत्र प्रमाण्य-भूदिति – प्रमाण्यभूदित्यखण्डं क्रियापदम् । 5) जौं ग्लौ समानीत्यत्र 'केवल-मामक-भागधेय-पापापरसमानार्ये'ति संज्ञायां ङीः । 6) समानिकेति – समान्येव स्वार्थिके के समानिका ।

१ पोततात N. २ महास्त्व O ३ इच्छता N ४ मत्तवेष्टित० N. ५ दारुदाहपा० F,

**न्सौ गौ गुणलयनी ॥ ८४ ॥**

**नसगगाः । यथा –**

गुरुगुणचिता स्फीता, परिहृतरजःपुञ्जा ।
मुनितनुरियं साध्वी, न [1]गुणलयनी साधो ॥ ८४.१ ॥

**सौ ल्गौ मही ॥ ८५ ॥**

**ससलगाः । यथा –**

भृशमात्मवतः कलाः, ननु यस्य परिस्फुटाः ।
स हि काञ्चनपुष्पितां, सकलां चिनुते महीम् ॥ ८५.१ ॥

**नौ गौ रतिमाला ॥ ८६ ॥**

**ननगगाः । यथा –**

ततिरिह करिणां ते, क्षरद्गुरुमदवारिः ।
नृपवर जलदानाम्, इव विचरति माला ॥ ८६.१ ॥

**अन्यद्वितानम् ॥ ८७ ॥**

[2]उक्ताद्वक्ष्यमाणाच्चान्यत् समवृत्तं छन्दो वितानसंज्ञम् ।

यथा –

त्वयि तेजोभिरशेषं, जगदुद्द्योतयतीदम् ।
उदयत्येष इदानीं, सविता नाथ मुधैव ॥ ८७.१ ॥

तथा –

[3]कङ्कालमालभारिणं, कन्दर्पदर्पदारिणम् ।
संसारबन्धमोचनं, वन्दामहे त्रिलोचनम् ॥ ८७.२ ॥

तथा –

तस्याः स्मरामि सुन्दरं, चन्द्रोपमानमाननम् ।
कन्दर्पचापभङ्गुर-, भ्रूविभ्रमोपशोभितम् ॥ ८७.३ ॥

तथा –

तृष्णां त्यज धर्मं भज, पापे हृदयं मा कुरु ।
इष्टा यदि लक्ष्मीस्तव, शिष्टाननिशं संश्रय ॥ ८७ ४ ॥ इत्यादि ॥ ८।१६ ॥

---

1) गुणलयनीति – जवनिका । 2) उक्ताद्वक्ष्यमाणादिति – अस्यां अष्टाक्षरायां जातौ तृतीयाध्याये प्रतिपादितात् वक्त्रादिप्रकरणाच्चान्यत् । 3) कङ्कालमालभारिणमित्यत्र शरीरास्थिपञ्जरं कङ्कालं तस्य माला तां बिभर्ति इत्येवंशीलम् । 'मालेषीकेष्टकस्यान्तेपि भारितूलचिते' इति सूत्रेण मालाया ह्रस्व. । इदं नाराचनाम्नि पूर्वोक्ते छन्दसि अन्तर्भवति । पर यदा ह्रादिसयोगः समाश्रीयते तदा वितानमध्ये पठ्यते । अथवा पर्यायान्तरं वृत्तद्वयस्य परोक्तरूपकस्य इमे वृत्ते । तेषां मते नाराचं छन्दो नास्ति । तेन वितानेन तु भवतो नाराचमस्ति । यतो नाराचगणा अत्रापि सन्ति ततो वितानलक्षणाभावात् कथं वितानम् । अत्राह – गणभेदापेक्षया इमे विताने उक्ते । अनयोः त्रौ ल्गौ नाराचमिति नाराचत्वेऽह्रादिसंयोगे इति भणनात् । कन्दर्पेत्यादौ गुरुत्वाभावेन वितानत्वम् ।

---

१ दर्पहारिणं A  २ तथा Dropped in A.

**बृहत्यां भो सौ वक्त्रं ङैः ॥ ८८ ॥**

ङैरिति पञ्चभिर्यतिः । यथा –

विभ्रमसारभ्रूविक्षेपं, मन्मथलीलालीलागारम् ।
कस्य न चित्ते कुर्यात् क्षोभं, वालकुरङ्गाक्षीणां **वक्त्रम्** ॥ ८८.१ ॥

**नो रौ बृहतिका ॥ ८९ ॥**

यथा –

[1]विशदवृत्तलब्धात्मनः, शुचियशोयतेर्भूपते ।
तव कमण्डलुर्वारिधिर्, **बृहतिका** च मन्दाकिनी ॥ ८९.१ ॥

**र्नसा हलमुखी ॥ ९० ॥**

रनसाः । यथा –

दन्तुरं कपिशनयनं, यन्मुखं विकटचिबुकम् ।
तां स्त्रियं सुखमभिलषन्, दूरतस्त्यज **हलमुखीम्** ॥ ९०.१ ॥

**नौ मो भुजगशिशुसृता ॥ ९१ ॥**

यथा –

[2]नयनविलसितैरस्याः, कथमिव वत मूर्छा ते ।
**भुजगशिशुसृ**[१]**ता** यद्वा, ऽत्रगतमुरगकन्येयम् ॥ ९१.१ ॥

वक्रगतेरित्यर्थः । शिशुपदस्य साभिप्रायत्वात् । यथा[२] च[३] –

अभ्यस्यता तु त[३]रुणीगतिवक्रिमाण-
मुन्मूलि[४]ताः फणिशिशो भवतापराधाः ॥ ९१.२ ॥

इति । मधुकरिकेति भरतः ॥ ९१.२ ॥

**भजसा उदयम् ॥ ९२ ॥**

यथा –

[4]सुभ्रु भवदीयवदने, सत्यपि नितान्तरुचिरे ।
निस्त्रप इवैष सहसा, वाञ्छति शशाङ्क **उदयम्** ॥ ९२.१ ॥

**भौ र उत्सुकम् ॥ ९३ ॥**

यथा –

आपदि दीनमनोरथं, सपदि हर्षपरायणम् ।
मा कुरु मानस चापलं, संस्मर तत्त्वै[५]मनु**त्सुकम्** ॥ ९३.१ ॥

1) विशदवृत्तेत्यत्र शुचियशोयतेरिति – पवित्र उज्वलश्च यश एव यतिस्तस्य । बृहतिकेति प्रच्छादनपटी । 2) नयनविलसितैरित्यादि – वतेति कोमलामन्त्रणे । भुजगशिशुसृतेति – भुजगशिशोरिव सृतं गमनं यस्याः । 3) त(य)था चेति – शिशुपदस्य साभिप्रायत्वे संवादकमाह – अभ्यस्यतेति । तरुणीगतिकौटिल्यं कुर्वता त्वया संमुख मम हर्षो जायते इत्यपराधोन्मूलनम् । 4) सुभ्रु भवदीयेत्यत्र सुभ्रु इति – भ्रूसमानार्थो भ्रुशब्दोऽप्यस्ति तत ऊन् । अन्यथा उकारान्तत्वाभावाद् 'उतो प्राणी'त्यादिना सूत्रेणोङ् न स्यात् । निस्त्रप इति निर्लज्जः ।

१ सृताद्वा P. २ तथा च com ३ तरणी N ४ उन्मूलितात् A ५ तत्वम० N

**रनरा भद्रिका ॥ ९४ ॥**

रनराः । यथा—

[1]पुण्यपापजलवर्धिते, सौख्यदुःखलतिके स्वयम् ।
तज्जहीहि [1]परिविप्लवं, साधुता हृदय भद्रिका ॥ ९४.१ ॥

**नौ र उपच्युतम् ॥ ९५ ॥**

यथा—

[2]नृप कुरु करुणां जने, परिहर खलसंगमम् ।
विमृश सुरविमानतस्, त्रिदशपतिमुपच्युतम् ॥ ९५.१ ॥

**स्जसा अक्षि ॥ ९६ ॥**

सजसाः । यथा—

[3]विषमास्त्र एष इति यत्, कवयो वदन्ति तदसत् ।
प्रहरत्ययं हि मदनः, सुतनो तवाक्षिललितैः ॥ ९६.१ ॥

**मः सौ कनकम् ॥ ९७ ॥**

यथा—

[4]मिथ्यादर्शनदिग्धमनाः, पापं धर्मधिया मनुते ।
गाढोन्मत्तरसान्धदृशां, मृत्पिण्डोऽप्य[2]थवा कनकम् ॥ ९७.१ ॥

**सौ मस्तारम् ॥ ९८ ॥**

यथा—

[5]सकलासुमतां रक्षायै, यतितव्यमितीय[3]त् तत्त्वम् ।
रसवादविदां तत्सारं, यदि वार्तिक ! र[4]क्तं तारम् ॥ ९८.१ ॥

**सिः सौम्या ॥ ९९ ॥**

सिरिति सगणत्रयम् । यथा—

निजजीवितमात्ररसात्, कृतनिष्कृपकर्मतते ।
मृगयामधुमद्यरते, कुरु धर्ममसौम्यमते ॥ ९९.१ ॥

---

1) पुण्यपापेत्यत्र जलवर्धिते इति—अन्यापि लता जलसिक्ता वृद्धिं याति तथेयम् । तज्जहीहीति—तस्मात् त्वं त्यजेति योगः । परिविप्लवमिति—चित्तोद्वेगम् । साधुता सज्जनतेति भावः 2) नृप कुरु करुणामित्यत्र त्रिदशपतिमुपच्युतमिति—इन्द्रोऽपि स्वर्गाद् भ्रष्ट इति हेतोः का गतिः तवेति भावः । 3) विषमास्त्र एष इतीति—विषमाणि पञ्चसंख्याकानि, पक्षे दुःसहानि अस्त्राणि यस्य सः । अक्षिललितैरिति—लोचनचेष्टितैः कटाक्षबाणैरिति भावः । 4) मिथ्येत्यत्र गाढोन्मत्तरसान्धदृशामिति—गाढमुन्मत्तरसेन धत्तूरकरसेनान्धा विलुप्ता दृग् येषां तेषाम् । 5) सकलासुमेत्यत्र वार्तिकेति—वार्ता प्रयोजनं अस्य, इकण्, तस्य संबोधनं हे वार्तिक रसवादिन् । रसवादविदां इयत् सारं रक्तं ताम्रं तारं रूप्यं भवति ।

---

१ परविप्लवं (परकृतं सुखं दुःखं च Tippana) B परवि॰ corrected to परिवि P.
२ मृत्पिण्डोऽथवा A. ३ इति यत् A. ४ तार रक्तं A
४ छन्दो॰

**तभ्या रुचिरा ॥ १०० ॥**

तभयाः । यथा –

नाश्रायि यैश्चरणपद्म-, द्वन्द्वं तव क्षणमपीश ।
तैराश्रितं वनमजस्र-, दावज्वलत्तरु चिराय ॥ १००.१ ॥

**नस्या विशाला ॥ १०१ ॥**

नसयाः । यथा –

नृपतिलक मातु कीर्तिस्, तव भुवि कथं तु यस्याः ।
भवति सकला त्रिलोकी, यदियमपि नो विशाला ॥ १०१.१ ॥

**तन्मा मकरलता ॥ १०२ ॥**

तनमाः । यथा –

[1]भैमे भवदरिनारीणाम्, आर्द्राञ्जननयनास्रौघैः ।
आसूत्रि कुचतटे[1] भ्रष्टैर्, नव्या मकरलताभङ्गिः ॥ १०२.१ ॥

**नज्याः शशिलेखा ॥ १०३ ॥**

नजयाः । यथा –

कलयति पाण्डुरभावं, तव विरहे सुतनुः सा ।
सुभग यथा दिवसादौ, गलितरुचिः शशिलेखा ॥ १०३.१ ॥

**नौ सो लघुमणिगुणनिकरः ॥ १०४ ॥**

यथा –

अपरमणिगुणगणः, सरिदधिप तव कियान् ।
हरिहृदि विलसति यल्, लघुमणिगुणनिकरः ॥ १०४.१ ॥

**मभ्साः[2] सिंहाक्रान्ता ॥ १०५ ॥**

मभसाः । यथा –

त्वद्दृष्टेयं भवति विभो, दीना प्रत्यर्थिनृपचमूः ।
राहुग्रस्तेव शशिकला, सिंहाक्रान्तेव मृगवधूः ॥ १०५.१ ॥

**रज्राः कामिनी ॥ १०६ ॥**

रजराः । यथा –

[2]यत्प्रसादतो जयत्ययं, पुष्पसायको जगत्त्रयम् ।
उल्लसन्नवीनविभ्रमास्, ताः स्तवीमि हन्त कामिनीः ॥ १०६.१ ॥

तरंगवतीत्यन्यः ॥ १०६.१ ॥ ९।१९ ॥

1) भैमे भवदरीत्यत्र भीमस्य वृद्धमपत्यं भैमिर्जयसिंहदेवस्तस्य संबोधनम् । आर्द्राञ्जनानि च तानि नयनानि तेषामस्राणि । आसूत्रीति – निर्मिता । मकरलताभङ्गिरिति – मत्स्याकृतिपत्रलतारचना । 2) यत्प्रसादत इत्यत्र पुष्पसायक इति – अनङ्गः । विभ्रमा विलासाः ।

१ कुचतारभ्रष्टै. B २ मभसा P.

**पङ्क्तौ मभसगा मत्ता घैः ॥ १०७ ॥**

**मभसगाः । घैरिति चतुर्भिर्यतिः**[1] । यथा —

[1]आताम्रत्वं वपुषि दधानो, घूर्णन् पृथ्वीतलपतनेच्छुः ।
द्राग्वारुण्यां निहितकरोऽयं, मत्तावस्थां[2] प्रथयति भानुः ॥ १०७.१ ॥

इयं च यद्यपि [2]वानवासिकायामन्तर्भवति तथापि विशेषसंज्ञार्थमुक्ता । एवमन्यत्रापि[3] ॥ १०७.१ ॥

**रयज्गाः पङ्क्तिका ॥ १०८ ॥**

**रयजगाः** । यथा —

[4]भ्रूविलासदूरीकृतोल्लसत्-, कामकार्मुकां कान्तिशालिनीम् ।
मञ्जुगुञ्जिमञ्जीरराजितां, पश्य कामिनीपङ्क्तिकामिमाम् ॥ १०८.१

**मस्जगाः शुद्धविराट्**[3] **॥ १०९ ॥**

[5]सम्यग्ज्ञानचरित्रपात्रतां, यो दध्रे भुवनैकबान्धवः ।
त्रैलोक्यस्पृहणीयतां गतः, सत्यं शुद्धविराडयं मुनिः ॥ १०९.१ ॥

**म्न्यगाः**[4] **पणवो ङैः ॥ ११० ॥**

**मनया गुरुश्च । ङैरिति पञ्चभिर्यतिः** । यथा —

[6]स्याद्वादामृत[5]मुदिते चित्ते, शास्त्रोक्तिः कटुरितरा भाति ।
एवं संसदि चतुरङ्गायां, जल्पामो जयपणवं दत्वा ॥ ११०.१ ॥

**कुवलयमालेति भरतः । केचित्तु यगणस्थाने सगणं मन्यन्ते ॥ ११०.१ ॥**

**रज्रगा मयूरसारिणी ॥ १११ ॥**

**रजरा गुरुश्च** । यथा —

[7]या घनान्धकारडम्बरेषु, प्रीतमानसा[6] विसर्पतीह ।
क्षोभयन्त्यपि क्षणाद्भुजंगान्, संत्यजेन् [8]**मयूरसारिणीं** ताम् ॥ १११.१ ॥

---

1) आताम्रत्वमित्यत्र वारुण्यामिति — वरुणो देवता अस्याः सा वारुणी पश्चिमा, वरुणात्समुद्रादागता वारुणी सुरा च तस्याम् । निहितकर इति — कराः किरणा हस्ताश्च । 2) वानवासिकायामन्तर्भवतीति — द्वादशश्च वानवासिका । पादचतुष्टये द्वादशे नवमे च लघौ वानवासिकेति भावः । 3) एवमन्यत्रापीति — यत्र पदेन सदृशरूपं पदं समायाति तत्र विशेषसंज्ञायै न दूषणाय । 4) भ्रूविलासेत्यत्र मञ्जुगुञ्जीति — मञ्जु मनोहरं यथा स्यादेवं गुञ्जन्ति ध्वनन्तीत्येवंशीलानि मञ्जीराणि नूपुराणि तैः राजितां शोभिताम् । 5) सम्यग्ज्ञानेत्यत्र शुद्धविराडिति — शुद्धः सन् विराजते । क्विप् । 6) स्याद्वादेत्यत्र चतुरङ्गायामिति — चत्वारि वादि-प्रतिवादि-सभ्य-सभापतिरूपाणि अङ्गानि यस्याः । जयपणवमिति — जयपटहम् । 7) या घनान्धकारेत्यत्र घनानि निचितानि अन्धकारडम्बराणि, पक्षे मेघान्धकारडम्बराणि तेषु । क्षोभयन्त्यपीति — अपिशब्दो भुजंगानित्यत्र योज्यः । भुजंगानिति — गणिकापतीन्, पक्षे सर्पान् । 8) मयूरसारिणीमिति — मयूरवत्सरति गच्छतीत्येवंशीला । कर्तृर्णिन् । तामिति — स्त्रियमिति भावः । ( मयूरसारिणी अभिसारिकाम् Tippana in P. )

---

१ यति dropped in A. २ मत्वावस्था B ३ DP add मसजगा । यथा ४ म्नयगा. EFGH. ५ स्याद्वाम्रृदात A. ६ प्रीतिमानसा B.

**नजगास्त्वरितगतिः ॥ ११२ ॥**

नजना गुरुश्च । यथा –

दिनकरपीतशुचिरुचिश्, चरमगिरेः शिखरतटीम् ।
अनुसरति त्रपित इव, **त्वरितगतिः** सितकिरणः ॥ ११२.१ ॥

**भमसगा रुक्मवती ॥ ११३ ॥**

भससा गुरुश्च । यथा –

ये विजितात्मानो नयनिष्ठाः, जाग्रति लोकं रक्षितुकामाः ।
स्यान्नियतं तेषां वसुधेयं, **रुक्मवती** मृन्मय्यपरेषाम् ॥ ११३.१ ॥

**चम्पकमाला सुभावेति[1] चान्ये । पुष्पसमृद्धिरिति भरतः ॥ ११३.१ ॥**

**भिगौ चित्रगतिः ॥ ११४ ॥**

भत्रयं गुरुश्च । यथा –

1)यस्य न कापि कला न मतिर्, न व्यवसायलवोऽपि तथा ।
सोऽपि कथंचन जीवति चेद्, दैवमिदं खलु **चित्रगति**[2] ॥ ११४.१ ॥

**निगौ निलया ॥ ११५ ॥**

नत्रयं गुरुश्च । यथा –

2)अपि सरिदधिपतिसुता, हरिमपि परिहरति यत् ।
अधमपुरुषकृतरति, धिगहह कमल**निलयाम्** ॥ ११५.१ ॥

**जिगावुषिता ॥ ११६ ॥**

जत्रयं गुरुश्च । यथा –

3)स किं वद नीचसमाश्रयो, न किं कथय स्थितिरुन्नते ।
न चापलमुज्झसि लक्ष्मि किं, न चेद् **उषिता**[3] जलधामनि ॥ ११६.१ ॥

**रः सौ गो मणिरङ्गः ॥ ११७ ॥**

यथा –

धीमतां हि गुणो विशदश्रीर्, जायते गुणिसंगमवाप्य ।
शोभते नितरां न किमङ्गे, कुङ्कुमारुणिते **मणिरङ्गः**[4] ॥ ११७.१ ॥

---

1) यस्य न कापीत्यत्र चित्रगतीति – चित्रा अद्भुता गतिः प्रकारो यस्य तत् । 2) अपि सरिदधिपतीत्यत्र कमलनिलयामिति – लक्ष्मीम् । 3) स किं वदेत्यत्र उन्नत इति – उन्नते पुंसि । उषिता जलधामनीति – चतुर्थः पादः काक्वा पठनीयः । नूनमुषिता जलधामनि । एभिः कारणैः । डलयोरैक्यम् । जडेति – जलस्यापि नीचसमाश्रयो भवति, उन्नते प्रदेशे स्थितिर्न भवति ।

---

१ शुभावा D २ चित्रगति ABCD ३ उषिला A. ४ मणिराग. BN.

**भ्नौ म्गौ बन्धूकम् ॥ ११८ ॥**

भनमा गुरुश्च । यथा–

[1]एतदभिनवभास्वद्बिम्बं, शोणरुचिरुचिरं प्राग्वध्वाः ।
शेखरितनवबन्धूकश्री-, बन्धुपदमधुना संधत्ते ॥ ११८.१ ॥

**न्रज्गा मनोरमा ॥ ११९ ॥**

नरजा गुरुश्च । यथा–

निखिलदीनदुःखदारिणी, सकलबन्धुसंविभागकृत् ।
गुणिजनामृ[1]तार्णवोपमा, भवति सा रमा मनोरमा ॥ ११९.१ ॥

**तो जौ ग उपस्थिता ॥ १२० ॥**

यथा–

[2]एषा भवतः समराङ्गणे, राजन् जयसिद्धिरुपस्थिता ।
कीर्तिः कुपितेव भवत्प्रिया, सद्योऽभिससार दिगन्तरम् ॥ १२०.१ ॥

अत्र द्वाभ्यां यतिरित्येके ॥ १२०.१ ॥

**र्मस्गाः कलिका ॥ १२१ ॥**

रमसा गुरुश्च । यथा–

कुन्दयष्टि हृष्टः परिचुम्बन्, किं न रे रोलम्ब त्रपसे त्वम् ।
तत्तथा येन प्रागनुरागात्, क्रीडितं माल[2]त्याः कलिकायाम् ॥ १२१.१ ॥

**भ्तगा मृगचपला ॥ १२२ ॥**

भत[3]ना गुरुश्च । यथा–

[3]साधु समाधावविचलताम्, आश्रय हे मानस सततम् ।
वाञ्छसि यद्यव्ययपदवी, मा कुरु वृत्ति मृगचपलाम् ॥ १२२.१ ॥

**मो नौ गः कुमुदिनी ॥ १२३ ॥**

यथा–

आसाद्य प्रियमिह शशिनं, निर्गच्छद्भ्रमरकुलमिपात् ।
मू[4]र्तं दुःखमिव विरहजं, तत्कालं वमति कुमुदिनी ॥ १२३.१ ॥

कुसुमसमुदितेत्यन्ये ॥ १२३.१ ॥

**मः सौ ग उद्धतम् ॥ १२४ ॥**

1) एतदभिनवेत्यत्र शेखरितनवबन्धूकेति–शेखरितानि शेखरीकृतानि च तानि नवबन्धूकानि च तेषां श्रीः शोभा तस्याः बन्धुपदं सादरत्वं साम्यमिति भावः। 2) एषा भवत इत्यत्र उपस्थितेति–प्रादुर्भूता। 3) साधु समाधावित्यत्र अविचलतेति–स्थिरत्वं। अव्ययपदवीमिति–मोक्षमार्गम्।

१ मृता dropped in D २ मालव्या N. ३ भतनगा यथा A ४ पूर्त A.

यथा—

[1]सर्पद्भिस्तव दिग्जययात्रा-, स्वेभिर्देव तुरंगमसैन्यैः ।
प्राज्यैरुद्धूतमध्वरजस्तां, वृद्धिं प्राप न वृन्दमरीणाम् ॥ १२४.१ ॥

**नज्यगा विपुलभुजा ॥ १२५ ॥**

नजया गुरुश्च । यथा—

[2]रिपुवनिताजननिःश्वासैर्, अविरतमुष्णतरैः क्रान्ता[1] ।
भजति चुलुक्य जयश्रीस्ते, विपुलभुजाविटपिच्छायाम् ॥ १२५.१ ॥

**स्जस्गा माला ॥ १२६ ॥**

सजसा गुरुश्च । यथा—

गगनाङ्गणे कुमुदषण्ड[2]-,श्रियमुद्वहन्ति निपतन्त्यः ।
भवदीक्षणोत्सवसतृष्णाः, नृप सुभ्रुवां नयनमालाः ॥ १२६.१ ॥

प्रमितेत्यन्ये ॥ १२६.१ ॥ १०।२० ॥

**त्रिष्टुभि[3] भौ रो गौ रोचकम् ॥ १२७ ॥**

यथा—

[3]कुम्भभुवो जयतीह माहात्म्यं, तद्वडवामुखतेजसश्चापि ।
यस्य जगत्प्रलय[4]प्रगल्भोर्मिर्, अश्नाति रोचकगोचरं सिन्धुः ॥ १२७.१ ॥

**रः सौ ल्गावच्युतम् ॥ १२८ ॥**

यथा—

त्वं दधासि विभो परमेष्ठिताम्, ईश्वरत्वमपि त्वयि राजति ।
अच्युतत्वमपि त्वमुपश्रितः, कोऽपरस्त्वदृते जिन देवता ॥ १२८.१ ॥

**तिर्गौ लयग्राहि ॥ १२९ ॥**

तगणत्रयं गुरुद्वयं च । यथा—

वीणानिनादानुवन्धेन[5] हृद्यं, काञ्चीरणत्कार[6]चित्रीयमाणम् ।
नव्याङ्गहारप्रकाराभिरामं, दत्ते प्रमोदं लयग्राहि लास्यम् ॥ १२९.१ ॥

---

1) सर्पद्भिस्तवेत्यत्र [ यात्रासु एभिः ] वृन्दमरीणामिति—वैरिणां वृन्दं वृद्धिं न प्राप किं तु त्वत्सैन्योत्थितं रजः वृद्धिं प्रापेति भावः । 2) रिपुवनितेत्यत्र क्रान्तेति—अन्यापि काचित् या स्त्री भवति सा तापेन पीडिता सती वृक्ष याति । 3) कुम्भभवो जयतीत्यत्र घटयोनेर्वडवानलस्य च रोचकगोचरं बुभुक्षाविषयं सिन्धुरश्नाति प्रकटीकरोति । कोऽर्थ. । अगस्तिना जगत्प्रलयप्रगल्भोर्मिरपि समुद्रश्चुलुकेन पीतो वडवाग्निना च शोषित. । नाम्नि पुंसि चेति णको, रोचकः ।

---

१ कान्ता N. २ खण्ड AD ३ तृष्टुभि AD ४ प्रलय dropped in D. ५ नुवेधेन DEP. ६ काञ्चीक्वणत्कार P.

## भिद्गौ दोधकम् ॥ १३० ॥

भत्रयं गुरुद्वयं च । यथा –

[1]पुष्करमम्बुदगर्जितधीरैः, अव्यमदो धकधोंकृतिनादैः ।
व्यञ्जितपाठकृतिध्वनिपाद-, न्यासमसाविह नृत्यति सुभ्रूः ॥ १३०.१ ॥

[2]उपचित्रेयम् ॥ १३०.१ ॥

## सिल्गा विदुषी ॥ १३१ ॥

सत्रयं लघुगुरू च । यथा –

[3]कुरुते तरसा न हि चापलं, स्वयमेव न चार्थयते परम् ।
प्रकटं कुरुते न वियाततां, प्रमदा विदुषी भवतीदृशी ॥ १३१.१ ॥

## भत्ना गौ श्रीर्डैः ॥ १३२ ॥

डैरिति पञ्चभिर्यतिः । भतना गुरुद्वयं च यथा –

या सुजनानामुपकरणाय, प्रद्विषतां च प्रतिकरणाय ।
मानधनानां भवति नराणां, श्रीरितरा स्यात् परिकरमात्रम् ॥ १३२.१ ॥

सान्द्रपदमित्यन्ये । रुचिरेति भरतः । यतिनियमाभावे इदमेव प्रत्यवबोधः ॥ १३२. १ ॥

## तो जौ गावुपस्थिता ॥ १३३ ॥

यथा –

या मानमहाविषघूर्णिताङ्गी, नाभूत् कलयापि वशंवदा ते ।
लोलन्मलयानिलदोलितात्मा, प्रीत्या सविलासमुपस्थिता सा ॥ १३३.१ ॥

## जस्ता गावुपस्थितम् ॥ १३४ ॥

जसता गुरुद्वयं च । यथा –

[4]शिलीमुखतति सत्पक्षनादां, मुहुर्निदधतं वाणासनाङ्के ।
पुरः शरदृतुं संप्रेक्ष्य राजन्, उपस्थितमरिस्त्वामेव मेने ॥ १३४.१ ॥

---

1) पुष्करमम्बुदेत्यत्र मृदङ्गं अव्यं कैः धकधोंकृतिनादैः । धकं नाम वादित्रं तस्य ये धोंकृतिनादास्तैः । पाठस्य कृती उपाध्यायः व्यञ्जितः पाठकृतिन उपाध्यायस्य ध्वनि पादन्यासेन यत्र नृत्ये । एतत् क्रिया-विशेषणम् । 2) उपचित्रेयमिति – स्युपचित्रा । चगणचतुष्टये नवमगुरावुपचित्रा । 3) कुरुते तरसेत्यत्र वियाततां धृष्टताम् । स्त्रीणां हि स्वभावोऽयं हावभावादिना स्वविषयं पुरुषं करोति पर मुखेन तं न प्रार्थयति । 4) शिलीमुखततिमित्यत्र भ्रमरश्रेणिं वाणश्रेणिं च । सन्तौ पक्षनादौ यस्याः सन् पक्षनादो यस्या वा । वाणासेति – वाणवृक्ष-बीजकवृक्षयोरङ्के । पक्षे धनुषि ।

---

१ पाठकृति DNP. २ तनुते AP ३ भत्नागौं E ४ डैरिति DE ५ P adds वानवासिकेयं. ६ गौ उप० N. ७ विदधतं N

**[1]मात् तौ गौ शालिनी घैः ॥ १३५ ॥**

[2]मस्तद्वयं गुरुद्वयं च । घैरिति चतुर्भिर्यतिः । यथा –

1)ऊर्मीभङ्गीर्निर्मिमाणा धुनीनां, व्यातन्वाना वीरुधा लास्यलीलाम् ।
उज्जृम्भन्ते शालिनीवारपाक-, स्फारामोदाः शारदा वांयवोऽमी ॥ १३५.१ ॥

**सभता गौ वातोर्मी[3] ॥ १३६ ॥**

[4]घैरिति वर्तते । यथा –

2)त्वच्छत्रूणां विपिनं[5] प्रस्थितानां, क्षिप्तः पांशुर्दृशि वातोर्मिकाभिः ॥
तापः सूर्येण च मूर्ध्नि प्रकीर्णः, को वा नास्कन्दति संप्राप्तभङ्गान् ॥ १३६.१ ॥

**मो भौ गौ[6] वा ॥ १३७ ॥**

वातोर्म्या एव लक्षणान्तरम् । घैरिति [7]वर्तते । यथा –

3)घोराकारा घनघोपविशेषा, दूरोत्क्षिप्तक्षितिरेणुविमिश्रा ।
लोकक्षोभं सहसा विदधाना, वातोर्मीयं कुरुते जगदन्धम् ॥ १३७.१ ॥

**मभ्नल्गा भ्रमरविलसितम्[9] ॥ १३८ ॥**

मभना लघुगुरू च । घैरिति वर्तते । यथा –

4)प्रत्याख्याताप्यसि कमलवनं, याता तत् किं करतलचलनैः ।
मुग्धे विद्धि स्फुटकमलधिया, वक्त्रापातिभ्रमरविलसितम् ॥ १३८.१ ॥

5)वानवासिकेयम् ॥ १३८.१ ॥

**नौ सो गौ वृन्ता[10] ॥ १३९ ॥**

घैरिति वर्तते । यथा –

जिनपतिगुरुपदपीठे यो, ऽशठमतिरिह लुठति प्रीत्या ।
विगलति निखिलमघं तस्मात्, परिणतफलमिव वृन्तान्तात् ॥ १३९.१ ॥

**न्यभा गौ पतिता चैः ॥ १४० ॥**

नयभा गुरुद्वयं च । चैरिति षड्भिर्यतिः[11] । यथा –

---

1) उर्मीभङ्गीरित्यत्र उर्मी कल्लोलः। धुनीनां नदीनाम्। व्यातन्वानाः कुर्वाणाः। शालिनीवारपाकेति – उप्ताः शाल्योऽनुप्ता नीवाराः। यद्वा शालिनः शोभना ये नीवारा वनव्रीहयः इति वा कार्यम्। एतावता त्रिधा वायुर्वर्ण्यते शीतो मन्द. सुरभिश्च। 2) त्वच्छत्रूणामित्यत्र वातोर्मिकाभिर्वातमण्डलीभिः। नास्कन्दति न पीड[य]ति। 3) घोराकारेत्यत्र घोरो भयकृत् आकारो यस्याः सा, महद् घोषवती। 4) प्रत्याख्यातापीत्यत्र निराकृतापि। यदीति शेषः। यातेति – प्राप्ता। चलनैरिति – निपेधनैः। 5) वानवासिकेयमिति – भजमुखश्रीगन्तो नवमे द्वादशे च ले सति वानवासिका। एतद्भेदविशेषाद् भ्रमरविलसितस्य।

---

१ मातौ N; मत्तौ A २ मतद्वयं N ३ वातोर्मी घै G ४ घैरित्यनुवर्तते A ५ विपिने N. ६ गौ घैर्वा G ७ इति च वर्तते B. ८ विशेपात् NP. ९ °सितं घै GH १० वृन्तं A; वृन्ता घै. GH. ११ याति D.

[1]वहति न मन्दं दक्षिणवायुर्, भ्रमति न तूर्णं चूतपरागः ।
दधति न पिक्यः पञ्चमरागं, किमु पतिता त्वं पादतलेऽस्य ॥ १४०.१ ॥

**रनरल्गा रथोद्धता ॥ १४१ ॥**

रनरा लघुगुरू च । यथा –

तावकीनकटके रथोद्धताः, धूलयो जगति कुर्युरन्धताम् ।
चेदिमाः करिघटा मदाम्भसा, भूयसा प्रशमयेन्न सर्वतः ॥ १४१.१ ॥

[2]अपरान्तिकेयम् ॥ १४१.१ ॥

**रनभा गौ स्वागता ॥ १४२ ॥**

रनभा गुरुद्वयं च । यथा –

वल्लभं सुरभिमित्रमनङ्गं[1], दाक्षिणात्यपवनं सुहृदं च ।
पृच्छतीह परपुष्टविघुष्टैः, स्वागतानि नियतं वनलक्ष्मीः ॥ १४२.१ ॥

**नौ रल्गा भद्रिका ॥ १४३ ॥**

नद्वयं रो लघुगुरू च । यथा –

परिहर नितरां परापदं, कुरु जिनवचनेऽनुरागिताम् ।
इति तव चरतः परे भवे, भवतु सपदि भद्रिका गतिः ॥ १४३.१ ॥

अपरवक्त्रमिति भरतः । [3]उत्तरान्तिकेयम्[2] ॥ १४३.१ ॥

**रजरल्गाः श्येनी ॥ १४४ ॥**

रजरा लघुगुरू[3] च । यथा –

भ्रान्तगृध्रवृन्दकङ्कमण्डल-, श्येनिका त्वदीयवैरिवाहिनी[4] ।
आपतत्कृतान्तरौद्रकिंकर-, व्याकुलेव लक्ष्यते क्षमापते ॥ १४४.१ ॥

निःश्रेणिकेत्यन्ये ॥ १४४.१ ॥

**[4]नो जौ ल्गौ सुमुखी ॥ १४५ ॥**

यथा –

कनकरुचिर्घनपीनकुचा, मनसिजविभ्रमकेलिगृहम् ।
चलनयना नवकुन्ददती, न हरति कस्य मनः सुमुखी ॥ १४५.१ ॥

द्रुतपादगतिरिति भरतः ॥ १४५.१ ॥

1) वहति न मन्दमिति – प्रसरति । एतानि कामिन्या भर्तुः पादपतने कारणानि । तदभावे पतितेति । 2) अपरान्तिकेयमिति – वैतालीयादेर्युक्पादजापरान्तिका । एतद्भेदत्वाद् रथोद्धतायाः । 3) उत्तरान्तिकेयमिति – वैतालीयादेरोजजा । चारुहासिनीति – चारुहासिनी ग्रन्थान्तरे । 4) नो जो ल्गौ सुमुखीति – नन्वत्र छन्दोनामत्वान्नखमुखेति ङीर् न प्राप्नोति । अत्राह – शोभनं मुखं यस्याः सा अनिर्दिष्टा स्त्री, ततो ङीः । तत्सुमुखीव इदं छन्दः प्रधानत्वात् सुमुखी ।

१ सुरभिमीगमनङ्गं ABDGP. २ चारुहासिनीयं BGP, उत्तरा० । चारु० यं A ३ लगौ च A ४ वैरवाहिनी B.
५ छन्दो०

**मस्जा गावेकरूपम् ॥ १४६ ॥**

मसजा गुरुद्वयं च । यथा –

काष्ठे वा कनकेऽथवा मणौ वा, लोष्टे वा रमणीषु वा तृणे[1] वा ।
शापे वा स्तवनेऽपि वा वितृष्णं, साधूनां मन एकरूपमेव ॥ १४६.१ ॥

**तो जौ ल्गौ मोटनकम् ॥ १४७ ॥**

यथा –

[1)]दन्तद्युतिधौतदिगन्तरया, रम्यं नवयौवनया विहितम् ।
साचीकृतलोलविलोचनकं, दृष्टं भवता मुखमोटनकम् ॥ १४७.१ ॥

**तभजल्गा उत्थापनी ॥ १४८ ॥**

यथा –

सर्पद्द्विपेन्द्रभरकम्प्रमही-, प्रभ्रश्यदद्रिशिखरै[2]रध्वनिभिः ।
अम्भोधिमध्यशयितस्य हरेर्, उत्थापनी जयति ते[3] पूतना ॥ १४८.१ ॥

**तो नौ ल्गौ मुखचपला ॥ १४९ ॥**

यथा –

[2)]आकाङ्क्षसि यदि सुखमसमं, जन्मापि विमलमिह मनुपे ।
नागीमिव निरवधिकुटिलां, नारी परिहर मुखचपलाम् ॥ १४९.१ ॥

**न्यनल्गाः कमलदलाक्षी ॥ १५० ॥**

नयनै[4]लगाः यथा –

विर[5]हनिदाघः सुभग हठाद्, अतिशयदीर्घीकृतदिवसः ।
कृतगुरुतापः कृश[6]यति तां, कमलदलाक्षीं सरितमिव ॥ १५०.१ ॥

रुचिरमुखीति भरतः ॥ १५०.१ ॥

**स्मनल्गा विमला ॥ १५१ ॥**

समनलगाः । यथा –

शरदायातेयं गगनमणेर्, इव तेजः[7] प्रौढि तव भजताम् ।
नृप कीर्तिर्ज्योत्स्ना[8] तुहिनरुचेर्, इव दिक्षु भ्राम्यत्यतिविमला ॥ १५१.१ ॥

**नस्ना गावशोका ॥ १५२ ॥**

नसना[9] गुरुद्वयं च । यथा –

1) दन्तद्युतीति – साचीकृतेति वक्रीकृतम् । 2) आकाङ्क्षसीत्यत्र मुखचपलामिति – वाचालाम् ।

१ मणौ वा A २ शिखाध्व० A. ३ सा पू० N; ४ D drops नयनलगा· to कमलदलाक्षीं ५ विहरनि० N. ६ क्रशयति APB. ७ तेज प्रौढं N ८ कीर्तिज्योत्स्ना AO ९ नस्ना P.

[1)]अलिवलयहुंकृतिभिरुच्चैर्, इयमिह निषेधति भवन्तम्।
वनभुवमितः पथिक मा गाः, कुसुमितसमुल्लसदशोकाम्॥ १५२.१॥

**सज्या लगौ सारणी**[1] **॥ १५३॥**

सजयलगाः। यथा—
मदन[2]स्त्रिलोचनभालाग्निना, ज्वलितः क्षणादिह जीवेत् कथम्।
त्रिवलीतरंगजुषः स्युर्न चेद्, रससारसारणयः सुभ्रुवः॥ १५३.१॥

**तौ जो गाविन्द्रवज्रा ॥ १५४॥**

यथा—
स्वस्वागमाचारपरायणानां, पुण्यात्मनां यैः[3] कुरुते विरुद्धम्।
क्षोणीभुजस्तस्य भवत्यवश्यं, रौद्रेन्द्रवज्राभिहतस्य पातः॥ १५४.१॥

**जतजा गावुपेन्द्रवज्रा ॥ १५५॥**

यथा—
[2)]दधासि धात्री विदधासि दुष्ट-, क्षमाभृतां निर्दलनं प्रसह्य।
कुमारपाल क्षितिपाल कस्त्वम्, उपेन्द्रवज्रायुधयोस्तदत्र॥ १५५.१॥

**एतयोः परयोश्च संकर उपजातिश्चतुर्दशधा ॥ १५६॥**

एतयोरिन्द्रवज्रोपेन्द्रवज्रयोः संकरोऽन्योन्यपादमीलनमुपजातिः। सा च प्रस्तार-भेदाच्चतुर्दशधा। एवं परयोरिन्द्रवंशा-वंशस्थयोः संकरः उपजातिश्चतुर्दशधैव। स्थापना[3)]।

S|||, |S||, SS||, ||S|, S|S|, |SS|, SSS|, |||S, S||S, |S|S, SS|S, ||SS, S|SS, |SSS.

आद्यभेदोदाहरणं यथा[4]—
प्रायः पुमांसोऽभिनवार्थलाभे, गुणोज्ज्वलेष्वप्यकृतादराः स्युः।
अवाप्य कुन्दं मधुपो हि जज्ञे, गतोपजाति[5]भ्रमणाभिलापः॥ १५६.१॥

एवमन्येष्वप्युदाहार्याः। समवृत्तप्रस्तावेऽप्युपजातीनामुपन्यासो लाघवार्थः॥ १५६.१॥

**सर्वजातीनामपीति**[6] **वृद्धाः ॥ १५७॥**

सर्वजातीनां उक्तादीनां प्रायो गायत्र्यादीनां इतः परासां जगत्यादीनां [4)]कृत-नामाकृतनामविसदृशप्रस्ताररूपस्वस्वपादानां स्वल्पभेदानां संकरः उपजातिरिति बहुश्रुताः प्राहुः। यथा त्रिष्टुभः स्वप्रस्तारेण—

1) अलिवलयेति भवन्तमिति—कंचित् पथिकं वनलक्ष्मी निषेधयति। 2) दधासि धात्रीमित्यत्र क्षमाभृतामिति—राज्ञां गिरीणां च। कस्त्वमिति—क. प्रश्ने। नारायण-पुरंदरयोस्तदत्र संग इति मन्ये। 3) स्थापनेति—अत्रैकेनाद्येन वर्णेन पादकथनम्। यदि गुरुस्तदा इन्द्रवज्रायाः पादः। तत्र हि तगणाद् आद्यो वर्णो गुरुः। लघुश्चेदुपेन्द्रवज्राया पादः। तत्र हि जगणाद् आद्यो वर्णो लघुः। चतुर्षु प्रसृतेषु आद्यान्तिम-भेदयोर्वर्जितयोरयं प्रस्तारः समायाति। आद्यभेदस्य इन्द्रवज्रारूपत्वादन्त्यभेदस्योपेन्द्रवज्रारूपत्वात्तयोर्वर्जनम्। 4) कृतनामाकृतनामेति—विसदृशप्रस्ताररूपा स्वस्वपादा यस्याम्। एकैकाक्षरैः न बहुभिः।

---

१ सारिणी BGH  २ दमन. N.  ३ यत् N  ४ यथा dropped in AE.  ५ त्यक्तोपजाति॰ A.  ६ अपि वृद्धा. प्राहु॰ H.

1)कामे कमाहिँ कसियं खु दुक्खं, छिंदाहि दोसं विणएज्ज रागं ॥ १५७.१ ॥

तथा –

2)सक्कारए सिरसा पंजलीओ, कायग्गिरा भो मणसा यँ निच्चं ॥ १५७.२ ॥

परजातिप्रसारेण यथा –

3)युधिष्ठिरो धर्ममयो महाद्रुमः, स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखा ।
माद्रीसुतौ पुष्पफले समृद्धे, मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ १५७.३ ॥

4)जे आवि मंदेत्तिं गुरुं विइत्ता, डहरे इमे अप्पसुएत्ति नच्चा ॥ १५७.४ ॥ ११।३० ॥

**जगत्यां तौ ज्राविन्द्रवंशा ॥ १५८ ॥**

ततजराः । यथा –

5)दारेषु सुग्रीवकपीश्वरस्य यद्, रागानुबन्धं सहसा व्यपञ्चयः ।
तत् ते प्लवंगाधिपते किमुच्यते, हन्तेन्द्रवंशानुगुणं त्वया कृतम् ॥ १५८.१ ॥

**जतज्रा वंशस्थम् ॥ १५९ ॥**

यथा –

पुरूरवोनाहुषिपूर्वः पुरा, दधुर्वरां धारयतेऽधुना भवान् ।
अपूर्वमेतच्चरितं न तावकं, वदन्ति वंशस्थमिदं महीपते ॥ १५९.१ ॥

वसन्तमञ्जरी, अपभ्रंशा चेत्यन्ये ॥ १५९.१ ॥

**नभज्याः कलहंसा ॥ १६० ॥**

यथा –

6)गुणलवेऽपि सुभग प्रियसख्या, गुणिकथाक्रमवशात् प्रकृते ते ।
घटयते किमपि नाटितलज्जा-, कृतकमाशु सुतनुः कलहं सा ॥ १६०.१ ॥

द्रुतपदा, सुखरं चेत्यन्ये ॥ १६०.१ ॥

**रनभसाश्चन्द्रवर्त्म ॥ १६१ ॥**

रनभसाः । यथा –

7)सैंहिकेयभयविह्वलमनसः, स्वप्रभासिरिह दक्षमुनिसुताः ।
नाममात्रमपि सोढुमपटवश्, चन्द्रवर्त्म रचयन्ति हततमः ॥ १६१.१ ॥

---

1) ( हि इति यद्यपि अनुस्वाराद्दीर्घोऽस्ति तथाप्यत्र प्रस्तारे हिं इत्यक्षरस्य लघुत्वं प्रस्तार्यम् Tippana in B ) कामे कमाहीति अकृतनाम । छिंदाहीति इन्द्रवज्रायाः पादः । 2) सक्कारएत्ति अकृतनाम । कायग्गिरेति इन्द्रवज्रापादः । 3) युधिष्ठिरो धर्मेति वंशस्थपादः । स्कन्ध इति लयग्राहिपादः । यतः तिगौ लयग्राहि । माद्रीसुताविति – नकुलसहदेवौ । इन्द्रवज्रा । मूलमिति शा[लि]नीपादः ॥ 4) जेआवित्ति इन्द्रवज्रापादः । डहरेत्ति केकिरवच्छन्दः । 5) दारेषु सुग्रीवकपीश्वरस्येत्यत्र हे वालिन् इन्द्रोऽपि पुरा अहल्याख्यायां ऋषिपत्न्यां लुब्धोऽभूत् त्वमसि इन्द्रपुत्र इति तवेदं युज्यत इति भावः । 6) गुणलवेपीत्यत्र प्रकृते प्रारब्धे । नाटितलज्जेति – अभिनयविषयं प्रापिता त्रपा यथेति सा । कृतकमिति – कृत्रिमम् । 7) सैंहिकेयेत्यत्र दक्षमुनिसुताः २७ तारकाः । हततम इति – तमःशब्देन राहुर्भण्यते ।

---

१ कमाहिं ACDN २ धिणइज्ज A, विणइज्ज P. ३ पंजलिओ A ४ इ A ५ जे यावि P. ६ मंदित्ति A; मंदेति B ७ विइत्ता A ८ निचा P ९ नाधुषि ADP १० अपभ्रंशा A. ११ सोढमप० A

## सीस्तोटकम् ॥ १६२ ॥

सीरिति चत्वारः सगणाः । यथा—

[1]परलोकविरुद्धकुकर्मरतं, वहिरार्जवमादधतं कुटिलम् ।
विषकुम्भमिवेद्धसुधापिहितं, त्यज मित्रमतोटकतैकगुणम् ॥ १६२.१ ॥

[2]मात्रासमकमिदम् ॥ १६२.१ ॥

## नभभ्रा द्रुतविलम्बितम् ॥ १६३ ॥

यथा[2]—

परुषसान्द्रवचोरचनाञ्चिता, रुदितहासविलोलविलोचना ।
[3]अवचनं कथयत्यतिरागितां[3], द्रुतविलम्बितचित्रगतेरियम् ॥ १६३.१ ॥

हरिणप्लुतमिति भरतः ॥ १६३.१ ॥

## नौ म्यौ पुटो जैः ॥ १६४ ॥

ननमयाः । जैरित्यष्टभिर्यतिः । यथा—

[4]तरललवणिमाम्भःपूर्णकुम्भी[4], सुचरितफलपाकोल्लाससवल्ली[5] ।
स्तनतु तव विराजत्यङ्गसगान्, नयनपुटनिपेया यौवनश्रीः ॥ १६४.१ ॥

## नौ म्रौ ततम् ॥ १६५ ॥

ननमराः । यथा—

नववयसि वियुक्तानां योषितां, प्रिय कथय निराशानां का गतिः ।
त्वमपि सुभग गन्ता देशान्तरं, गगनमपि च मेघव्यूहैस्ततम् ॥ १६५.१ ॥

## नौ म्रावुज्ज्वला ॥ १६६ ॥

ननभराः । यथा—

विनयितमनसोऽपि निरन्तरं, वत विदधतु किं नु[6] विवेकिनः ।
नयनगतिरियं हि सुदुःसहा, चकितमृगदृशामहहोज्ज्वला ॥ १६६.१॥

चलनेत्रेत्येके[7] ॥ १६६.१ ॥

## तीः कामावतारः ॥ १६७ ॥

तीरिति चत्वारस्तगणाः । यथा—

[5]मध्ये नताङ्ग्या नवा रोमराजीति, यन्मन्यते मुग्धलोको न तत् किं तु ।
तुङ्गस्तनास्थानिका[8]कुट्टिमारूढ-, कामावताराय निःश्रेणिकां[9] विद्धि ॥१६७.१॥

1) परलोकेत्यत्र अतोटकतैकगुणमिति—न कलहकर्मणि त्रुटनीति अतोटकं तस्य भाव. अतोटकतैव एको गुणो यस्या. । कलहकारिता एकगुण इति भाव । त्यज मित्रमिति पाठे आदधतं इति विशेषण न घटते मित्रशब्दस्य संयुक्तरान्तत्वान्नपुंसकत्वे । तस्मात्त्यज भृत्यमिति शुद्ध पाठः । 2) मात्रासमकमिदमिति—अजमुखश्रीर्गन्तो । 3) अवचनं क्रियाविशेषणम् । 4) तरललवणिमेति—चञ्चलं मनोहरत्वं तद्रूपं पयस्तस्य कुम्भी । सुचरितपाकेति—पाकोऽनुभव. । 5) मध्ये नताङ्ग्या इति—मध्यं वलित्रयभृत् । आस्थानिकेति—आस्थानशाला ।

१ विरुद्ध कु० A. २ नभभरा यथा P ३ अतिरागतां N ४ पूर्णकुम्भा A ५ उल्लासिवल्ली E. ६ तु BNP, नु dropped in A ७ चपलने. PN. ८ स्तनीस्था० A ९ नि श्रेणिकं N.

**न्यौ न्यौ कुसुमविचित्रा ॥ १६८ ॥**

नयनयाः । यथा—

सरसिजवक्त्रा कुवलयनेत्रा, विकचजपोष्ठी[1] विचकिलदन्ता ।

इयमनुरूपा ननु कुसुमेषोर्, जयति धनुःश्रीः कुसुमविचित्रा ॥ १६८.१ ॥

इयं मदनविकारा गजललितं वा अन्येषाम् ॥ १६८.१ ॥

**ज्सज्सा जलोद्धतगतिश्चैः ॥ १६९ ॥**

जसजसाः । चैरिति षड्भिर्यतिः । यथा—

[1]विकासि[2]कुसुमं सदाफलयुतं, निसर्गशिशिरं तटे[3] विटपिनम् ।

निपातितवती हहा सरि[4]दियं, निकामकलुषा जलोद्धतगतिः ॥ १६९.१ ॥

**यीर्भुजंगप्रयातम् ॥ १७० ॥**

यीरिति चत्वारो यगणाः । यथा—

[2]न सूरिः सुराणां गुरुर्नासुराणां, पुराणां रिपुर्नापि नापि स्वयंभूः ।

खला एव विज्ञाश्चरित्रे खलानां, भुजंगप्रयातं भुजंगा विदन्ति ॥ १७०.१ ॥

अप्रमेयेति भरतः ॥ १७०.१ ॥

**रीः स्रग्विणी ॥ १७१ ॥**

रीरिति रगणाश्चत्वारः । यथा—

[3]तारकामल्लिका[5]मालिकामालिनी, चारुचन्द्रप्रभाकेतकीशालिनी ।

भोगभाजां भुजंगेश्वराणां प्रिया, सेयमुज्जृम्भते शर्वरीस्रग्विणी ॥ १७१.१ ॥

पद्मिनीति भरतः ॥ १७१.१ ॥

**जीर्मौक्तिकदाम ॥ १७२ ॥**

जीरिति जगणाश्चत्वारः । यथा—

[4]समाधिपयोधिनिमग्नमदीनम्, अनीहमकाममवाममनाधि ।

जिनेन्द्र[6] मनो मम वाञ्छति नाम, न विभ्रमधाम न मौक्तिकदाम ॥ १७२.१ ॥

**मीः कल्याणम् ॥ १७३ ॥**

मीरिति मगणाश्चत्वारः । यथा—

1) विकासिकुसुममित्यत्र एवंविधं वृक्षं निपातितवती । वचसा अन्योक्तिरभ्यूह्या । 2) न सूरिसुराणामित्यत्र बृहस्पतिः । पुराणां रिपुरितीन्द्रः । भुजंगप्रयातमिति—प्रयातं गतिम् । 3) तारकेत्यत्र मालिनीति—मलमल्लिधारणे । भोगभाजामिति—पक्षे सर्पाणाम् । स्रग्विणीति—मालावती । 4) समाधिपयोधिनिमग्नेत्यत्र नामेति—कोमलामन्त्रणे । विभ्रमधामेति—विलासगृहम् । मौक्तिकदामेति—मुक्ताफलहारम् ।

१ जपौष्ठी ABCD २ विकाशि० AP. ३ तटविट० N; तटे विपिनं C ४ गरदियं A. ५ मालिकामल्लिका A ६ जितेन्द्र A.

[1]आदिस्रष्टा यः सर्वेषां सन्मार्गाणां, प्रत्यादेष्टा यः पापानां त्रैलोक्येऽस्मिन् ।
तत्त्वज्ञानात् संसाराब्धेः प्राप्तः पारं, दिश्याद् देवः श्रीनाभेयः कल्याणं सः ॥१७३.१॥

काञ्चनमिदमिति कश्चित् ॥ १७३.१ ॥

**नाद् भज्राः प्रियंवदा ॥ १७४ ॥**

**नगणात् परे भजराः । यथा –**

[2]प्रणयतत्परमिमं सखि प्रियं, मधुरमालप मयैव शिक्षिता ।
विधुरिता समदकोकिलारवैर्, यदि भविष्यसि मधौ[1] प्रियंवदा ॥ १७४.१ ॥

मत्तकोकिलमित्यन्ये ॥ १७४.१ ॥

**ताल्ललिता ॥ १७५ ॥**

**तगणात् परे[2] भजराश्चेत् तदा ललिता । यथा –**

[3]ग्रामेऽत्र पाप कलहंसतां दधद्, धत्से त्रपां नहि किमन्ध भाव्यताम् ।
रम्यं वपुर्न मधुरं न ते रुतं, रे काकपाक ललिता न वा गतिः ॥ १७५.१ ॥

**स्जौ सौ प्रमिताक्षरा ॥ १७६ ॥**

**सजौ सद्वयं च । यथा –**

वहुभिः किमालँलपितैः[3] कुधियां, सरसाभिधेयघटनारहितैः ।
[4]रसभावभावितधियां हि वरं, प्रमिताक्षराऽपि रचनाऽर्थवती ॥ १७६.१ ॥

चित्रेयम् ॥ १७६.१ ॥

**मौ यौ वैश्वदेवी ङैः ॥ १७७ ॥**

**ङैरिति पञ्चभिर्यतिः । यथा –**

[5]जिष्णुर्वित्तेशो धर्मराजः प्रचेताः, ईशः श्रीनाथस्तेजसां धाम चेति[4] ॥
यत् त्वं प्रख्यातः श्रीचुलुक्यक्षितीश, ब्रूमस्तेनेयं वैश्वदेवी तनुस्ते ॥ १७७.१ ॥

चन्द्रकान्तेत्यन्ये ॥ १७७.१ ॥

**म्भौ स्मौ जलधरमाला घैः ॥ १७८ ॥**

**मभसमाः । घैरिति चतुर्भिर्यतिः । यथा –**

---

1) आदिस्रष्टेत्यत्र प्रत्यादेष्टेति – निराकर्ता । 2) प्रणयतत्परमित्यत्र शिक्षितेति – आनीय पादे पातिते आलपेत्यादि कथिते सति । सा तां किं मां शिक्षयसि । उपालम्भे इदं पदं योज्यम् । 3) ग्रामेऽत्रेत्यत्र पापेति – हे पापिन् । त्रपामिति – लज्जाम् । भाव्यतामिति – पर्यालोच्यताम् । काकपाक वायसडिम्भ । वायसडिम्भेऽत्राप्यन्योक्तिः । 4) रसभावभावितेत्यत्र प्रमिताक्षरेति – सरसार्थरचनासहिता स्तोकाक्षराऽपि । 5) जिष्णुर्वित्तेश इत्यत्र जयनशीलो जिष्णुः, पक्षे इन्द्रः । वित्तस्य ईशः, पक्षे धनद । चतुर्विधस्य धर्मस्य राजा, पक्षे यमः । प्रकृष्टं चेतो यस्य सः, पक्षे वरुणः । ईश स्वामी, पक्षे शंभु । श्रीणां नाथः, पक्षे नारायणः । तेजसां गृहं, पक्षे सूर्यः । इति विशेषणैस्त्वं ख्यातोसि, यतस्तत एवं । वैश्वदेवीति – विश्वदेवानामिय वैश्वदेवी ।

---

१ मध्ये C. २ परतनराश्चेत् A ३ किमालि लपितै N, [आलं=वहु]. ४ प्रवेत्ता P ५ वेत्ति F.

त्वत्सेनाभिः कृतरिपुधामप्लोपे, दृष्ट्वा व्योम्नि स्फुरदुरुधूमस्तोमम् ।
ग्रीष्मेऽप्युत्काः[1] सपदि मयूरा राजन्, शब्दायन्ते जलधरमालाभ्रान्त्या ॥ १७८.१ ॥

कान्तोत्पीडेत्यन्ये ॥ १७८.१ ॥

**न्जौ भ्यौ नवमालिनी जैः ॥ १७९ ॥**

नजभयाः । जैरित्यष्टभिर्यतिः । यथा –

[1]कलयति वैरिभूमिपतिलक्ष्मीं, परिमलहारिकीर्ति[2]कुसुमौघम् ।
सपदि ददाति तुभ्यमनवद्यं, नृप नवमालिनीयमसिलेखा ॥ १७९.१ ॥

**न्जौ ज्रौ मालती ॥ १८० ॥**

नजजराः । यथा –

[2]भ्रमर सखे व्रज यत्र सा प्रिया, कथय दशामिति मे तदग्रतः ।
अभिनवपुष्पितरम्यमालती-, परिमलमुल्लसितं पिवाथवा ॥ १८०.१ ॥

वरतनुरित्यन्ये ॥ १८०.१ ॥

**नौ रौ प्रमुदितवदना ॥ १८१ ॥**

यथा –

[3]स्खलितवचसि भर्तरि भ्रूकुटिं, प्रियसखि घटयेत्यपि प्रेरिता ।
[3]अविदितरसविभ्रमा बालिका, प्रमुदितवदना भवत्युन्मुखी ॥ १८१.१ ॥

चञ्चलाक्षीत्यन्ये । गौरीत्य[4]परे ॥ १८१.१ ॥

**सा प्रभा छैः ॥ १८२ ॥**

सा प्रमुदितवदना छैः सप्तभिर्यतिश्चेत् प्रभा नाम । यथा –

प्रचुरविभवता नवं यौवनं, विमललवणिमा समग्राः कलाः ।
सकलमपि सखे तदेतन्मुधा, यदि मृगनयना न हेमप्रभा ॥ १८२.१ ॥

**न्जौ[5]ज्यास्तामरसम् ॥ १८३ ॥**

नजजयाः । यथा –

[4]सततविका[6]ससमुद्धुरशोभं, सकलकलङ्ककलापरिमुक्तम् ।
तव वदनं मदिराक्षि किमेतद्, भवति न तामरसं न च चन्द्रः ॥ १८३.१ ॥

कमलविलासिनीत्यन्ये ॥ १८३.१ ॥

---

1) कलयति वैरीत्यत्र अङ्गीकरोति । अन्या मालिनी परेषां अर्थं गृह्णाति तत एभ्य एव कुसुमानि दत्ते । इयं मालिनी शत्रूणां लक्ष्मीं लाति तुभ्यं चारुकीर्तिकुसुमौघं वितरति इति नवत्वमस्याः । 2) भ्रमरसखे इत्यत्र दशामिति – दशामवस्थाम् । पिवाथवेति – तवापि मालतीरसं पिवतोऽन्तरायो भविष्यतीति पिव । 3) स्खलितवचसि इत्यत्र अन्यस्त्रीनामोच्चारणात् गोत्रस्खलितेऽपि कृते प्रियेण, अकुपितत्वेन उन्मुखी । 4) सततविकासेत्यत्र तामरसं सततं विकासि चन्द्रश्च कलङ्कपरिमुक्तो न भवति ।

---

१ प्युत्का N २ हारी कीर्ति० N. ३ अविहित B. ४ अपर A. ५ नजज्या P. ६ विकाश AP.

**ज्रज्रा विभावरी ॥ १८४ ॥**

जरजराः । यथा—

[1]पयोनिधेरवाप्य तोयसंपदं, मदाद् वलाहकेन पश्य यत् कृतम् ।
य एष तस्य हर्षकारणं सुतः, स एव संवृतो विभावरीपतिः ॥ १८४.१ ॥

वसन्तचत्वरमित्यन्ये ॥ १८४.१ ॥

**र्यन्याः कुमुदिनी ॥ १८५ ॥**

रयनयाः । यथा—

[2]बोधितापि रम्यैः करनिकरैस्ते, हासलेशमासादयति न यस्मात् ।
मुञ्च मुञ्च तस्मादिह नलिनीयं, रोहिणीपते हन्त कुमुदि[1]नीतः ॥ १८५.१ ॥

**भ्तौ न्सौ ललना ङैः ॥ १८६ ॥**

भतनसाः । ङैरिति पञ्चभिर्यतिः । यथा—

[3]रम्यनितम्बां नवतनुलतिकां, संभृततृष्णां गजगतिरुचिराम् ।
विन्ध्यधरित्रीं तव नृप रिपवः, संप्रति भेजुर्न तु निजललनाम् ॥ १८६.१ ॥

**नौ र्यौ कामदत्ता ॥ १८७ ॥**

ननरयाः । यथा—

[4]निकृतिकलुषया धिया वितीर्णं, बहुतरमपि नि[2]ष्फलत्वमेति ।
सुकृतममृतकारणं प्रसूते, ध्रुवमिह कणिकापि कामदत्ता ॥ १८७.१ ॥

**नो रिर्मेघावली ॥ १८८ ॥**

रिरिति रगणत्रयम् । यथा—

स्तनितघोरघोपाट्टहासा[3]कुला, तरलतारविद्युच्छटालोचना ।
विरहिणीजनप्राणघातोद्यता, नभसि राक्षसीयं न मेघावली ॥ १८८.१ ॥

वसन्तेति कश्चित् ॥ १८८.१ ॥

**त्यौ त्यौ पुष्पविचित्रा ॥ १८९ ॥**

तयतयाः । यथा—

[5]भ्राम्यद्भ्रमरव्याकीर्णोद्धुरगन्धा, मन्दारवती सन्तानप्रसवाढ्या ।
नाभेयजिनस्योदामा सुरनाथैर्, दिष्ट्या रचिता पूजा पुष्पविचित्रा ॥ १८९.१ ॥

1) पयोनिधेरित्यत्र संवृतः प्रच्छादितः । 2) बोधितापि रम्यैरित्यत्र हासलेशमिति—विकाशः हास्यं च । कुमुदिनीतः इति—इयं नलिनी यस्मात् हासलेशमपि नासादयति तस्मात् मुञ्च मुञ्च इति सवन्धः । इत प्रदेशे । 3) रम्यनितम्बामित्यत्र गिरिमध्यं नितम्बस्थलं च । पक्षे नवा. तन्व्य. कृशा. लतिका. यस्याम् । संभृता पोषिता तृष्णाभिलाषः पिपासा च यया सा ताम् । 4) निकृतिकलुषयेत्यत्र निकृतिर्धिक्कारः । अमृतेति—मोक्षकारणम् । कामदत्तेति—इच्छया दत्ता । 5) भ्राम्यद्भ्रमरेत्यत्र दिष्ट्येति—भाग्येन ।

१ कुमुदिनीव N. २ नि फल० AB ३ हासातुला N
६ छन्दो०

**सा मणिमाला चैः ॥ १९० ॥**

सा पुष्पविचित्रा चैः षड्भिर्यतिश्चेन्मणिमाला । यथा –

[1]सन्तोषधनानां का नाम समृद्धिश्, चारित्रसुधाप्तौ धिक्कामपिपासाम् ।
निर्बीजसमाधावास्तां सुरसौख्यं, जैनी यदि कण्ठे वाक् किं [1]मणिमाला ॥ १९०.१ ॥

**स्यौ स्यौ केकिरवम् [2] ॥ १९१ ॥**

सयसयाः । यथा –

[2]पथिक प्रयाहि त्वरयैव नो चेत्, पुरतः समुज्जृम्भिणि मेघकाले ।
भवतो द्विजिह्वस्य हरिष्यतेऽसून्, समदध्वनत्केकिरवः प्रचण्डः ॥ १९१.१ ॥

**निसौ ह्रीः ॥ १९२ ॥**

निरिति नगणत्रयं सश्च । यथा –

[3]सितमहसि धवलयति धरां, सुभग कुरु यदिह समुचितम् ।
तव विशदगुणहृत[3]हृदया, ह्रियमपि परिहरति सुतनुः ॥ १९२.१ ॥

**ज्सौ स्यौ कोलः ॥ १९३ ॥**

जससयाः । यथा –

[4]चुलुक्यनृपते त्वयि बिभ्रति क्ष्मां, विहाय धरणीधरणप्रयासम् ।
पयोधिपुलिने रमतां यथेच्छं, स संप्रति चिराय पुराणकोलः ॥ १९३.१ ॥ १२।३६ ॥

**अतिजगत्यां नतिगा उर्वशी ॥ १९४ ॥**

नगणः तगणत्रयं गुरुश्च । यथा –

[5]अजननिर्योपितामस्तु वंशे सतां,
मलिनिमानं स्वशीलेन यास्तन्वते ।
भगवतो वासुदेवात् प्रसूतापि हि,
त्रिदशवेश्यात्वमङ्गीचकारोर्वशी ॥ १९४.१ ॥

**न्जौ ज्रौ गः सुवक्त्रा ॥ १९५ ॥**

नजजरगाः । यथा –

[6]हृतहृदयः खलु यद्विलासलक्ष्म्या,
रतिमपि पुष्पशरस्तृणाय मेने ।

1) संतोषधनेत्यत्र निर्बीजसमाधाविति – निरालम्बध्याने । 2) पथिकप्रि(प्र)येति – पुरतः इति हेत्वलंकारोऽत्र । द्विजिह्वस्येति – द्वितीया जिह्वा यस्यात्रकस्येत्यर्थः (कलत्रस्येत्यर्थः – Tippana in B) । 3) सितमहसीत्यत्र ह्रियमपीति – मित्रं प्राह । 4) चुलुक्येत्यत्र पुराणकोल आदिवराहः । 5) अजननिर्योपितामित्यत्र अनुत्पत्तिरेव भूयात् । उर्वशी हि वासुदेवस्य ऊरौ जातेति श्रुतिः । 6) हृतहृदय इत्यत्र किलेति संभावनायाम् ।

१ मणिमलो A. २ केकीरवं N. ३ हृदहृदया B.

लवणिमवारितरंगिणी किलैषा,
हरति न साऽपि मुनेर्मनः सुवक्त्रा ॥ १९५.१ ॥
अचलेत्यन्ये ॥ १९५.१ ॥

**भ्गौ गावङ्गरुचिः ॥ १९६ ॥**

**भचतुष्टयं गुरुश्च । यथा –**

येन विधिप्रतिपक्षतयेव सदा,
ऽकारि कृतार्थक एव दरिद्रजनः ।
कस्य मुदं न ददाति नृपो भरतः,
सोऽङ्गरुचिप्रतिषिद्धसहस्रकरः ॥ १९६.१ ॥

**म्नौ ज्रौ गः प्रहर्षिणी गैः ॥ १९७ ॥**

**मनजरगाः । गैरिति त्रिभिर्यतिः । यथा –**

[1]उत्प्रेङ्खत्त्रिदशधनुश्छलेन वर्षा-,
लक्ष्म्योद्यन्मणिरुचिचित्रतोरणस्रक् ।
पक्ष्मेपोर्भुवनजयोत्सवैकचिह्नम्,
आबद्धा सपदि मनःप्रहर्षिणीयम् ॥ १९७.१ ॥

**ज्भौ स्जौ गो रुचिरा घैः ॥ १९८ ॥**

**जभसजगाः । घैरिति चतुर्भिर्यतिः । यथा –**

[2]समुल्लसद्दशनमयूखचन्द्रिका-,
तरङ्गिते तव वदनेन्दुमण्डले ।
सुलोचने कलयति लाञ्छनच्छवि,
घनाञ्जनद्रवरुचिरालकावली ॥ १९८.१ ॥

**म्तौ य्सौ गो मत्तमयूरम् ॥ १९९ ॥**

**मतयसगाः । घैरिति वर्तते । यथा –**

[3]प्रावृट्लक्ष्म्या निश्चितमत्रावतरन्त्याः,
संभूयाग्रे कलिपतकोलाहलमुच्चैः ।
जल्पन्तोऽमी हन्त निदाघापसरेति,
प्रातीहार्यं मत्तमयूराः कलयन्ति ॥ १९९.१ ॥

1) उत्प्रेङ्खदित्यत्र चित्रेति – विविधवर्णा । उत्सवैकचिह्नेति – वान्ते ग्वक्र इति सूत्रेण गुरुत्वम् ।
2) समुल्लसदित्यत्र मयूखचन्द्रिकेति – चन्द्रकान्तेर्नाम । 3) प्रावृट्लक्ष्म्येत्यत्र संभूयेति – मिलित्वा ।

१ लक्ष्योद्यन् N. २ मयूष० P.

**नौ त्रौ ग[1]: क्षमा ॥ २०० ॥**

ननतरगाः । घैरिति वर्तते । यथा –

[1])अयि जड यतिबन्धो किमङ्गगौचैः,
क्वचिदपि सुकृतं स्यान्मुधासि मूढ[2]: ।
यदिह च परलोके च साधु तत्त्वं,
शृणु कुरु हृदयस्थां क्षमामजस्रम् ॥ २००.१ ॥

**मौ जौ गः श्रेयोमाला ॥ २०१ ॥**

घैरिति वर्तते । यथा –

[2])लक्ष्मीलीलागारं विनम्रपुरंदर-,
भ्राम्यद्भृङ्गश्रेणीकृतस्तवनध्व[3]नि ।
नेत्रानन्दं ताम्राङ्गुलीदलबन्धुरं,
श्रेयोमालां दद्याज्जिनेन्द्रपदाम्बुजम् ॥ २०१.१ ॥

**नौ तौ गः कुटिलगतिश्छैः ॥ २०२ ॥**

छैरिति सप्तभिर्यतिः । यथा –

[3])यदसरलतरभ्रूर्विभुग्नालका,
कुटिलगतिर्[4]रतिप्रौढवाग्वक्रिमा ।
त[5]दियमघटि भोः कौतुकात् कामिनी,
नियतमनृजुना केनचिद् वेधसा ॥ २०२.१ ॥

नर्तकीत्यन्ये ॥ २०२.१ ॥

**नौ म्रौ गः क्ष्[6]मा ॥ २०३ ॥**

ननमरगाः । छैरिति वर्तते । यथा –

[4])त्वदरिमृगदृशामावासप्रदानाद्,
भयमिव परमं राजन् धारयन्तः ।
प्रचलति भवतः सैन्ये दिग्जयार्थं,
प्रतिदिशमगमँ[7]न् कम्पं क्ष्माभृतोऽमी ॥ २०३.१ ॥

1) अयि जडेत्यत्र यतिबन्धो इति – साध्वाभासवचन. ब्रह्मबन्धुवत् । 2) लक्ष्मीलीलेत्यत्र नेत्रानन्दमिति – नेत्राणि आनन्दयति नेत्रानन्दम् । 3) यदसरलेत्यत्र विभुग्नालकेति – वक्रभ्रमरालका । कुटिलेति–वक्रा । अनृजुनेति – वक्रेण विधिना । 4) त्वदरिमृगक्षामित्यत्र त्वद्वैरिवनितागृहप्रदानादेव त्वत्सैन्ये प्रसरति सति अमी क्ष्माभृत. पर्वता. कम्पं दधुरिति भावः ।

१ गा N. २ मूढ AC. ३ ध्वनि B. ४ गतिरपि A. ५ नियतमघटि A. ६ क्ष्मा छै. GH. ७ अगमत् N.

**य्मौ रौ गश्चन्द्रिणी चैः ॥ २०४ ॥**

यमररगाः । चैरिति षड्भिर्यतिः । यथा –

[1]धराभारं बिभ्रल्लीलया बाहुदण्डे,
जयत्येष श्रीमानूर्जितः क्षोणिनाथः ।
भुजंगीभिर्गीतैरुज्ज्वलैर्यद्यशोभिर्,
बभूव प्रोद्दामैश्चन्द्रिणी नागभूमिः ॥ २०४.१ ॥

**नौ यौ गश्चन्द्रिका ॥ २०५ ॥**

ननरयगाः । यथा –

[2]निखिलकुवलयप्रपञ्चितानन्दा,
परिणतशरकाण्डपाण्डुरच्छाया ।
इह जगति चुलुक्यचन्द्र निस्तन्द्रा,
प्रसरति तव कीर्तिचन्द्रिका नित्यम् ॥ २०५.१ ॥

**ज्तौ स्जौ गो मञ्जुभाषिणी ॥ २०६ ॥**

जतसजगाः । यथा –

[3]नरेन्द्र रुष्टे त्वयि महीभुजां मतिर्,
नवे पृषच्चर्मणि न चित्रवर्मणि ।
कटु क्वणन्ती लुठति शृङ्खला पद-,
द्वये न कान्तानुनयमञ्जुभाषिणी ॥ २०६.१ ॥

**न्सौ रौ गश्चन्द्रलेखा ॥ २०७ ॥**

नसररगाः । यथा –

सुभगसुखदं मोहजालं जनानां,
हृदयहरणं बन्धनं लोचनानाम् ।
सुललितवपुः सा सखे पीयते ते,
[4]विरहतमसा चन्द्रलेखेव तन्वी ॥ २०७.१ ॥

**न्सौ जौ गो लयः ॥ २०८ ॥**

नसजजगाः । यथा –

त्वमसि शरणं प्रसीद जगत्पते,
वितर सुतरां ममेह समीहितम् ।
चरणकमले जिनेश्वर तावके,
भवतु मनसश्चिरं परमो लयः ॥ २०८.१ ॥

---

1) धराभारमित्यत्र चन्द्रिणी चन्द्राः सन्त्यस्यां इति चन्द्रिणी । 2) निखिलकुवलयेत्यत्र कुवलयेति – पृथ्वीमण्डलं चन्द्रविकाशिकमलं च । निस्तन्द्रेति – सोल्लासा । 3) नरेन्द्र रुष्टे इत्यत्र पृषच्चर्मणीति – नूतनहरिणचर्मणि मतिरासीत् । व्रतग्रहणेच्छेति भाव. । चित्रवर्मणीति – बहुविधवर्णसन्नाहे । 4) विरहतमसेति – विरहराहुणा ।

**न्सौ तौ गो विद्युन्मालिका ॥ २०९ ॥**

नसततगाः । यथा –

[1]घनतमसि नष्टान् द्रष्टुमत्र[1] क्षणे,
निखिलपथिकान् संहारबुद्ध्या ध्रुवम् ।
वत परिगृहीताः प्रावृषा दीपिकाः,
स्फुरित[2]रुचिविद्युन्मालिकाव्याजतः ॥ २०९.१ ॥

**स्जौ स्जौ गो नन्दिनी ॥ २१० ॥**

सजसजगाः । यथा –

वसुधाधिपत्यमिह देव नार्थये,
जिननाथ नापि पुरुहूतसंपदम् ।
वरदोऽसि चेन्मम[3] तदा सदा मतिर्,
भवताद् भवद्गुणगणाभिनन्दिनी ॥ २१०.१ ॥

**कनकप्रभा, जया, सुमङ्गलीति च केचिदाहुः । मनोवतीति भरतः ॥ २१०.१ ॥**

**न्जौ न्सौ गो मदललिता ॥ २११ ॥**

नजनसगाः । यथा –

कलितकलङ्कशितिसिचयसंपत्,
करदलितेद्धतिमिरयमुनाम्बुः ।
प्रथयति गौरवपुरसृतरश्मिर्,
मुशल[4]धरस्य [2]समदललितानि ॥ २११.१ ॥

**स्जौ सौ गः कुटजम् ॥ २१२ ॥**

सजससगाः । यथा –

परमं प्रकर्षमधिरुह्य विदध्यात्
किमिव प्रवासविषमस्थितिभाजाम् ।
कुरुते यतः प्रथमतोऽपि[5] [3]घनर्तुः
कुटजप्रसूनरजसा जगदन्धम् ॥ २१२.१ ॥

भ्रमर इत्य[6]न्यः ॥ २१२.१ ॥

---

1) घनतमसीति – निविडान्धकारे । पक्षे घनस्य मेघस्य दुर्दिनम् । क्षणे इति – वर्षालक्षणकाले । ध्रुवमिति – शङ्के । बतेति – निन्दायाम् । व्याजत इति – च्छलात् । 2) समदललितेति – विलासक्रीडितानि । 3) घनर्तुरिति – मेघागम. ।

---

१ अत्रेक्षणे N. २ स्युरिह रुचि N ३ मम न तदा A. ४ मुसल० P. ५ प्रथमतो घनकाल' A. ६ भ्र० अन्य. dropped in B.

**नौ त्सौ गो गौरी ॥ २१३ ॥**

**ननतसगाः । यथा –**

ननु भव कुसुमेषो निशितशस्त्रस्[1]
तृणमसि यतिनोऽस्य प्रशमवृत्तेः ।
क्वचिदपि खलु तेऽन्ये मनसि येषां
निवसति [1)]मृगनेत्रा कनकगौरी ॥ २१३.१ ॥

**त्भौ स्जौ गो लक्ष्मीः ॥ २१४ ॥**

**तभसजगाः । यथा –**

विद्वद्गणैरुचितमुदीर्यते सदा
सिद्धेशनन्दन पुरुषोत्तमो भवान् ।
यत्त्वां स्वयंवरविधिनाभ्युपेयुषी[2]
लक्ष्मीरियं [2)]रणमकराकरोत्थिता ॥ २१४.१ ॥

**त्भौ जौ गो अभ्रकम् ॥ २१५ ॥**

**तभजजगाः । यथा –**

[3)]अभ्यस्यतीव रसवादकलामयं
सान्ध्यैः[3] क्षणोऽभिमतचन्द्रमहोदयः ।
तारौषधिप्रकटनाभिरतः सखे
प्रोदीपयन् विविधवर्णमिहाभ्रकम् ॥ २१५.१ ॥

**म्तौ स्रौ गः कोद्दुम्भो[4] ङैः ॥ २१६ ॥**

**मतसरगाः । ङैरिति पञ्चभिर्यतिः । यथा –**

लक्ष्मीः[5] कान्ताभिर्विकचनेत्रोत्पलाभिस्
ताम्बूलं[6] पत्रैः [4)]परिणतैर्वानवासैः ।
काव्यं कोद्दुम्भाभिधनवच्छन्दसेदं[7]
चेतोहारित्वं भजति वैदग्ध्यभाजाम् ॥ २१६.१ ॥

1) मृगनेत्रेति – मृगस्य नेत्रे इव नेत्रे यस्याः सा मृगनेत्रा । 2) रणमकराकरोत्थितेति – संग्रामसमुद्रसमुत्थिता । 3) अभ्यस्यतीवेत्यत्र इवोत्प्रेक्षायाम् । सन्ध्यानमयः सुवर्णपातनकलां शीलतीव । कथंभूतः चन्द्रस्य महानुदयो यत्र सः । पक्षे चन्द्रं सुवर्णम् । ताराः तारकाः, ओषधयस्तासां प्रकटनेऽभिरत । पक्षे तार रूप्यं ओषधिः । पुनः कथंभूतः अभ्रकं मेघं विविधवर्णं कुर्वन् । पक्षे स्वच्छपत्रमिति । 4) परिणतैरिति – पक्वैः ।

१ शस्त्र तृणमसि A, शस्त्रस्तृणमयि N २ नात्युपेयुपी A ३ सान्ध्यक्षणो ABFP ४ कोट्टम्भो N, कोट्टुभो H; कोट्टुंभो F, कोदुंभो G ५ लक्ष्मी का० A ६ ताम्बूलपत्रै N. ७ कोट्टंभाभिध N कोट्टुभाभिध F

**स्यौ स्जौ गः सुदन्तम् ॥ २१७ ॥**

सयसजगाः । यथा –

त्रिदिवं व्रजद्भिर्दिविषत्पतेः[1] पुरः
सुभटैर्जवान्निर्दलिता इवार्गलाः ।
करवालघातैस्त्रुटितास्तदा समिद्-
वसुधासु दन्ताः करिणां चकाशिरे[2] ॥ २१७.१ ॥

**नौ स्नौ गः कमलाक्षी ॥ २१८ ॥**

यथा –

[2]विरचितनिविडतरोत्कलिकाभिः
कमिव नवमदजुषं न विदध्युः ।
सपदि शरदि सरितः कलहंस-
प्रकटितगतिललिताः कमलाक्ष्यः ॥ २१८.१ ॥

**नौगौ त्वरितगतिः ॥ २१९ ॥**

नगणचतुष्टयं गुरुश्च । यथा –

[3]नृवर तव धनुरधिगतगुणं[3]
ध्वनति च युधि भयवशतरला ।
कलयति च पिचुनिचयतुलनां
त्वरितगतिररिनृपतिपृतना ॥ २१९.१ ॥

**लघुगतिश्चपला वेत्यन्ये[4] ॥ २१९.१ ॥ १३।२६ ॥**

**शक्वर्यां नौ स्नौ ल्गावपराजिता छैः ॥ २२० ॥**

ननरसलगाः । छैरिति सप्तभिर्यतिः । यथा –

[4]शशधरवदनं कुशेशयलोचनं
शुचिरुचिरुचिरं ललाटतटस्थितम्[5] ।
विशदकरुणयाधिवासितमृद्वयो
जिनमनुसरतां भवन्त्यपराजिताः ॥ २२०.१ ॥

1) दिविषत्पतेः पुर इति – इन्द्रनगरस्येति भाव. । समिद्वसुधेति – संग्रामधरणिषु । 2) विरचितेत्यत्र रणरणकैर्वीचिभिश्च । कलहंसैः पक्षे कलहंसवत् । कमलान्येवाक्षीणि यासां ताः । नदीविशेषणेन कमलाक्षीपदेन स्त्रियोऽप्याकृष्टाः । 3) नृवर तवेति – चकारद्वयं ध्वननकलनयोस्तुल्यकालताद्योतनार्थम् । पिचुशब्देन तूलम् । 4) शशधरवदनमित्यत्र भो भव्याः जिनं अनुसरतां पुंसां संपदोऽन्यापराजिता भवन्ति । कं चन्द्रवदनं कमलनयनम् । पु० कं ललाटेति – तदाज्ञागिरसाङ्गीकरणात् करुणाभाविनम् ।

१ गं A  २ चकासिरे AP  ३ अधिगगुणं A.  ४ चेत्यन्ये DFP  ५ स्थितिं B

**म्सौ म्भौ गावलोला ॥ २२१ ॥**

**मसमभगगाः । छैरिति वर्तते । यथा –**

आत्मारामपदैकव्यापाराभिरतानां,
संसाराब्धिरगाधस्तेषां गोष्पदमात्रम्[1] ।
अन्तस्तत्त्वसमाधेः प्राणायामनिरोधान्,
नासावंशनिपण्णा येषां दृष्टिरलोला ॥ २२१.१ ॥

**नौ भ्नौ ल्गौ प्रहरणकलिता ॥ २२२ ॥**

**ननभनलगाः । छैरिति वर्तते । यथा –**

[1]तव गुणनिकरैरपि दृढविपुलैर्,
अहितसमुदयः सपदि नियमितः ।
नरपतितिलक त्वमिह भुजलतां,
प्रथयसि किम[3]सिप्रहरणकलिताम् ॥ २२२.१ ॥

**नौ म्यौ ल्गौ करिमकरभुजा ॥ २२३ ॥**

**ननमयलगाः । छैरिति वर्तते । यथा –**

[2]रणभुवि नृपते निस्त्रिंशदण्डेन ते,
रिपुभटकरटिग्रोन्माथिना जृम्भितम् ।
जलनिधिजठरे पाठीनकूर्मावली-,
करिमकरभुजौर्वेणेव तेजस्विना ॥ २२३.१ ॥

**नौ तौ गौ वसन्तः ॥ २२४ ॥**

**ननततगगाः । छैरिति वर्तते । यथा –**

[3]सखि भवति भवच्छुपगण्डूपपाद-,
प्रतिहतिभिरियं यत्प्रसूनप्रसूतिः ।
कुरवकबकुलाशोकमुख्यद्रुमाणां,
तदिह ननु तवायत्तसंपद् वसन्तः ॥ २२४.१ ॥

नन्दीमुखीत्येके ॥ २२४.१ ॥

**म्रौ तौ गौ लक्ष्मीः ॥ २२५ ॥**

**मरततगगाः । छैरिति वर्तते । यथा –**

---

1) तव गुणेत्यत्र यदि त्वद्गुणैरेव वैरिसमूहो बद्धः तदा किं त्वं सखड्गां भुजलतां ख्यातिं प्रापयसि गुणैरेव कार्यसंपादकत्वात् । 2) रणभुवीत्यत्र करटिन् हस्तिन् । समुद्रमध्ये मत्स्यविशेपकच्छपश्रेणिगजमत्स्य-भुजा वडवानलेनेव । 3) सखि भवनि इत्यत्र त्वदालिङ्गनसुखेन ताम्बूलच्छटादानात् पादप्रहारात् प्रत्येकं कुरबकबकुलाशोकाः पुष्पादिभाजो भवन्ति ।

---

१ गो. पद० B २ नागावग ABP ३ किमपि प्रह० A. ४ रिपुतट० A. ५ the word is dropped in B and P. ६ कुरुवक P.
७ छन्दो०

[1]मामद्वैतानुरागां मन्यतेऽसौ तृणाये-,
त्येवं दौर्भाग्यदुःखोन्मूलनं चिन्तयन्ती ।
मन्ये त्वत्खड्गधारां तद्व्रतं कर्तुकामा,
कामं सिद्धेन्द्र[1]सूनो सेवते राजलक्ष्मीः ॥ २२५.१ ॥

**मो रौ सो ल्गौ जया ॥ २२६ ॥**

**मररसलगाः ।** छैरिति वर्तते । यथा –

[2]माद्यद्गन्धद्विपानां लसद्दशनाग्रनि-,
क्रीडाघातैः समन्ताद् विदारितसानवः ।
यस्योच्चैः सह्यविन्[2]ध्योज्जयन्तहिमालयाः,
शैलाः शंसन्ति सम्प्रत्यपीह दिशां जयान् ॥ २२६.१ ॥

**म्र्म्यल्गा ज्योत्स्ना ॥ २२७ ॥**

**मरमयलगाः ।** छैरिति वर्तते । यथा –

दृप्यत्पातालकुक्षौ स्फूर्जद्गुहायां गिरेर्,
मूर्च्छेत्कान्तारमध्ये भूपाल घोरं तमः ।
नागीना किंनरीणां पौलिन्द्वामभ्रुवां,
क्रीडागानेपु कीर्तिज्योत्स्नाऽधुना हन्ति ते ॥ २२७.१ ॥

**न्म्रस्ल्गाः सिंहः ॥ २२८ ॥**

**नमरसलगाः ।** छैरिति वर्तते । यथा –

समदनागेन्द्राणां कपोलविपाटने,
स किल सद्योऽजिघ्रत् प्रियावदनाम्बुजम् ।
तदिति शं[3]क्यं चित्रं चरित्रमहाद्भुतं,
हरिणपोतैर्द्रष्टुं न सिंहविजृम्भितम् ॥ २२८.१ ॥

**ज्सौ र्नौ गौ राजरमणीयम् ॥ २२९ ॥**

**जसरनगगाः ।** छैरिति वर्तते । यथा –

[3]समुद्धृतधरित्रीतलः प्रमुदितौ[4]र्यो,
विनम्रतरधाराधरानुसृतपादः ।

1) मामद्वैतेत्यत्र चिन्तयन्तीति – ध्यायन्ती । सिद्धेन्द्रसूनो हे कुमारपाल ! राजलक्ष्मीरिति – एतावता त्वत्खड्गे जयश्रीरिति भाव. । 2) माद्यद्गन्धेत्यत्र अशनिर्वज्रम् । सानव· पुंनपुंमका· कूटानि । शंसन्ति सूचयन्ति । 3) समुद्धृतधरित्रीत्यत्र शैलाधिराजवत् रमणीयत्वेन शोभसे । कथम् । समुद्धृतेति समानं विशेपणम् । पु० आर्या गौरी, आर्याः सावच. । धाराधरा मेघा. । पक्षे नरवर्मराजश्च । तैस्तेन वा अनुसृताः पादाः पर्यन्तपर्वताः । त्रिपथगामिति – स्वर्गमर्त्यपातालगामिनीं गङ्गां च ।

१ सिद्धेन्द्रस्तं नो N. २ वन्ध्यो० P. ३ शंक्यं N. ४ प्रमुदितार्थौ A.

चुलुक्यनृप कीर्तिं दधत्रिपथगां त्वं,
विभासि खलु शैलाधिराजरमणीयः ॥ २२९.१ ॥

**म्तौ न्सौ गावसंबाधा ङैः ॥ २३० ॥**

**मतनसगगाः** । ङैरिति पञ्चभिर्यतिः । यथा—

[1]नैतल्लक्ष्माङ्के किमुत कटुरसं बाधा-,
हेतुः संलीनं विषमिह सहजप्रीत्या ।
तेनायं मूर्च्छां विरचयति सुधारश्मिः,
शङ्के निःशङ्कः सपदि विरहिलोकानाम् । २३०.१ ॥

**त्भौ जौ गौ वसन्ततिलका ॥ २३१ ॥**

**भजजगगाः** । यथा—

[2]सत्कर्णिकारचितविभ्रमभासमानां,
नव्यस्फुरद्रुचिरपत्रलतावलीकाम् ।
दिष्ट्या वसन्त तिलकाञ्चितचारुशोभां,
कान्तां वनश्रियमिमां त्वमुपागतोऽसि ॥ २३१.१ ॥

उद्धर्षिणी सैतवस्य । सिंहोन्नता[1] काश्यपस्य ॥ २३१.१ ॥

**र्नौ भौ गौ वलना ॥ २३२ ॥**

**रनभभगगाः** । यथा—

[3]नव्ययौवननटस्य तनोति नियोगं,
निश्चितं वरतनुर्विकसन्मुखरागा ।
हस्तकैरभिनयं कुरुते भ्रुवती यद्,
व्यश्नुतेऽङ्गवलनादि पदे पद एषा ॥ २३२.१ ॥

लतेत्यन्ये[2] ॥ २३२.१ ॥

**न्रन्रल्गाः सुकेसरम् ॥ २३३ ॥**

**नरनरलगाः** । यथा—

[4]घटयसे[3] ज्यया किमिति काम कार्मुकं,
यदभवत् पुरस्तव जगद् वशंवदम् ॥
मधुकरीनिनादमयमन्त्रमन्त्रितैर्,
जलरुहां सुकेसरपरागचूर्णकैः ॥ २३३.१ ॥

---

1) नैतल्लक्ष्माङ्के किमुतेत्यत्र सहजप्रीत्येति—उभयोः समुद्राज्जातत्वात् बान्धवत्वम् । 2) सत्कर्णिका-रेत्यत्र कर्णिका कर्णिकाभरणं पक्षे कर्णिकारा वृक्षास्तत्र चिता मिलिता ये वयः पक्षिणस्तेषां भ्रमः । पक्षे विभ्रमो विलासः । पत्रलता पीअलिवलि उदरस्था त्रिवली । पक्षे पल्लवानां आवली । तिलको वृक्षविशेषः । पक्षे पुण्ड्रं च । कान्तां प्रियां मनोज्ञाम् । 3) नव्ययौवनेत्यत्र व्यश्नुते भजते । 4) घटयसे ज्ययेत्यत्र अन्यत्रापि वशीकरणं अभिमन्त्रितचूर्णकैर्भवतीत्यर्थः ।

---

१ सिंहोद्धता P. २ अन्ये A ३ घटयेज्यया N

**नीश् गावुपचित्रम् ॥ २३४ ॥**

नीरिति नगणाश्चत्वारो गद्वयं च । यथा –

[1]अनुसर हिमकरकिरणसमूहं,
भज नवकिसलयमृदुशयनीयम् ।
प्रियसखि ननु शरदियमुपतस्थे,
यदभिसरति दिनपतिरुपचित्रम् ॥ २३४.१ ॥

**न्जभ्जल्गा धृतिः ॥ २३५ ॥**

नजभजलगाः । यथा –

[2]विहर नितम्वविम्वफलके सुदृशां,
गतनिधनानि संचिनु धनानि भृशम् ।
रचय चिरं च सुन्दरनराधिपतां,
तदपि न किंचनास्ति तव चेन्न धृतिः ॥ २३५.१ ॥

**मणिकटकमित्यन्ये[1] ॥ २३५.१ ॥**

**भौ रस्ल्गा दर्दुरकः ॥ २३६ ॥**

भभरसलगाः । यथा –

[3]मृत्युमुपैति यदा यदा कणशो दल-,
त्येष तदापि न हन्त विश्वसनोचितः ।
कालमवाप्य पुनर्जनश्रवणज्वरं,
दुर्जनदर्दुरकः करोति कटूक्तिभिः ॥ २३६.१ ॥

**भ्जस्नाद्गौ स्खलितम् ॥ २३७ ॥**

भजसनेभ्यः परौ गौ । यथा –

[4]पुष्पशररम्यतनुता सलवणत्वं,[2]
वाङ्मधुरता चतुरता वहुकलत्वम् ।
सर्वमपि चास्य सुभगस्य रतये मे,
केवलमिदं व्यथयति स्खलितगोत्रम्[3] ॥ २३७.१ ॥

**महिता, कान्ता, वनमयूरश्चेत्यन्ये ॥ २३७.१ ॥**

1) अनुसरेत्यत्र उपचित्रमिति – चित्रायाः समीपं उपचित्रम् । 2) विरह(हर) नितम्वविम्वेत्यत्र बिम्व-शब्दः शोभार्थं ततो नितम्वविम्वमेव फलकं विपुलत्वात् । 3) मृत्युमुपैतीत्यत्र कणश इति कणेन कणेन इत्यर्थे वीप्सायां शस् । विश्वसनोचितः विश्वासाय नो युक्त. । अवाप्येति – प्राप्य । जनकर्णज्वरं कटु कठिन – वाग्भिः । 4) पुष्पशररम्येत्यत्र सखी प्रति सखी प्राह – सर्वं एतस्य सुभगस्य रतये प्रीतयेऽस्ति । केवलं परस्त्रीनामग्रहणं पीडयति नान्यत् ।

१ after this F reads स्जौ स्यौ ल्गौ भानुपथ्या. २ सलवणत्वं N. ३ स्खलितगोत्रः P.

**ल्गौ चेदिन्दुवदना ॥ २३८ ॥**

भजसनेभ्यः परौ लघुगुरू चेदिन्दुवदना । यथा –

[1] सस्पृह इव त्वयि रतेरपि दयितस्,
त्वद्वदनवीक्षणवशाद् गलितधनुः ।
ताडयति नेप भवतीं शरनिकरैर्-,
इन्दुवदने न रमणे तदसि रता ॥ २३८.१ ॥

**न्भन्ता गौ शरभललितम् ॥ २३९ ॥**

नभनतगगाः । यथा –

[2] वहसि गन्धकरटिघटां पृष्ठदेशे,
कररदैः प्रहरसि च मत्ताम्बुवाहे ।
दलयसि क्षितिधरशिरःपादपातैर्,
इदमहो शरभ ललितं ते न यत्नः ॥ २३९.१ ॥

**तच्छरभा घचैः ॥ २४० ॥**

तच्छरभललितं घचैश्चतुर्भिः षड्भिश्चेद्यतिः शरभासंज्ञम् । यथा –

मृगरिपुः शशकतुलनां यत्पुरस्तात्,
कलयति द्विरददलनव्यक्तकेलिः ।
[3] तव सुतः स इह शरभोऽनन्यवीरः,
सुतवती ननु शरभिके त्वं तदेका ॥ २४०.१ ॥

**म्भन्या गौ कुटिलम् ॥ २४१ ॥**

मभनयगगाः । घचैरिति वर्तते । यथा –

[4] श्रीचौलुक्यक्षितिपतिलक दिग्यात्रार्थं,
त्वत्सैन्येऽस्मिन् प्रसरति किल पातालेन्द्रः ।
न्यञ्चद्भूमीभरकुटिलितमूर्ध्रा मन्ये,
साहाय्यार्थं रचयति भुजदण्डानुच्चैः ॥ २४१.१ ॥

**हंसश्येनीत्येके ॥ २४१. ॥ १४।२२ ॥**

**अतिशक्वर्यां स्जसस्या ऋषभः ॥ २४२ ॥**

सजससयाः । यथा –

1) सस्पृह इवेत्यत्र गलितधनुरिति – उकारान्तोऽप्यस्ति धन्वन् शब्दः । 2) वहसि गन्धेत्यत्र करसहिताः रदाः । अन्यथा प्राणितूर्याङ्गाणामिति सूत्रेण समाहृतिः स्यात् तथा नपुंसकता एकवचनं च स्यात् । यत्नः प्रयासः । 3) तव सुत इत्यत्र न विद्यते अन्यो वीरो यस्मात्सोऽनन्यवीरः । 4) श्रीचौलुक्येत्यत्र साहाय्यार्थं भुजदण्डस्य उच्चैःकरणं शङ्काया. ।

१ लगौ A. २ गन्धकरिघटा E. ३ न तु N. ४ कुटिल घचै G. ५ मूर्धा FN.

[1]जगतां विभुः पृथुजटापिहितांसदेशः[1],
सततं महर्षिगणसेवितपादपद्मः ।
मकरध्वजप्रमथनप्रथितप्रभावः,
ऋषभध्वजः स भगवान् भवतोऽस्तु भूत्यै ॥ २४२.१ ॥

**नीसौ शशिकला ॥ २४३ ॥**

**नीरिति नगणाश्चत्वारः सश्च । यथा–**

[2]अरतिमति हि मम वपुषि विदधतीं,
तिरयसि यदि नवजलद शशिकलाम् ।
स्वयमपि किमिति न कलयसि करुणां,
यदिह विरचयसि कटु रसितमहो ॥ २४३.१ ॥

**अत्र सप्तभिर्यतिरित्येके । चन्द्रावर्तेति पिङ्गलः ॥ २४३.१ ॥**

**सा स्रक् चैः ॥ २४४ ॥**

**सा शशिकला चैः षड्भिर्यतिश्चेत् स्रक्संज्ञा । यथा–**

प्रसरति तव सुभग विरहदहने,
शृणु यदजनि किमपि कुवलयदृशः[2] ।
सरसिजमपि तपति नवविचकिल-,
स्रगपि सपदि जनयति भृशमरतिम् ॥ २४४.१ ॥

**मालेति पिङ्गलः ॥ २४४.१ ॥**

**मणिगुणनिकरो जैः ॥ २४५ ॥**

**शशिकलैव जैरष्टभिश्चेद्यतिर्मणिगुणनिकरः । यथा–**

[3]नृवर यशसि मतिरविकलकलता,
भुजबलमनुपममतिनयपरता ।
नतिरनुगुरुजनमुचितचतुरता,
त्वयि जयति नृपतिमणिगुणनिकरः ॥ २४५.१ ॥

**नौ म्यौ यो मालिनी ॥ २४६ ॥**

**ननमययाः । जैरिति[3] वर्तते । यथा–**

प्रतिमुहुरिह[4] दोलान्दोलनव्यापृतानां,
कुवलयनयनानामाननैरुल्लसद्भिः ।

1) जगतामित्यत्र विभुर्व्यापकः स्वामी च । महर्षिगणेति–महर्षयः सप्तर्षयः । गणाः प्रमथादयः। ऋषभध्वज आदिदेव ईश्वरश्च । 2) अरतिमित्यत्र अति हि इति–अतिशयेनेत्यर्थेऽखण्डमव्ययम् । कटुरसितमिति–कठिनगर्जारवम् । 3) नृवर यशसीत्यत्र नृपमणयः प्रधानराजानः । 4) इहेति–वसन्ते। व्यापृतानामिति–व्याक्षिप्तानाम् । द्यौः आकाशः ।

१ पिहिताश० N. २ दृशा A. ३ इति पाश्चात्यच्छन्दसोनुवर्तते E.

विमललवणिमाम्भश्चन्द्रिकां द्राक्[1] किरद्भिर्,
नवशशधरमालामालिनीवाभवद् द्यौः ॥ २४६.१ ॥
नान्दीमुखीति[2] भरतः ॥ २४६.१ ॥

**नौ मो रौ चन्द्रोद्द्योतः ॥ २४७ ॥**

**ननमररा: । जैरिति वर्तते । यथा–**

[1]ज्वलति सुभग तस्यास्त्वद्विप्रयोगानले,
भवति न खलु किंचित् प्रीत्यै कुरङ्गीदृशः[3] ।
सपदि दहति देहं यच्चान्दनोऽपि द्रवः,
प्रथयति नवचन्द्रोद्द्योतोऽपि नेत्रव्यथाः[4] ॥ २४७.१ ॥

**नौ तभ्रा उपमालिनी ॥ २४८ ॥**

**ननतभरा: । जैरिति वर्तते । यथा–**

[2]नृपवर रिपवस्ते विहाय पुरस्थितिं,
नवनवमुनिमुद्राजुषः खलु संप्रति ।
विदधति तृणपर्णोटजान्यभिजाह्नवी-,[5]
यमुनमनु च चर्मण्वतीमुपमालिनि ॥ २४८.१ ॥

**मिर् यौ चित्रा ॥ २४९ ॥**

**मिरिति मगणत्रयं यगणद्वयं च । जैरिति वर्तते । यथा–**

[3]शत्रौ मित्रे हर्म्येऽरण्ये समदे वा गदे वा,
राज्ये भैक्षे[6] रत्ने लोष्टे काञ्चने वा तृणे वा ।
स्रोतस्विन्यां[7] कामिन्यां वा निन्दने वा स्तुतौ वा,
**चित्रां** चित्तावस्थां हित्वा संश्रयेथाः समाधिम् ॥ २४९.१ ॥
मण्डूकी, चञ्चला वेत्यन्ये[8] ॥ २४९.१ ॥

**माद्रम्ययाश्चन्द्रलेखा छैः ॥ २५० ॥**

**मगणात्परे रमयया: । छैरिति सप्तभिर्यतिः । यथा–**

[4]राजन् सत्यं तदेतद् ब्रूमोऽद्भुतं वर्णनं ते,
दोर्दण्डस्थामभिः स स्पर्धां करोतु त्वदीयाम् ।
आच्छिन्द्याद्यो[9] मुरारेर्वक्षःस्थलात् कौस्तुभं वा,
यः कर्पेच्चन्द्रलेखां शंभोर्जटामण्डलाद्वा ॥ २५०.१ ॥

**राद्वा ॥ २५१ ॥**

1) ज्वलति सुभगेत्यत्र भवद्वियोगाग्नौ । प्रीत्यै सतोषायेति । नवचन्द्रोद्द्योत–इति ज्योत्स्ना ।
2) नृपवरेत्यत्र मालिनी नदीविशेषस्तस्याः समीपम् । 3) शत्रौ मित्रे इति–संमदे हर्षे । गदे रोगे ।
4) राजन् सत्यमित्यत्र आच्छिन्द्यादिति – हठेन गृह्णाति । मुरारेर्विष्णोः ।

१ द्रात् N २ नान्दीमुपीति O. ३ कुरङ्गदृश A ४ नेत्रव्यथात् A, नेत्रव्ययाम् P. ५ नृपपर्णोट० N. ६ भैक्ष्ये OP. ७ श्रोत० AB. ८ चेलन्ये FP. ९ आच्छियाद्यो N.

रगणात्परे यदि रम्ययास्तदा वा चन्द्रलेखा । ररमयया: । छैरिति वर्तते । यथा –

[1]एक एव क्षणोऽसावानन्दनिष्यन्दहेतुः,[1]
सत्कृतैः प्राक्तनैर्मे कैश्चित् सखेऽद्य प्रबुद्धम् ।
नेत्रनीलोत्पलानां पीयूषवृष्टिं किरन्ती,
यत्पुरः कम्बुकण्ठी सा चन्द्रलेखेव दृष्टा ॥ २५१.१ ॥

**स्जनन्या एला डैः ॥ २५२ ॥**

सजननयाः । डैरिति पञ्चभिर्यतिः । यथा –

[2]चलितैर्घटोद्भवमुनिदिशमभि[2] यस्य,
प्रबलैर्बलैर्बलमथनसदृशमूर्तेः[3] ।
[4]निषिषेविरे चिरमुदधितट[3]वनान्ताः,
परितो लसद्वहलवलिबकुलैलाः ॥ २५२.१ ॥

**[4]न्जभ्जाः प्रभद्रकम् ॥ २५३ ॥**

नजभजराः । यथा –

[5]जयति जगत्त्रयोपकृतिकारणोदयो,
जिनपतिभानुमान् परमधाम तेजसाम् ।
भविकसरोरुहां गलितमोहनिद्रकं,
भवति यदीयपादलुठनात् प्रभद्रकम् ॥ २५३.१ ॥

**र्जर्जरास्तूणकम् ॥ २५४ ॥**

रजरजराः । यथा –

[6]स्फीतनव्य[5]गन्धलुब्धषट्पदौघसेविताश्-,
चैत्रमासि पश्य भान्ति चूतमञ्जरीशिखाः ।
ऊर्ध्वदृश्यमानकङ्कपत्रकृष्णपक्षकास्[6],
तूणका इवेह वीरमन्मथेन लम्बिताः ॥ २५४.१ ॥

**नो जौ भ्रौ कलभाषिणी ॥ २५५ ॥**

नजजभराः । यथा –

[7]स्फुरति च दक्षिणमारुतो मृदुशीतलः,
प्रतिदिशमुल्लसितं च केसररेणुभिः ।

1) एक एव क्षण इत्यत्र यत् यस्मात् कारणात् । पुरोऽग्रे । 2) चलितैर्घटोद्भवेति – अगस्त्यदिशं दक्षिणामभि अभिलक्ष्यी कृत्येति भावः । 3) इन्द्रतुल्यमूर्तेः । 4) सेविता इति । 5) जयति जगत्त्रयेत्यत्र प्रकृष्टं भद्रं प्रभद्रं तदेव स्वार्थे के प्रभद्रकम् । 6) स्फीतनव्येत्यत्र ऊर्ध्वं दृश्यमानाः कङ्कपत्राणां बाणानां कृष्णाः पुङ्खका येषु ते । 7) स्फुरतीत्यत्र मित्रं प्रति मित्रं प्राह । उल्लसितं प्रसृतम् । पिक[युवतेः] कोकिलस्त्रियाः । प्रसृता व्याप्ता । प्रियेति – वल्लभा ।

१ निस्पन्द० N २ वलितै N ३ उदतट N. ४ नजभज्रा. GHP. ५ भव्य० A. ६ कृष्णपुङ्खका० ABFP.

पिकयुवतेः प्रसृताश्च पञ्चमगीतयस्,

तदपि सखे मयि न प्रिया कलभाषिणी ॥ २५५.१ ॥

अरविन्दमित्येके ॥ २५५.१ ॥

**रान्नभभ्राः सुन्दरम् ॥ २५६ ॥**

रगणात्परे नभभराः । यथा –

[1]निर्ममे सपदि पत्रलता न कपोलयोर्,

नापि यावकरसो निहितोऽधरपल्लवे ।

वल्लभाभिसरणोत्सुकया सुदृशानया,

सुन्दरत्वमधिकं तदपि प्रतिपद्यते ॥ २५६.१ ॥

मणिभूषणं, रमणीयं चेत्येके ॥ २५६.१ ॥

**नाद्गौः ॥ २५७ ॥**

नगणात्परे नभभाश्चेत्तदा गौर्नाम । ननभभराः । यथा –

[2]अनुदिनमपि हन्त दुहन्ति कवीश्वरास्,

त्रुटति न च यदीयसदुक्तिपयः शुचि ।

हृदयमुकुरमध्यमधिश्रयतां सदा,

निरुपमचरितप्रथिता मम सैव गौः ॥ २५७.१ ॥

**नौ रो यौ भोगिनी ॥ २५८ ॥**

यथा –

[3]दधति तव चुलुक्यचन्द्र धात्रीं भुजेऽस्मिन्,

भजतु जलनिधौ चिराय निद्रामुपेन्द्रः ।

विदधतु दिगिभाः करेणुकाभिर्विलासं,

सममभिरमतां च वासुकिर्भोगिनीभिः ॥ २५८.१ ॥

**तजसस्याः शिशुः ॥ २५९ ॥**

तजससयाः । यथा –

[4]त्वं नासि दृशोः पथि विमुक्त तथापि नाथ,

पापं भुवने तव गिरो जिन नाशयन्ति ।

1) निर्ममे सपदीत्यत्र यावकेति – अलक्तकरसः । अधरपल्लवे – स्त्रियः अधरं शोभार्थं अलक्तकरसेन सिञ्चन्ति । भर्त्रभिगमनव्याकुलतया अङ्गीक्रियते । 2) अनुदिनमपीति [अत्र] हन्तेति – कोमलामन्त्रणे । दुहन्ति दोहनं कुर्वन्ति । मुकुरेति – आदर्शमध्यम् । गौरिति – धेनुर्वाक् च । 3) दधति तव चुलुक्येत्यत्र उपेन्द्रः कृष्णः । दिगिभाः दिग्हस्तिनः । वासुकिः शेषनागः । 4) त्वं नासि दृशोरित्यत्र विमुक्तेति – वि विशेषेण कर्मणो मुक्तो विमुक्तस्तत्संबोधनम् । ध्वनितेनेति – शब्देन ।

१ सुन्दरीत्वं N. ४ तुटति N. २ मध्यामधि० N. ३ तजससा P.
८ छन्दो०

त्रस्यन्ति हि शैलशिखरान्तरितस्य दूरात्,
लीलाध्वनितेन मृगराजशिशोर्गजेन्द्राः ॥ २५९.१ ॥

**भ्यसस्याः केतनम्[1] ॥ २६० ॥**

भयससयाः । यथा —

[1]कोकिलवधूनां कलपञ्चमरागगीतिश्,
चूतविटपानां नवपल्लवसंपदश्च ।
दक्षिणसमीरो मृगशावदृशां कटाक्षाः,
बिभ्रति हि जैत्रायुधतां झषकेतनस्य ॥ २६०.१ ॥

**त्भौ जौ रो मृदङ्गः ॥ २६१ ॥**

तभजजराः । यथा —

कृत्वा जगत्त्रयजयं मकरध्वजप्रभुः,
संगीतकं सपदि कारयते रतेः पुरः ।
आकाशरङ्गभवने नरिनर्ति नर्तकी,
विद्युद्, घनर्तुरपि [2]मेघमृदङ्गवादकः ॥ २६१.१ ॥

**म्नुः कामक्रीडा ॥ २६२ ॥**

म्नुरिति पञ्च मगणाः । यथा —

उक्ता वाचं नो दत्ते तल्पे शेते व्यावृत्ताङ्गी,
[3]पर्याक्षिप्तक्षौमप्रान्ता प्रस्थातुं काङ्क्षत्याशु ।
कामक्रीडावार्तागोष्ठीप्रारम्भेऽप्युच्चैर्व्रीडां,
धत्ते पत्युः प्रीत्यै वामारम्भाप्येवं सा बाला ॥ २६२.१ ॥ १५।२१ ॥

**अष्टौ नज्रा भौ गो मणिकल्पलता ॥ २६३ ॥**

नजरभभगाः । यथा —

उपलतृणस्वरूपचिन्तामणिकल्पलता-,
[4]व्यतिकरतो मुधैव मेरुर्मदमुद्वहति ।
जयति यदुज्जयन्त एकोऽयमचिन्त्यफलं,
प्रददलंकरोति नेमिः स्वयमेष जिनः ॥ २६३.१ ॥

**भीः सगौ शरमाला ॥ २६४ ॥**

भीरिति भचतुष्टयं सगौ च । यथा —

1) कोकिलवधूनामित्यत्र चूतविटपानां सहकारशाखानाम् । झषकेतनस्येति — कन्दर्पस्य । 2) मेघमृदङ्गवादक इति — मेघा एव मृदङ्गाः तान् वादयतीति वर्षाकाल. । 3) पर्याक्षिप्तेत्यत्र पराङ्मुखी पर्याक्षिप्त. आकर्षितो वस्त्रस्य प्रान्तो यया सा । वामारम्भेति — विपरीतारम्भापि कामोदयात् प्रीत्यै भवति । 4) व्यतिकरत इति — संबन्धादेव मेरुर्दर्पं बिभर्ति ।

[1] केतनकं F.

[1]ऐक्षवकार्मुक कौसुमसायक भटमानिन्,
मुञ्च चतुर्मुखशंभुचतुर्भुजजयगर्वम् ।
उत्तमसंयमवर्मवृतात्मनि जिननाथे,
संप्रति शम्बरसूदन संहर शरमालाम् ॥ २६४.१ ॥

**भुगौ संगतम् ॥ २६५ ॥**

**भुरिति पञ्चभगणा गुरुश्च । यथा–**

[2]वीर तवासिपथेन गतैररिभिस्त्रिदिवं,
तत्र दिवस्पतिमानिभिराकुलितः प्रबलैः ।
अद्य हरिर्विमृशन् सचिवैः सह तद्विजये,
त्वन्नवसंगतकल्पनमौपयिकं मनुते ॥ २६५.१ ॥

**पद्ममुखी, सुरतावसथं, उद्धरणं, सोपानकं चान्येषाम् ॥ २६५.१ ॥**

**मुगौ कामुकी ॥ २६६ ॥**

**मुरिति मगणपञ्चकं गुरुश्च । यथा–**

संवृत्तोऽयं सन्ध्याकालः प्राप्तोऽस्ताद्रेः शृङ्गं भानुर्,
विस्फूर्जद्भिर्ध्वान्तस्तोमैरेकीभूतं [3]काष्ठाचक्रम् ।
चापाकृष्टिं व्यातन्वानः कन्दर्पोऽपि क्रीडत्युच्चैर्,
गच्छन्त्येतास्त्यक्ताशङ्कं क्रीडास्थानं कामुक्योऽपि ॥ २६६.१ ॥

**सुगौ वा ॥ २६७ ॥**

**सुरिति सगणपञ्चकं गुरुश्चेदियमपि कामुकी । यथा–**

[4]अपयाहि पितामहचित्तविलोभिनि धिक् त्वाम्,
अपि कौशिककामुकि न त्वमपि त्रपसे किम् ।
असि हास्यपदं नलकूबरकामिनि यद्वः,
कुलिशातिदृढेऽत्र जिनेन्द्रहृदि प्रविविक्षा ॥ २६७.१ ॥

**सोमडकमित्यन्ये ॥ २६५.१ ॥**

1) ऐक्षवकार्मुकेत्यत्र–इक्षोरिदं ऐक्षवम् । कुसुमसंबन्धिनो वाणा यस्य कौसुमसायकस्तत्संबोधनम् । ब्रह्मेश्वरकृष्णजयमानम् । वर्मेति–सन्नाहः । जिनपतौ । शम्बरसूदनेति–हे काम । 2) वीर तवेत्यत्र दिवस्पतिमानिभिः पूज्यैः । नवसंगतेति–नवं संगतं मैत्र्यं तस्य यत्कल्पनं निष्पादनं एवंविधं उपायम् । 3) काष्ठाचक्रमिति–दिक्चक्रम् । कामुक्यः कुलटाः । 4) अपयाहीति–पितामहो ब्रह्मा तस्य ध्यानारूढस्य चित्तप्रलोभि[नी] इयं तिलोत्तमा । इन्द्रस्य विश्वामित्रस्य वा कामुकी उर्वशी तस्य संबोधनम् । अत्र कौशिकशब्दस्योभयार्थत्वम् । त्रपसे लज्जां न करोषि । नलकूबरेति–धनदपुत्रकामिनि हे रम्भे । कुलिशेति–वज्रादप्यतिदृढे ।

१ चतुर्भुज शंभुचतुर्भुज A  २ आतुलित N  ३ सुरता च सद्यमुद्धरणसो० N.  ४ अयि FN.

**नुगौ चलधृतिः ॥ २६८ ॥**

नुरिति नगणपञ्चकं गुरुश्च । यथा–

प्रणमदखिलसुरपतिकनकमुकुट-,
स्फुटरुचिनिचितनखमणिकिरणचये ।
कुरु जिनचरणजलरुहि नमनरुचि,
[1]चलधृतिमपजहि च विषयसुखधियम् ॥ २६८.१ ॥

**नुलावचलधृतिः ॥ २६९ ॥**

नुरिति नगणपञ्चकं लघुश्च । यथा–

विलुलितचिकुरमधरनिहितदशनम्,
अविरलपुलकनिचितकुचयुगमयि[2] ।
रतिरसरभसमणितमुखरितमिह,
विलसति तव सखि सुरतमचलधृति[3] ॥ २६९.१ ॥

**नभौ जिगौ मङ्गलमङ्गना धैः ॥ २७० ॥**

नभौ जिरिति जगणत्रयं गुरुश्च । धैरिति चतुर्भिर्यतिः ॥ यथा–

[4]कुटिलतां धृतवती गुरुभोगमदोद्धता,
विदधती प्रलयवेपथुसादपरंपराम् ।
विषधरीव पुरतः स्फुरिता[१] यतिनामहो,
विचरतां सुगतिमार्गममङ्गलमङ्गना ॥ २७०.१ ॥

**भरौ निगा ऋषभगजविलसितं छैः ॥ २७१ ॥**

भरौ नगणत्रयं गुरुश्च । छैरिति सप्तभिर्यतिः । यथा–

[5]अद्भुततुङ्गमूर्तिरतिशयललितगतिर्,
देव समग्रकर्मवनविदलनरसिकः[२] ।
निर्भरमन्तरङ्गरिपुबलविजयपटुर्,
नाथ दधारि तत् त्वमृषभगजविलसितम् ॥ २७१.१ ॥

मत्तगजविलसितमिति भरतः ॥ २७१.१ ॥

1) चलधृतिमिति–अस्थिरस्वास्थ्यं अपजहि त्यज । 2) अयीति–कोमलामन्त्रणे । 3) अचलधृतीति–अचला स्थिरा धृति समाधिर्यत्र । 4) कुटिलतामित्यत्र वक्रत्वं उभयत्र । गुरुश्चासौ भोगश्च तेन उद्धता दर्पभाग् । पक्षेऽहिकाय. । मूर्च्छाकम्पस्वेदश्रेणि । भुजगीव अग्रत. । स्फुरिता जाता । यतिनां व्रतिनाम् । [अहो]आश्चर्यम् । 5) अद्भुततुङ्गेत्यत्र अन्तरङ्गेति–गजपक्षे अन्तर्मध्ये अङ्गति गच्छति यद्रिपुबलम् ।

१ स्फुरता N. २ रसिक N.

**निजस्गा ललितपदं ङैः ॥ २७२ ॥**

निरिति नगणत्रयं जसगाश्च । ङैरिति पञ्चभिर्यतिः । यथा—

[1]चुलुक[1]कुलजलनिधिगशाङ्क तव दीनं,
रिपुनिवहमतितरलकातरमुपेक्ष्य ।
त्वदसिरुचितमसि वितते युधि भवन्तं,
ललितपदमभिसरति वीर जयलक्ष्मीः ॥ २७२.१ ॥

**यम्नस्[2]र्गाः जयानन्दं चैः ॥ २७३ ॥**

यमनसरगाः । चैरिति षड्भिर्यतिः । यथा—

[2]नमच्छक्रश्रेणीमणिमुकुटकोटीविटङ्कैर्,
निघृष्टाङ्घ्रे देव प्रबलजडताचण्डभानो ।
सुधाधारासारैरिव सदसि वाचां प्रपञ्चैर्,
जयानन्दस्यन्दं सपदि जगतामादधानः ॥ २७३.१ ॥
प्रवरललितमित्येके ॥ २७३.१ ॥

**भ्रौ न्रौ न्गौ महिषी ञैः ॥ २७४ ॥**

भरनरनगाः । ञैरिति दशभिर्यतिः । यथा—

[3]सिद्धनरेन्द्रनन्दन भवद्विपक्षनगरे,
संप्रति सौधभित्तिलिखितास्तुरंग[3]मचमूः ।
वीक्ष्य[4] नितान्तकोपकुटिलेक्षणा प्रति मुहुः,
शृङ्गविघट्टनै[5]र्विघटयत्यरण्यमहिषी ॥ २७४.१ ॥

**म्भौ न्मौ न्गौ मदनललिता घचैः ॥ २७५ ॥**

मभनमनगाः । घचैरिति चतुर्भिः षड्भिश्च यतिः । यथा—

[4]गाढाक्रान्ता कुचयुगभरेणार्ता च विरहे,
नित्योद्विग्नातिघनजघनप्राग्भारधरणे ।
सध्रीचीभिर्धृतकरतला कान्ते कृतरतिर्,
मन्दं मन्दं मदनललिता याति प्रियगृहम् ॥ २७५.१ ॥

**न्जभ्जर्गा वाणिनी ॥ २७६ ॥**

नजभजरगाः । यथा—

---

1) चुलुक्येत्यत्र वैरिवृन्दम् । त्वत्खड्गकान्तिरेव तमोऽन्धकारः तस्मिन् वितते विस्तृते सति युधि संग्रामे अभिमुखमागच्छति । 2) नमदित्यत्र इन्द्रश्रेणिरत्नमुकुटकोट्यग्रैः । जयप्रीत्योर्निष्यन्दं रसं पर्पदि । 3) सिद्धनरेन्द्रेत्यत्र त्वद्वैरिपुरे । अरण्यमहिषीति—परस्परं नित्यवैरत्वादिति भावः । 4) गाढाक्रान्तेत्यत्र सध्रीचीभिः सखीभिः । कान्ते भर्तरि । कृतप्रीतिः ।

---

१ चुलुक्य० com; N; २ यमनसर्गा GH, ३ तुरगचमू N ४ वीक्ष A, ५ विघटनै. N.

[1]अविरलपुष्पबाणललितानि दर्शयन्ती,
परिमलहारितामरसवक्त्रमुद्वहन्ती ।
मदकलराजहंसगमनानि भावयन्ती,
शरदिह मानसं हरति हन्त वाणिनीव ॥ २७६.१ ॥

**नजिर्गो वा ॥ २७७ ॥**

**नगणो जत्रयं रगणो गुरुश्च यदा तदापि वाणिनी** । यथा –

[2]कुरु करुणां वितर प्रतिवाचमत्र कां वा,
हृदि दयितां निदधासि निमीलिताक्षियुग्[1]मम् ।
अयमपि ते ननु दासजनोऽनुक[2]म्प्य एव,
जयति स[3] वीरजिनो गदितो द्युवाणिनीभिः ॥ २७७.१ ॥

**ज्रज्रज्गाः पञ्चचामरम् ॥ २७८ ॥**

**जरजरजगाः** । यथा –

[3]त्वदीयपादपङ्कजे निधाय भक्तिमुज्ज्वलां,
मनुष्यकीटका वयं विदध्महे किमद्भुतम् ।
यदीयजन्म[4]नो महोत्सवं तथा प्रचक्रिरे,
जिनेन्द्र सप्तविंशतिश्च पञ्च चामराधिपाः ॥ २७८.१ ॥

**र्जर्जर्गाश्चित्रम् ॥ २७९ ॥**

**रजरजरगाः** । यथा –

[4]कान्तिरिन्दुकौमुदीसहोदरा वचोविलासः,
सर्वदा सुधोज्ज्वलो यशश्च दुग्धसिन्धुबन्धुः ।
क्षुण्णशङ्खसोदरा गुणास्तवामलं चरित्रं,
चित्रमेतदेभिरीश मे मनस्तथापि रक्तम् ॥ २७९.१ ॥

**म्नस्त्गाः सुरतललिता ॥ २८० ॥**

**मन[5]सतरगाः** । यथा –

[5]संप्राप्ते मधुसमयसाम्राज्ये पिकीसमूहाः,
शंसन्ति प्रतिदिशमिदं मन्ये नितम्बिनीनाम् ।

---

1) अविरलपुष्पेत्यत्र अन्यत्र बाणो वृक्षभेदः । छेका मत्ता च वाणिनी । 2) कुरु करुणामित्यत्र संगमदेवेन मायया कामिनीरूपाणि यानि निष्पादितानि ताभिरुक्तम् । निमीलितेति क्रियाविशेषणम् । गदित इति – प्रोक्तः । स्वर्गमत्तच्छेकरामाभिः । 3) त्वदीयपादेत्यत्र द्वात्रिंशत् देवेन्द्राः । व्यन्तरेन्द्रा न गण्यन्ते अल्पर्द्धित्वात् । 4) कान्तिरिन्दुरित्यत्र पयःपयोधिसोदरः । रक्तमिति – रागभाग् । 5) संप्राप्त इत्यत्र शंसन्ति कथयन्ति ।

---

१ युग्म॰ BFP. २ नु कथं एवं N; नुकम्प्य एवं F. ३ स dropped in N. ४ जन्मतो N. ५ dropped in N.

मानित्वं त्यजत सुभगंमन्यत्वमस्तु[1] दूरे,
कन्दर्पः सुरतललितौपाध्यायकं प्रपेदे ॥ २८०.१ ॥

**भ्रौ न्भौ भ्गौ शैलशिखा ॥ २८१ ॥**

**भरनभभगाः** । यथा—

[1)]शीतरुजा विधुतचिबुकैः कृतदन्तरवो,
गाढतरप्रयुक्तगजदन्तकराभिनयः ।
शैलशिखाप्रदेशमधिरुह्य तुषारऋतौ,
पश्यति भास्करोदयपथं तव वैरिजनः ॥ २८१.१ ॥

**भ्रौ य्नौ न्गौ वरयुवतिः ॥ २८२ ॥**

**भरयननगाः** । यथा—

[2)]स्फूर्जति संगरप्रदोषे तुरगखरखुर-,
क्षुण्णरजोन्धकारघोरे विलसति नृपते ।
वैरिमहीभुजां समन्तात्सुरवरयुवती-,
संगमहेतुरेकदूती भवदसिलतिका ॥ २८२.१ ॥

**र्नौगा ललना ॥ २८३ ॥**

**रगणो नगणचतुष्टयं गुरुश्च** । यथा—

दिक्षु चक्षुरनिलहतकुवलयतरलं,
प्रक्षिपत्यतनुमृगपतिनिनदचकिता ।
सिद्धराजसुत भजति मृगयुवतितुलां,
सांप्रतं वनभुवि तव रिपुनृपललना ॥ २८३.१ ॥

**सौ नौ मो गो वेल्लिता ॥ २८४ ॥**

यथा—

[3)]सरितां कमितुः स्तवकित[2]घनफेनव्याजाद्-,
विततेषु तटेषु वहललवलीच्छायेषु ।
श्रममाप्तवती त्रिजगति संचारैर्,
नियतं नृप [4)]वेल्लितसुखमभजत् त्वत्कीर्तिः ॥ २८४.१ ॥

**म्तौ स्तौ त्गौ कोमललता घडैः ॥ २८५ ॥**

**मतसततगाः** । घडैरिति चतुर्भिः पञ्चभिर्यतिः । यथा—

---

1) शीतरुजेत्यत्र गाढतरं प्रयुक्तो गजदन्तानां कराभ्यां कृत्वाभिनयोऽनुकरणं येन स तथा । कोऽर्थः । वाकरीबन्धः । 2) स्फूर्जतीत्यत्र संग्रामरूपरात्रिमुखे । 3) सरितां कमितुरित्यत्र समुद्रस्य । स्तबकितेति—फेनस्तवका हि कल्लोलैरितस्तत. प्रेङ्खोल्यन्ते । लवलीलताभि. । 4) वेल्लितेति—आन्दोलनसुखम् ।

---

१ सुभगंमान्यत्वं N. २ स्तवकित० N.

[1]मत्तालीनां स्निग्धमधुरोद्गारैर्मुहुर्गीतकैर्,
आक्षिप्तोऽस्यारोहणमृगः स्वच्छन्दचारी यतः।
मन्दं मन्दं दक्षिणमरुद्वात्येप तेनाधुना,
स[१]द्यःपुष्यत्कोमललतालास्यैकशिक्षागुरुः ॥ २८५.१.१६।२३ ॥

**अत्यष्टौ यम्नस्भल्गाः शिखरिणी चैः ॥ २८६ ॥**

यमनसभलगाः। चैरिति षड्भिर्यतिः। यथा—

[2]हरन् सर्वाम्भोजश्रियमविरतं सिन्धुपतिना,
कृ[२]तार्थस्तन्वानो निशितमसि विद्योतमसमम्।
सुधांशुस्तद्वंशे त्वमिव जयसिंहक्षितिपते,
कलापूर्णः पश्योदयशिखरिणीहाभ्युदयते ॥ २८६.१ ॥

**ज्सज्स्यल्गाः पृथ्वी जैः ॥ २८७ ॥**

जसजसयलगाः। जैरित्यष्टभिर्यतिः। यथा—

[3]त्वदीयरिपुभूभुजां पुरि पुरारिवेश्माग्रतो,
निरीक्ष्य चमरी वृषं सपदि मन्मथव्याकुला।
परिस्पृशति जिह्वया [4]ककुदकेन कण्डूयते,
निमीलितविलोचना किल चुलुक्यपृथ्वीपते ॥ २८७.१ ॥

**विलम्बितगतिरिति भरतः ॥ २८७.१ ॥**

**भ्रौ न्भौ न्लौ गो वंशपत्रपतितं जैः ॥ २८८ ॥**

भरनभनलगाः। जैरिति दशभिर्यतिः। यथा—

[5]जर्जरसा[३]रिमध्यलुठिताः क्वचिदपि गर्जिनो,
भङ्गुरवंशपत्रपतिताः क्वचिदपि रथिनः।
क्वापि च सादिनो [6]हततुरंगमवलपिहिताः,
शत्रुबलेऽभवंस्त्वयि रणाङ्गणमवतरति ॥ २८८.१ ॥

**वंशदलमित्यन्ये ॥ २८८.१ ॥**

---

1) मत्तालीनामित्यत्र आरोहणमृग इति—वातो हरिणवाहनः स च गीतिरतिः। मृगं विना वातोऽपि चलितुं न गकोति। लास्यं नाट्यम्। 2) हरन् सर्वामित्यत्र यद्यपि जयसिंहदेववारके धारायां नहि(र)वर्मराजोऽभूत् तथापि तस्य या राष्ट्रकोशादिसप्ताङ्गलक्ष्मीः सा सर्वापि भोजोपार्जितासीत्। उत्कटत्वान्न विरोधः। सिन्धुदेशराजः समुद्रश्च। तेन विहितपूजः। निशि रजन्यां अन्धकारे विशिष्टोद्द्योतं निरुपमं प्रकाशम्। पक्षे निशितं तीक्ष्णं। खड्गकान्तिं कुर्वन्। तस्य चन्द्रस्य वंशे यथा त्वं तथा उदयगिरौ सुवांशु.। कलाषोडशः पक्षे विज्ञानम्। 3) त्वदीयरिपुभूभुजामित्यत्र ईश्वरायतने चमरी वनगौ कामान्धा पाषाणमयं वृषं अजानती जिह्वास्पर्शनाद्यनङ्गचेष्टा करोति। 4) ककुदनेनेति—अकारान्तोऽप्यस्ति। 5) जर्जररारीत्यत्र सारि अंबाडीति प्रतीता। गर्जिनो गजारूढाः। वंशा वाहनानि तेभ्यः। रथिन इति रथवन्तः। सादिनोऽश्ववाराः ॥ 6) हततुरंगेति—उपरि तुरंगा अधस्तादश्वसमूहा [ सादिनो ? ] जाता इति भावः।

---

१ स य N. २ कृतार्घ P. ३ गारि B. ४ गतिनो N.

**सौ ज्भौ जो गावतिशायिनी[1] ॥ २८९ ॥**

**ससजभजगगाः । ऐरिति वर्तते ।** यथा माघस्य[1)]—

इति धौतपुरन्ध्रि[2]मत्सरान् सरसि मज्जनेन,
श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः ।
अवलोक्य तदैति याद[3]वानपरवारिराशेः,
शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीषे ॥ २८९.१ ॥

यादवीत्यन्ये[4] ॥ २८९.१ ॥

**मो भ्नौ तौ गौ मन्दाक्रान्ता घचैः ॥ २९० ॥**

**मभनततगगाः । घचैरिति चतुर्भिः षड्भिश्च यतिः ।** यथा—

जन्मस्नाने स चरमजिनः स्वर्णकुम्भौघधारा-,
सारं सोढा कथमिति पुरा वज्रिणा शङ्कितेन ।
दृष्टः पश्चाज्जयति चरणाङ्गुष्ठपर्यन्तलीला-,
मन्दाक्रान्तामरगिरिशिरःकम्पतो विस्मितेन[5] ॥ २९०.१ ॥

श्रीधरेति भरतः ॥ २९०.१ ॥

**मभ्नरसल्गाः भाराक्रान्ता ॥ २९१ ॥**

**मभनरसलगाः । घचैरिति वर्तते ।** यथा—

[2)]चौलुक्येन्द्र त्वमिह न हि चेदिमां किल धारयेः,
कूर्मक्रोडाधिपफणिपतिद्विपाद्रिषु सत्स्वपि ।
सर्पन्त्या ते करटिघटया दिशां विजये तदा,
भाराक्रान्ता नृप वसुमती क्षणान्निपतेदधः ॥ २९१.१ ॥

**मभ्नम्यल्गाः हारिणी ॥ २९२ ॥**

**मभनमयलगाः । घचैरिति वर्तते ।** यथा—

प्रासादेषु त्वदरिनगरे शून्यत्वमासेदुषि,
श्रीचौलुक्य क्षितिपतिशिरश्चूडामणे संप्रति ।
प्रेङ्खोलन्तो विषधरशतैर्व्यालम्बिताः कञ्चुका,
व्यातन्वन्ति ध्वजपटतुलामुच्चैर्मनोहारिणीम्[6] ॥ २९२.१ ॥

---

1) माघस्येति—माघकाव्यमिदम् । शिशिरेति—सूर्येण । 2) चौलुक्येत्यत्र कच्छपादिवराहशेषदिग्हस्तिपर्वतादिषु ।

---

१ ऐ. added in GH २ पुरन्ध्री N ३ यदेवीनपर० A. ४ यावदवी० B ५ विष्णुतेन A. ६ मनोहारिणी AN.

५ छन्दो०

**न्सौ भ्रौ स्लौ गो हरिणी चघैः ॥ २९३ ॥**

नसमरसलगाः । चघैरिति षड्भिश्चतुर्भिर्यतिः । यथा –

कथय किमियं लक्ष्मच्छाया शुचेस्तु भवेत् कथं,
तव हिमरुचे यद्वोत्सङ्गे कृतः कृपया ध्रुवम् ।
नभसि रभसाद् बद्धाटोपप्रधावितलुब्धक-,
क्षुभितहरिणीगर्भाद् भ्रष्टः कुरंगक एव हि ॥ २९३.१ ॥

**वृषभललितमित्येके ॥ २९३.१ ॥**

**नः स्मौ तौ गौ पद्मम् ॥ २९४ ॥**

नसमततगगाः । चघैरिति वर्तते । यथा –

त्यजत मनुजा जातेर्गर्वं किं त[1]यैवैकया स्यात्,
गुणपरिचयो लोकेऽत्यन्तं हन्त दत्ते प्रतिष्ठाम् ।
अजनि चुलुकाचान्ताम्भोधिः कुम्भजन्माप्यगस्त्यः,
[1)]कुलगृहसभूद्देव्या लक्ष्म्याः पङ्कजातं च पद्मम् ॥ २९४.१ ॥

**नस्मम्यल्गा रोहिणी ॥ २९५ ॥**

नसममयलगाः । चघैरिति वर्तते । यथा –

[2)]कुवलयमु[2]दं व्यातन्वानः पूर्णोल्लसन्मण्डलः,
शिरसि घट[3]यन् पादन्यासं निःशेषपृथ्वीभृताम् ।
उदयमधुना प्राप्तः श्रीमत्सिद्धेन्द्रसूनो भवान्,
इव [3)]कृतबुधानन्दः सोऽयं श्रीरोहिणीवल्लभः ॥ २९५.१ ॥

**नुर् गौ वसुधारा ङैः ॥ २९६ ॥**

नुरिति पञ्च[4] नगणाः गुरुद्वयं च । ङैरिति पञ्चभिर्यतिः । यथा –

[4)]प्रणतसुरविसरमणिमुकुटतटकोटि-,
परिघ[5]टितचरणनखरुचिनिचयरम्ये ।
इह भवति भगवति विहरति जिननाथे,
प्रतिभवनमभिप[6]तति जगति वसुधारा ॥ २९६.१ ॥

---

1) कुलगृहं प्रधानसदनम् । 2) कुवलयमुदमित्यत्र – कैरवं भूवलय च । मण्डलं बिम्बं देशश्च । कुर्वन् । पादानां चरणानां किरणानां च न्यासम् । समग्राणां राज्ञां पर्वतानां च । 3) कृतबुधेति – पुत्रत्वाद्बुधानन्दकृत् पक्षे पण्डितानन्दनो दानादिना । चन्द्र० । 4) प्रणतसुरेत्यत्र वसुधारेति – सुवर्णरत्नादिवृष्टिः ।

---

१ तया वैकया A २ मुदा A, मदं P ३ घटयत् N ४ नगणपञ्चकं गुरु० A. ५ परिघट्टित N
६ पतति dropped in N, जगति in E

**नजभजजा ल्गाववितथम् ॥ २९७ ॥**

नजभजजेभ्यः परौ ल्गौ । यथा –

[1]श्रृणु परमोपदेशमिह मुग्धमते सततं,
भवजलधेः परेण यदि यातुमनास्त्वमसि ।
विसृज परिग्रहं भज कृपां त्यज कामकथाम्,
अवितथवाग्भवापहर सा परकीयधनम् ॥ २९७.१ ॥

नर्कुटकमिति जयदेवः ॥ २९७.१ ॥

**तत् कोकिलकं छचैः ॥ २९८ ॥**

तदवितथं[1] छचैः सप्तभिः षड्भिश्च यतिश्चेत् कोकिलकसंज्ञम्[2] । यथा –

कलयति कोकिले मधुरपञ्चमगीतिमिमां,
मलयसमीरणो भवति पश्यत नाट्यगुरुः ।
इह हि यदाज्ञया नवनवाद्भुतभङ्गिजुषः,
किसलयहस्तकान् वितनुते [2]सहकारलता ॥ २९८.१ ॥

इह केचिदष्टभिः पञ्चभिश्च यतिमिच्छन्ति ॥ २९८.१ ॥

**गौ चेद्वाणिनी ॥ २९९ ॥**

नजभजजेभ्यः परौ गौ चेद्वाणिनीसंज्ञम् । यथा –

[3]परभृतकूजितानि जरठेक्षुरसो नवेन्दुर्,
मलयसमीरणो मलयजं सधुसंगमश्च ।
अपि न तथा हरन्ति मिलितानि मनो यथेदं,
मदभरलड्भापितमहो खलु [4]वाणिनीनाम् ॥ २९९.१.१७।१४ ॥

**धृत्यां म्रभ्या रौ काञ्ची टैः ॥ ३०० ॥**

मरभयररा: । टैरिति एकादशभिर्यतिः । यथा –

[5]संप्राप्तेऽस्मिन् जगच्चक्षुपि रवौ प्रत्यग्गिरेर्गह्वरं,
प्रेयःसंकेतवेश्माभिसरणे धत्से पिधानांशुकम् ।
मुग्धे ध्वान्तानुरूपं किमु मुधैवौत्सुक्ययोगात् क्वणत्-,
काञ्चीमञ्जीरकोलाहलमिमं शक्ता निपेद्धुं[3] न चेत् ॥ ३००.१ ॥

वाचालकाञ्चीत्यन्ये ॥ ३००.१ ॥

**भिम्भसा मणिमाला ॥ ३०१ ॥**

भत्रयं मभसाश्च । टैरिति वर्तते । यथा –

---

1) श्रृणु परमोपेत्यत्र परेणेति अव्ययं परार्थे । अवीति – सत्यवाग् । 2) सहकारलतेति – चूतमञ्जरी । 3) परभृतेत्यत्र कोकिलजल्पितानि । कठिनेक्षुरसः । मदभरे अव्यक्तजल्पनम् । 4) मत्तच्छेकानां स्त्रीणाम् । 5) संप्राप्तेऽस्मिन्नित्यत्र पश्चिमपर्वतस्य । क्वणदिति – मेखलानूपुरयोः कलकलः ।

---

१ तदवितथं dropped in P. २ कोकिलसंज्ञं CN ३ निरोद्धु AP.

"[1]देवं तवारिनरेशपुरन्ध्रीवक्त्राम्बुजशशिनः,
प्रोल्लसिताधिकविस्मयमुर्वी[2]" संवीक्ष्य भुजगताम्[3]" ।
प्राभृतसारकृते निरवद्यामद्याप्यनवरतं,
मूर्धनि धारयते मणिमालां पातालपरिवृढः[4]" ॥ ३०१.१ ॥

**मता यिः कुसुमितलतावेल्लिता ङच्चैः ॥ ३०२ ॥**

मतना यगणत्रयं च । ङच्चैरिति पञ्चभिः षड्भिश्च यतिः । यथा–

कङ्केल्लिस्कन्धे कुसुमितलतावेल्लिता मन्दमन्दं,
क्रीडादोलेयं स्मरविरचिता दाक्षिणात्यानलेन ।
अस्यां खेलन्ती रतिरतितरां हन्त गीतिं तनोति,
व्याकूजन्मत्तभ्रमररमणीहुंकृतीनां छलेन ॥ ३०२.१ ॥

**घछैश्चित्रलेखा ॥ ३०३ ॥**

चतुर्भिः सप्तभिश्च यतिश्चेत् सैव चित्रलेखा । यथा–

पश्योष्णांशोरभ्युदयमधुना सूचयन्ती पुरस्तात्,
सन्ध्या सेयं चित्रयति गगनाभोगवेश्मान्तराले ।
शङ्खच्छेदस्वच्छरुचिरुचिरानभ्रभित्तिप्रभागान्,
वर्णैः पीताताम्रशितिकपिशैस्तन्वती चित्रलेखाः ॥ ३०३.१ ॥

**मभ्ना यिश्चन्द्रलेखा ॥ ३०४ ॥**

मभना यगणत्रयं च । घछैरिति वर्तते । यथा–

"[5]ज्वालं ज्वालं सुभग तव महान् विप्रयोगानलस्तां,
दाहं दाहं किमिव विरचयेदन्यदस्मात्परेण ।
लावं लावं विकचकमलिनीश्चूर्णयत्यंह्रिघातैर्,
[6]लेखं लेखं शकलयति तथा सा नखैश्चन्द्रलेखाम् ॥ ३०४.१ ॥

**म्भन्जभ्राश्चलम् ॥ ३०५ ॥**

मभनजभराः । घछैरिति वर्तते । यथा–

शास्त्राभ्यासे व्यसनमनुपमं परोपकृतौ रतिः,
"[7]सत्पात्रेषु प्रणयपरतया प्रदानमनारतम्[8]" ।
प्रीतिः पादाम्बुरुहि जिनपतेर्भवेदमलात्मनां[9]",
विद्युल्लेखाजलधरपटलीचलात्मनि जीविते ॥ ३०५.१ ॥

1) देव तवारीत्यत्र रिपुनृपस्त्रीमुखाम्भोजसंकोचचन्द्रसमानस्य । 2) उर्वी पृथ्वीम् । पक्षे गुर्वीम् । 3) हस्तगतां पक्षे सर्पताम् । 4) पातालस्वामी शेषः । 5) ज्वालंज्वालमित्यत्र वियोगाग्निः । 6) लेखं लेखं आलेख्यालेख्य । 7) सत्पात्रेष्विति–आदरतत्परतया । 8) अनेति–निरन्तरम् । 9) अमलेति–विशुद्धात्मनाम् ।

१ देवतावारिनशपु A २ परिदृढ A. ३ दन्तगीतिं A. ४ रुचि dropped in B. ५ चूर्णयन्त्यंह्रि N. ६ सकलयति A.

**म्भौ न्यौ रौ केसरम् ॥ ३०६ ॥**

मभनयररा: । घछैरिति वर्तते । यथा –

[1]सारंगाणां न कुलमिह न वा यूथं [2]महादंष्ट्रिणां,
कर्णातिथ्यं न च भजति कटुर्गन्धद्विपानां ध्वनिः ।
तत्किं दिक्षु क्षिपसि रभसया नेत्रे त्वमुद्यत्करो,
यद्वा ज्ञातं विधुवति पवनस्त्वत्केसरं[3] केसरिन् ॥ ३०६.१ ॥

**नौ मौ यौ चन्द्रमाला छघैः ॥ ३०७ ॥**

ननममयया: छघैरिति सप्तभिश्चतुर्भिश्च यतिः । यथा –

[4]सरसि[1] सरसिजं तद्वाकाशे पार्वणं चन्द्रबिम्बं,
कुवलयनयने तावत्साम्यं नाभजत्त्वन्मुखस्य ।
[5]जनयतु कनकाम्भोजश्रेणीर्लक्षशः स्वर्गसिन्धुर्-,
घटयतु यदि वा सोऽपि स्रष्टा कोटिशश्चन्द्रमालाः ॥ ३०७.१ ॥

**नौ म्तौ भ्रौ ललितम् ॥ ३०८ ॥**

ननमतभरा: । छघैरिति वर्तते । यथा –

[6]परममुपशमं वर्मीकृत्य स्थितेऽत्र महामुनौ,
प्रहरणमपरं दध्याः किंचिन्निशातमतीव यत् ।
पशुपतिविजयं स्मारं स्मारं पराक्रमगर्वितः[3],
कलयसि ललितं पौष्पं शस्त्रं मनोभव किं मुधा ॥ ३०८.१ ॥

**भ्रनिसा भ्रमरपदं झैः ॥ ३०९ ॥**

भरौ नगणत्रयं सश्च । झैरिति नवभिर्यतिः । यथा –

वारिदमुक्तवारिभरपरिशमितघनरजा,
उद्गतरोहिणीशकरधवलितसकलककुप् ।
कस्य धृतिं ददाति न हि शरदृतुरजनिरियं,
चुम्बनलालसभ्रमरपदविदलितकुमुदा ॥ ३०९.१ ॥

**म्सौ ज्सौ त्सौ शार्दूलललितं ठैः ॥ ३१० ॥**

मसजसतसा: । ठैरिति द्वादशभिर्यतिः । यथा –

---

1) सारंगाणामित्यत्र हरिणानां वृन्दम् । 2) महेति – वराहादीनाम् । 3) त्वत्स्कन्धकेशम् । 4) सरसि सरे[त्यत्र] पर्वणि भवं पार्वणं राकाजातम् । 5) आदौ जनयत्विति – तदेत्यध्याहारो विधेयः । स्वर्गेति – गङ्गा । स्रष्टेति – ब्रह्मा । 6) परममुपेत्यत्र सनाहीकृत्य । निशातं तीक्ष्णम् । ईश्वरविजयं स्मृत्वा स्मृत्वा ।

---

१ सरसि dropped in A. २ तीक्ष्णं O. ३ गर्वित N.

1)नष्टं त्यक्तमिथःप्रतीक्षणरसैः सारंगमिथुनैर्,
यातं विस्मृतगृङ्गभारविधुरैर्वाध्रीणसकुलैः ।
लीनं पल्वलपङ्क एव सहसा क्रौडैर्ध्वनीति चेत्,
कान्ताचाटुविधित्सयापि हि भवान् शार्दूल ललितम् ॥ ३१०.१ ॥

**म्तन्जभ्राः कुरङ्गिका ङ्छैः ॥ ३११ ॥**

मतनजभराः । ङ्छैरिति पञ्चभिः सप्तभिश्च यतिः । यथा–

2)अस्या वक्त्रेन्दौ विजयिनि चिराय लाञ्छनवर्जिते,
प्रालेयांशो त्वं स्फुरसि दिवि धृष्ट नित्यमचेतनः ।
साकूतालोकाद्भुतनयनकेलिनिर्जितलोचना,
याऽरण्ये तस्थावुचितचतुरेह सैव कुरङ्गिका ॥ ३११.१ ॥

**न्सौ मौ यावनङ्गलेखा चङैः ॥ ३१२ ॥**

नसममयया । चङैरिति षड्भिः पञ्चभिश्च यतिः । यथा–

3)प्रियसखि मधुं मा स्मावज्ञासीर्मानयैनं यथावत्,
तव हि वकुले क्रीडामित्रेऽस्मिन् पुत्रके चूतवृक्षे ।
भवनपरिखापद्मिन्यां सख्यां न्यस्तरोलम्बवर्णा-,
वलिकिसलयव्याजादेतेनानिन्यिरेऽनङ्गलेखाः ॥ ३१२.१ ॥
विबुधप्रियेत्यन्ये । ॥ ३१२.१ ॥

**र्सौ जौ भ्रावुज्ज्वलं जैः ॥ ३१३ ॥**

रसजजभराः । जैरित्यष्टभिर्यतिः । यथा–

4)पाणिपादविलोचनाननपद्मकाननशालिनी,
निम्ननाभिमहाह्रदा त्रिवलीतरंगविभूषिता ।

---

1) नष्टमित्यत्र त्यक्तं मिथो यत्र क्रियाविशेषणम् । विस्मृतशृङ्गभारं यथा स्यादेवं विधुरैः पीडितैः गण्डकजीवैः । क्रोडैर्वराहैः । ललितं सविलासं यथा भवति तथा । 2) अस्या. वक्त्रेन्दावित्यत्र हे प्रालेयांशो चन्द्र । रे धृष्ट त्वं अस्या वदनेन्दौ सर्वोत्कृष्टे सति कलङ्कहीने सति आकाशेऽचेतन सन्नित्यं स्फुरसि अतो हेतोः त्वत्तः इह लोके सा कुरङ्गिकाप्युचितचतुरा या अस्याः साभिप्रायालोकनाद्भुतनयनकेल्या निर्जिते विलोचने यस्याः सा एवंविधा सती अरण्ये तिष्ठति स्म । मृगी सा पशुरपि धन्या या अरण्ये लज्जिता सती वसति । त्वं तु पशोरपि पशु. यत् निर्जितोऽपि गगने भ्रमसीति भावः । 3) प्रियसखि मधुमित्यत्र हे इष्टसखि मधुं वसन्तं मावगणय किं तु एनं मानय । अनेन हि वकुलसहकारपद्मिनीपु किसलयव्याजात् अनङ्गलेखाः आनिन्यिरे आनीताः । को भावः । दम्पत्योर्यत्परस्पर प्रेम्णा लेखप्रेषणं सोऽनङ्गलेखः । यथाहमिह स्थितवत्यपि तावकी त्वं अपि तत्र वसन्नपि मामक. । लिखितपत्रमनङ्गरसाकुला विरहिणी प्रहिणोति पतिं प्रति । एव पतिरपि तां दयितां प्रति प्रेषयति । 4) पाणिपादेत्यत्र त्रिवली उदरस्था वलित्रयी । चक्रवाकेति–पक्षिविशेषः ।

---

१ प्रतिक्षण C. २ जातं B. ३ ध्वनीति N ४ काचाटु० N; ५ लोकाद्भुत० N ६ this is found under s 313 after the word यति in BCDFNP, but this is never the place where H. indicates alternative names.

कुङ्कुमारुणपीवरस्तनचक्रवाकयुगाञ्चिता,
केलिसिन्धुरिवोज्ज्वला मदनस्य राजति कामिनी ॥ ३१३.१ ॥

मालिकोत्तरमालिका चेत्यन्ये ॥ ३१३.१ ॥

**नौ रौनिशा डैः ॥ ३१४ ॥**

नद्वयं रचतुष्टयं च। डैरिति त्रयोदशभिर्यतिः। यथा—

[1]मलयजरसलिप्तरम्याङ्गभाजां सिते वाससी,
शरदि हृदि च बिभ्रतीनां विशुद्धां नवैकावलीम्।
विकचकुमुदकर्णपूराञ्चितानां कुरङ्गीदृशां,
हिमरुचिकिरणावदाताभिसर्तुं निशा प्रेयसी ॥ ३१४.१ ॥

तारकेत्यन्ये ॥ ३१४.१ ॥

**नौ सौ त्यौ पङ्कजवक्त्रा घङ्गैः ॥ ३१५ ॥**

ननससतयाः। घङ्गैरिति चतुर्भिर्नवभिश्च यतिः। यथा—

[2]इह किमु विलसति सर्वऋतुश्रीः किं नु मृगाक्षी,
बहुजनजडिमविजृम्भणहेतुः कुन्दरदा वा।
अभिनवमृदुतरपल्लवपाणिः संभृततृष्णा,
समुदितनिविडपयोधरभारा पङ्कजवक्त्रा ॥ ३१५.१ ॥

**स्नज्नभ्साः सुरभिस्त्रिडैः ॥ ३१६ ॥**

सनजनभसाः। त्रिडैरिति त्रीन् वारान् पञ्चभिर्यतिः। पञ्चभिः पञ्चभिः पञ्चभिश्च यतिरित्यर्थः। यथा—

[3]स्फुटदुज्ज्वलवकुलाकुलमधुपावलिरसितैः,
पवनाहतलवलीदलपटलैरतिचपलैः।
मदने प्रियसुहृदि प्रतिभुवनं कृतविजये,
[4]सुरभिर्ध्रुवमिह गायति परिनृत्यति मुदितः ॥ ३१६.१ ॥

**य्मौ न्सौ त्सौ क्रीडा चचैः ॥ ३१७ ॥**

यमनसतसाः। चचैरिति षड्भिः षड्भिर्यतिः। यथा—

1) मलय[ज]रसेत्यत्र कर्णपूरेति—कर्णाभरणम्। कुरङ्गीदृशां स्त्रीणाम्। 2) इह किमु विलसतीत्यत्र हेमन्ते शीतेन जाड्यं भवति। स्त्रीपक्षे जनालस्यम्। शिशिरे कुन्दाः पुष्पन्ति। वसन्ते पल्लवाः निष्पद्यन्ते। ग्रीष्मे तृष्णा भवति पक्षेऽभिलाषः। प्रावृषि पयोधरा मेघाः पक्षे स्तनौ। शरदि कमलानि विकसन्ति पक्षे वदनसरसीरुहमिति भाव। 3) स्फुटदुज्ज्वलेत्यत्र मदने कामे। 4) सुरभिर्वसन्तः।

१ चेत्यन्ये F, मालिकावित्यन्ये N २ कि तु N ३ कन्दरदावा N ४ त्रिडै GN. ५ त्रिडैरिति N

[1]यदि ग्रासो वन्यं यदि विरहितो विन्ध्याचलभुवा,
वियुक्तः कान्ताभिर्यदि च तदपि स्तम्बेरमपते ।
नरेन्द्रस्ते पूजां रचयति सदा किं चैष भवता,
रणक्रीडामैत्रीं घटयति ततो मा गाः शुचमिमाम् ॥ ३१७.१ ॥

[2]न्सौ म्तौ भ्रौ हरिणीपदं चचैः ॥ ३१८ ॥

नसमतभराः । चचैरिति षड्भिश्चतुर्भिश्च यतिः । यथा —

[2]अधिगुणधनुर्दण्डं पश्यंल्लुब्धकं गहने वने,
सरभसमपक्रामन्न्यङ्कुश्चिन्तयन्निति [3]ताम्यति ।
सरसमधुरोद्गारैर्गीतैर्वागुराभिरिव प्रिया-,
ऽहह निगडिता दत्ते नैषा सांप्रतं हरिणी पदम् ॥ ३१८.१ ॥

भ्नौन्या भङ्गिः ॥ ३१९ ॥

भगणचतुष्टयं नयौ च । यथा —

मा कुरु संपदि संमदमापदि विसृज विषादं,
दीनजनेषु कृपां कुरु संस्मर चिरपुरुषाणाम् ।
संत्यज पापचरित्रमुदञ्चय[4] सुचरितमालाम्,
अद्भुतभङ्गिरियं पुरुषोत्तमसरणिरनिन्द्या ॥ ३१९.१ ॥

विच्छित्तिरिति कश्चित् ॥ ३१९.१ ॥

स्जौ स्जौ त्रौ बुद्बुदम् ॥ ३२० ॥

सजसजतराः । यथा —

[5]असमं दधन्नयपयो गभीरमध्यः सनातनो,
विमलो जयत्यविरतं जिनेन्द्रसिद्धान्तवारिधिः ।
अतिपेशलैर्गम[6]गणैस्तरंगिते यत्र सर्वदा,
क्षणदृष्टनष्टतनुभिः कुदृष्टिभिर्बुद्बुदायितम् ॥ ३२०.१ ॥

अतिधृत्यां म्सौ ज्सौ तौ गः शार्दूलविक्रीडितं ठैः[3] ॥ ३२१ ॥

मसजससततगाः । [3]ठैरिति द्वादशभिर्यतिः । यथा —

[7]क्ष्माभृत्पुंगव कोशकन्दरमुखान्निर्गत्य ते संगर-,
क्रीडासून्मदवैरिवारणघटाकुम्भस्थलीः पाटयन् ।

1) यदि ग्रास इत्यत्र स्तम्बेरमेति — हे हस्तिपते । भवता कृत्वा संपादयति । एतेन उक्तिद्वयेन गजस्य महत्त्वमारोप्यते । 2) अधिगुणेत्यत्र गुणमधिरूढो धनुर्दण्डो यस्येति तं व्याधं न्यङ्कुर्हरिणः । 3) खेदं करोति । 4) उदञ्चयेति — पुष्टिं नय । सरणिर्मार्गः । संपदि आनन्दो न क्रियते विपदि विषादो नेत्यादिलक्षणा अद्भुता । 5) असममित्यत्र असाधारणत्वम् । नया नैगमाद्यास्तद्रूपं पयस्तेन गभीरं गम्भीरं मध्यं मध्यप्रदेशो यस्येति । नित्यस्थिरनिभानर्थापेक्षया । 6) सदृशपाठसमूहे । पूर्वं दृष्टाः पश्चान्नष्टाः दृष्टनष्टास्तैरिति क्षणंक्षयवादिभिः स्यासकायितम् । 7) क्ष्माभृत् इत्यत्र राजानः पक्षे पर्वताः तेषु पुंगवो मुख्यः ।

१ शुचिमिमा D, शुभमिमा N २ sūtras 318-323 dropped in H. ३ छैरिति N.

दंष्ट्रालो नवलग्नमौक्तिकमणिस्तोमैरमृग्लेखया,
जिह्वालः करवाल एष तनुते शार्दूलविक्रीडितम् ॥ ३२१.१ ॥

**म्सौ ज्सौ न्जौ गो वायुवेगा ॥ ३२२ ॥**

मसजसनजगाः । [1]ठैरिति वर्तते । यथा—

[1]"त्यक्त्वा पुत्र[2]कलत्रवन्धुसुहृदां व्यतिकरमञ्जसा,
नित्यं संस्मर वीतरागचरणाम्बुरुहयुगं [2]"रहः ।
हंहो चित्त चिरं प्रसीद किमिदं न हि हतजीवितं,
जानीषे घनवायुवेगनिहताभ्रपटलगत्वरम्[3]" ॥ ३२२.१ ॥

**य्मौ न्सौ रौ गो मेघविस्फूर्जिता चचैः ॥ ३२३ ॥**

यमनसररगाः । चचैरिति षड्भिः षड्भिश्च यतिः । यथा—

[4]"निरुन्धानस्तापं जगति कलयंश्चण्डकोदण्डदण्डं,
पदं व्यातन्वानः सततमखिलक्ष्माभृतां चोपरिष्टात् ।
निकामं दुर्धर्षा दिशि दिशि समुल्लासयन् वाहिनीश्च,
त्वमुच्चैश्चौलुक्येश्वर घटयसे मेघविस्फूर्जितानि ॥ ३२३.१ ॥

रम्भेति स्वयंभूः ॥ ३२३.१ ॥

**य्मौ न्सौ जौ गो मकरन्दिका ॥ ३२४ ॥**

यमनसजजगाः । चचैरिति वर्तते । यथा—

इमां बालां त्रासाकुलमृगवधूविलोलविलोचनां,
किमु त्वं निःशङ्को व्यथयसि मुहुर्वियातविचेष्टितैः[5]" ।
[6]"परिक्षोदं चण्डैर्मुसलपरिघैः सहेत न मालती,
मृदुभ्राम्यद्भृङ्गीपदपरिचयाद्गलन्मकरन्दिका ॥ ३२४.१ ॥

**य्मौ न्सौ तौ गश्छाया ॥ ३२५ ॥**

यमनसततगाः । चचैरिति वर्तते । यथा—

[7]"फलं कालाक्रान्तं कुसुममरसं पत्रं न भोगास्पदं,
बहिस्तत्कार्कश्यं[3] किमपि सहजं निःसारमन्तर्वपुः ।

---

1) त्यक्त्वा पुत्रेत्यत्र मित्राणां संबन्धम् । 2) रहः एकान्ते वनमध्ये इत्यर्थः । 3) मेघसमूहवत् गत्वरं विनाशि । 4) निरुन्धानस्तापमित्यत्र जलदविचेष्टितानि । यथा मेघो हि तापं निरुणद्धि अयमपि अन्येषां राज्ञाम् । खड्गं पक्षे इन्द्रधनुः । क्ष्माभृत् राजा पर्वतश्च । वाहिनी कटकं नदी वा । 5) इमां बालामित्यत्र धृष्टविचेष्टितैः । 6) चूर्णभावम् । 7) फलं कालाक्रान्तमित्यत्र हे ताल तव फलं कालदोषदूषितं धिक् । नीरसं कुसुमं धिक् । न भोगयुक्तं पत्रं धिक् । बहिस्तत् प्रसिद्धं कार्कश्यगुणं प्रकृतिभवं धिक् । अन्तर्मध्ये निःसारगुणं धिग् विरुद्धं ।

---

१ छैरिति N २ वन्धुकलत्रपुत्र A. ३ कार्कश्ये N.
१० छन्दो०

विवृद्धिं गृध्राणां धिगुपकरणं शाखाप्रपञ्चो न ते,
किमन्यत्ताल स्याद्विरलविरला छायापि नो शीतला ॥ ३२५.१ ॥

**त्रिर्ज्सौ गो रतिलीला ॥ ३२६ ॥**

त्रीन् वारान् जगणसगणौ गुरुश्च । जसजसजसगाः । चचैरित्यनुवर्तते । यथा–

दुनोति वत तां कराम्बुजतले निवेशितकपोलां,
किमप्यहरहस्तथा कथमपि त्वदीयविरहाग्निः ।
यथा वरतनुर्न पङ्कजदलैर्न मौक्तिककलापैर्,
न चन्दनरसैर्न चन्द्रकिरणैः करोति [1]रतिलीलाम् ॥ ३२६.१ ॥

**म्तौ न्सौ रौ गः पुष्पदाम ङ्छैः ॥ ३२७ ॥**

मतनसररगाः । ङ्छैरिति पञ्चभिः सप्तभिश्च यतिः । यथा–

सेयं साकाङ्क्षा त्वयि मृगनयना [2]संगताङ्गी विलासैर्,
लीलालोलभ्रूर्दिवि कमलवनं कुर्वती नेत्रपातैः ।
हंहो पश्यैतद्विरहविधुरया ते यथा [3]सावहित्थं,
प्रक्षिप्तं कण्ठे विकसितवकुलासूत्रितं पुष्पदाम ॥ ३२७.१ ॥

**म्तौ न्सौ तौ गो वञ्चितम् ॥ ३२८ ॥**

मतनसततगाः । ङ्छैरिति वर्तते । यथा–

[4]कैश्चिच्चार्वाकैरविदितसुकृतैः शूकाविमुक्तात्मभिः,
कौलीभूयान्यैर्विहितपशुगणाघातैः परै[1]र्यज्वभिः ।
जैने धर्मेऽस्मिन् सति सततकृपापीयूषपात्रेऽप्यहो,
स्वच्छन्दं धूर्तैरहह कुटिलया बुद्ध्या जगद् वञ्चितम् ॥ ३२८.१ ॥

[2]बिम्बितमित्यन्यः ॥ ३२८.१ ॥

**य्मौ नौ रौ गो मुग्धकं चछैः ॥ ३२९ ॥**

यमननररगाः । चछैरिति षड्भिः सप्तभिश्च यतिः । यथा–

परिभ्राम्यद्भृङ्गं[3] श्वसितपरिमलैर्जपापाटलोष्ठं[5],
गिरा लीलालापप्रणयमधुरया सदानन्ददायि ।
स्फुरत्यन्तश्चित्तं[6] लिखितमिव सखे ममाद्यापि तस्याः,
[7]प्ररूढप्रेमायाश्चकितमृगदृशो मुखं मुग्धकं तत् ॥ ३२९.१ ॥

---

1) रतिलीलां स्वास्थ्यम् । 2) सेयं सा इत्यत्र शोभिताङ्गी । 3) अङ्गमोटनादिभिः आकारगोपनसहितम् । 4) कैश्चिदित्यत्र नास्तिकैरज्ञातपुण्यैः दयाहीनात्मभिः । कौलीभूयेति–तापसीभूय । अन्यैर्योगिभिः । 5) परिभ्राम्यदित्यत्र जपापाटलवद् रक्तोष्ठम् । 6) चित्तस्यान्तः अन्तश्चित्तम् । 7) उत्पन्नरागायाः । मुग्धकं मनोहरम् ।

---

१ पदैर्य० N. २ विम्बिलं A; विचितं N. ३ भ्राम्यद्भृङ्गं N.

**रः सौ तो जौ ग ऊर्जितं ञैः ॥ ३३० ॥**

रससतजजगाः। ञैरिति दशभिर्यतिः। यथा—

नेक्षसे किमहो [1]जलरिक्तां स्वामपि तावदिमां तनूं,
नो निषेधसि चण्डमरीचेर्दुःसहमातपजृम्भितम्[2]।
शारदे समयेऽपि तदस्मिन् पूरितपर्वतकन्दरा-,
ण्यूर्जितस्तनितानि दधानस्तोयद किं न हि लज्जसे ॥ ३३०.१ ॥

**नभ्रसा जौ गस्तरलम् ॥ ३३१ ॥**

नभरसजजगाः। यथा—

अय विशुद्धधिया जिनेश्वरपादपङ्कजभृङ्गतां[3],
प्रकटय [4]प्रशमं भजस्व गुरूनधीष्व सदागमम्।
विरचयार्थिजनं कृतार्थमिमं कुरुष्व तपः परं,
तरलमायुरिदं गृहाण तदीयमेतदहो फलम् ॥ ३३१.१ ॥

**म्रौ भः सौ ज्गौ माधवीलता छैः ॥ ३३२ ॥**

मरभससजगाः। छैरिति सप्तभिर्यतिः। यथा—

निःसामान्यं तवैतत् किमपि विराजति दक्षिणानिल,
[5]प्रावीण्यं यत्प्रगल्भामिह सहकारलतामनुव्रजन्।
अश्रान्तं साभिलापः स्पृशसि समुन्नयसे विधूनय-,
स्यालिङ्गस्याशु चुम्बस्यभिनवकोमलमाधवीलताम् ॥ ३३२.१ ॥

**स्गौ तरुणीवदनेन्दुः ॥ ३३३ ॥**

सगणाः पट् गुरुश्च। यथा—

मृगनाभिविनिर्मितपत्त्र[1]लतावलिलाञ्छनधारी,
जननेत्रचकोरमहोत्सवकृत्कमलद्युतिहारी।
जगतां विजयाय निबद्धमतो [6]झषलक्ष्मणि सं[2]धो,
जयति प्रतिपन्नसहायपदस्तरुणीवदनेन्दुः ॥ ३३३.१ ॥ १९।१३ ॥

**कृतौ म्रौ भ्रौ न्यौ भ्लौ सुवदना छछैः ॥ ३३४ ॥**

मरभनयभलगाः। छछैरिति सप्तभिः सप्तभिर्यतिः। यथा—

1) नेक्षसे इत्यत्र जलशून्याम्। 2) आतपविलसितम्। 3) अय विशुद्धेत्यत्र भ्रमरत्वम्। 4) उपशमभावम्। 5) निःसामान्यमित्यत्र प्रवीणस्य भावः प्रावीण्यम्। 6) झषलक्ष्मणि कन्दर्पे।

१ विनिर्मितः पत्त्र० N. २ साधो N.

[1]"आकल्पं कल्पयित्वाभिनवमृगमदैरामुच्य[2]" च [1]शिति-,
क्षौमे कृत्वा विभूषां मरकतमणिभिर्गन्तुं प्रियगृहम् ।
औत्सुक्याद्यावदस्थात् पथि [3]"मुखशशिना तावद्धततमी[2],
ज्योत्स्नी जातेति मूर्च्छामभजत सहसा कष्टं सुवदना ॥ ३३४.१ ॥

**दशगला[3] वृत्तम् ॥ ३३५ ॥**

गुरुलघू दशवारानावृत्तौ वृत्तं नाम वृत्तम् । यथा—
[4]"प्रीणिताखिलार्थिदानमूर्जितारिजिष्णुपौरुषं महर्षि-,
चित्रकृज्जितेन्द्रियत्वमेवमद्भुतान् गुणान् दधन्नरेन्द्र ।
रामपार्थधुन्धुमारमुख्यपूर्वभूमिपालवृत्तमत्र,
सत्यतां चिराय नीतवानसि त्वमुर्चकैश्चुलुक्यचन्द्र ॥ ३३५.१ ॥

**स्भौ नौ म्यौ ल्गौ मत्तेभविक्रीडितं डैः ॥ ३३६ ॥**

सभरनमयलगाः । डैरिति त्रयोदशभिर्यतिः । यथा—
उदयाद्रेः प्रसरन्नयं दिनपतिः प्रत्यग्रसन्ध्यातप[5]-,
स्फुटसिन्दूररुचिविसूत्रित[4]"-तमःसंदोहवल्लीवनः ।
तनुते [5]"वाजिजवोल्लसत्कशपुरः[6]क्रामत्सुपर्णाग्रज-,
प्रतिकारोपरिवलादायतकरो[7] मत्तेभविक्रीडितम् ॥ ३३६.१ ॥

**नो भौ मः सौ ल्गौ मुद्रा टैः ॥ ३३७ ॥**

नभभमससलगाः । टैरिति एकादशभिर्यतिः । यथा—
अयमरण्यमहीष्वपि चूतास्वादकषायितकोकिला-,
कलकलच्छलतश्चिरमाज्ञामस्खलितामिह [6]"वर्तयन् ।
कुपितमानवतीकलहानामन्तकरः पुरतः सखे,
[7]"मकरकेतुमहीपतिमुद्राव्यापरणं[8] तनुते मधुः ॥ ३३७.१ ॥

उज्ज्वलमित्यन्ये ॥ ३३७.१ ॥

**य्मौ नौ तौ गौ शोभा चछैः ॥ ३३८ ॥**

यमननततगगाः । चछैरिति षड्भिः सप्तभिश्च यतिः । यथा—

1) आकल्पं वेषं रचयित्वा । 2) आमुच्येति—परिधाय । 3) स्वमुखप्रभाभिः भूर्देशे उद्द्योतिते परलोकनाजातलज्जया गन्तुमशक्तेति भावः । 4) विसूत्रितेति—विनाशिता । 5) वाजिजवेति—वाजिजवाय वेगाय उल्लसन्ती कशा तर्जको यस्य स चासौ क्रामदरुणसारथिरुपरिष्टाद् वलादायतभुजः । 6) अयमरण्येत्यत्र वर्तयन् प्रवर्तयन् । 7) काममहीशप्रधानपदं आज्ञाज्ञापनमिति यावत् ।

१ वशिति क्षौमे N २ तावद्धततमी ADEN. ३ दगल्गा F. दसल्गा G; ४ प्राणिता N. ५ तपः स्फुट० A. ६ कसपुरः B. ७ वलादायत० N ८ मुद्रयापरणं N.

[1]गता लाक्षारागद्युतिरधरदलात्पत्रवल्ली विलुप्ता,
कपोले पर्यस्तं तिलकमलिकतो लम्बितः केशपाशः ।
च्युतः कर्णोत्तंसः करमणिवलयं स्रस्तमस्यास्तथापि,
प्रियेण [2]प्रत्यग्रः प्रथयति महतीं संगमो हन्त शोभाम् ॥ ३३८.१ ॥

**म्रौ भ्नौ तौ गौ चित्रमाला छ्चैः ॥ ३३९ ॥**

**मरभनततगगाः । छ्चैरिति सप्तभिः पड्भिश्च यतिः । यथा—**

[3]सा काङ्क्षत्यन्यमेवायमपि बत तां सारसौन्दर्यलक्ष्मीर्-,
एषा चैतं वराकी तरुणनिवहोऽमूं च लावण्यपुण्याम् ।
एवं प्रत्यग्रकेलीकुशलललितैर्वद्धहासं वसन्ते,
देवः पुष्पायुधोऽसौ रमयति रतिं दर्शयंश्चित्रमालाम्[4] ॥ ३३९.१ ॥

**सुप्रभेत्यन्यः ॥ ३३९.१ ॥**

**म्नौ स्नौ म्यौ लगौ सद्रत्नमाला ङ्जैः ॥ ३४० ॥**

**मनसनमयलगाः । ङ्जैरिति पञ्चभिरष्टभिश्च यतिः । यथा—**

सन्ध्यान्ते प्रतिदिशमियं समुदिता तारातति: शोभते,
[5]श्यामाया अभिसरणकेलिरभसात्क्रुटेव मुक्तावलिः ।
यद्वा व्योमनि मनसिजेन लिखिता जैत्रप्रशस्तिर्निजा,
विस्फूर्जद्घनतमतमिस्रफणिनां सद्रत्नमालाथवा ॥ ३४०.१ ॥

**भीरसल्गा नन्दकम् ॥ ३४१ ॥**

**भगणचतुष्टयं रसलगाश्च । यथा—**

[6]अद्भुतसंगरसागरमन्थनसंभवां कलयन् श्रियं,
दोष्णि दधद्वसुधावलयं च कुमारपालमहीपते ।
त्वं बलिराजनियन्त्रणविश्रुतविक्रमः पुरुषोत्तमः,
केवलमेष जगद्विजयी त्वदसिर्द्विषां न तु [7]नन्दकः ॥ ३४१.१ ॥

---

1) गता लाक्षेति—चुम्बनेनेति शेषः । विलुप्तेति—अङ्गमर्दनेनेति । 2) प्रत्यग्रो नवीनः कथयति । 3) सा काङ्क्षत्यन्यमेवेत्यत्र सा नारी अन्यं पुरुषं काम्यति । स तु पुमान् तां दयिताम् । पुनः एषा सारसौन्दर्यलक्ष्मीर्वराकी सती एनं प्रत्यक्षदृष्टं पुमांसम् । तरुणपुरुषनिवहः अमुं लावण्यपुण्यां एवंविधां अभिलपति । एवं नूतनकेलिनिपुणविलासैः वद्धहासं यथा भवति तथा कामः रतिं दयितां रमयति । 4) आश्चर्यमालां अनया रीत्या वसन्ते दर्शयन्नित्यर्थः । 5) सन्ध्यान्ते प्रतिदिशमित्यत्र श्यामाया षोडशवर्षदेशीया कामिनी तस्याः । 6) अद्भुतेत्यत्र संग्रामसमुद्रमथनोद्भवाम् । 7) नन्दको हर्षकरः । पक्षे विष्णोः खड्गस्य नन्दक इति नाम । यदाहुः—शङ्खोऽस्य पाञ्चजन्योऽङ्कः श्रीवत्सोऽसिस्तु नन्दक इति ।

---

१ छ्छैः. G. २ चैतं वराका A, चैवं वराकी E ३ रत्नमाला FGH. ४ तमतमिस्र DNP.

**भ्रौ न्भौ भ्रौ ल्गौ कामलता ॥ ३४२ ॥**

भरनभभरलगाः । यथा—

कौतुकमात्रमेव भवतो यदि शस्त्रपरिग्रहे तदा,
चापशिलीमुखान् घटयितुं कुरु चूतदलावमोटनम् ।
कस्य मनः करोति न हि वश्यमसौ पुरतो यतः स्फुरन्,
काम लतावलीतरलनो मलयानिल एप ते सखा ॥ ३४२.१ ॥

उत्पलमालिकेत्यन्ये ॥ ३४२.१ ॥

**भ्नौ यनौ न्नौ ल्गौ दीपिकाशिखा गचैः ॥ ३४३ ॥**

भनयननरलगाः । गचैरिति त्रिभिः षड्भिश्च यतिः । यथा—

प्राक्तनसुकृतसमूहे [1]वलवदिह समुल्लसत्यपि,
[2]दुर्नयकरणमनीषा श्रियमपहरति क्षणान्नृणाम् ।
पश्यत यदनुपभुक्तेऽपि हि विनिहिततैलपूरणे,
निर्भरचलितसमीरो [3]दलयति खलु दीपिकाशिखाम् ॥ ३४३.१ ॥

**त्भौ ज्भौ ज्भौ ल्गौ शशाङ्करचितम् ॥ ३४४ ॥**

तभजभजभलगाः । यथा—

त्वं निर्जितोऽसि निरवद्यया [4]वरतनोर्मुखाम्बुजरुचा,
विस्तीर्णनेत्रललितैः कुरङ्गहतकोऽयमप्यवजितः ।
युक्तं शशाङ्क रचितं त्वया [5]यदमुना सहैक्यमधुना,
संगः समानगुणयोगिभि[6]र्भवति देहिनां [7]समुचितः ॥ ३४४.१ ॥ २०।११

**प्रकृतौ म्रौ भ्नौ यिः स्रग्धरा छछैः ॥ ३४५ ॥**

मरभना यगणत्रयं च । छछैरिति सप्तभिः सप्तभिर्यतिः । यथा—

आवासः पर्णशाला वपुषि च वसनं नूतना त्वक्तरूणां,
पाणावापाढयष्टिः[8] शिरसि च चिकुरैर्नव्यगुम्फो जटानाम् ।
कर्णेऽक्षस्रग्[9] धरायाः परिवृढ[10] विपिने त्वद्भयात् संप्रतीत्थं,
वृत्तिर्द्विट्रैरहोभिस्त्वदरिनृपजनैः शिक्षिता तापसानाम् ॥ ३४५.१ ॥

---

1) प्राक्तनेत्यत्र वलवत्सुष्ठुरित्यर्थेऽव्ययम् । 2) दुःखं नयति इति दुर्नयानि तानि करणानि कार्याणि तेषामिच्छा । 3) स्फोटयति । 4) त्वं निर्जितो[सि] निरेत्यत्र कामिन्या । 5) अमुना मृगेण । ऐक्यं मैत्र्यम् । 6) पुरुषैः । 7) समुचितो योग्यः । 8) आवास इत्यत्र आषाढो व्रतिनां दण्डः । 9) अक्षस्रग् अक्षमाला । 10) पृथ्व्याः स्वामिन् ।

---

१ प्राक्तने N. २ वलित० N

**त्रौ भ्रौ ज्भौ रः कथागतिः[1] ॥ ३४६ ॥**

तरभनजभराः। छ्छैरिति वर्तते। यथा—

[1]केष्वप्यखर्वगर्वोद्विधुरितभुवनेष्वनर्गलगर्जितैर्,
अम्भोधरेष्विवाशु श्रवणपथगतेष्वभूद्विनिमीलितम्।
[2]आखण्डलस्य कामप्यभजत नयनासितोत्पलकाननं,
प्रीतिं चुलुक्यचन्द्र प्रकृतनृपकथागते त्वयि तु क्षणात्॥ ३४६.१ ॥

**भ्रौ न्रौ न्रौ रो ललितविक्रमो जैः ॥ ३४७ ॥**

भरनरनरराः। जैरिति दशभिर्यतिः। यथा—

सद्गुणरत्नरोहणगिरे यशोधवलिताखिलाशामुख,
द्वेषिवधूमुखाम्बुजविधो वयं किमिव वर्णयामस्तव।
यस्य वशंवदत्रिभुवनश्रियं विबुधसुन्दरीमण्डलैर्,
जम्भरिपोश्चमत्कृतिरसं दधल्ललितविक्रमो गीयते॥ ३४७.१ ॥

**मौ तनिसा मत्तक्रीडा जङैः ॥ ३४८ ॥**

मद्वयं तगणो नत्रयं सश्च। जङैरिति अष्टभिः पञ्चभिश्च यतिः। यथा—

नो जानीते कृत्याकृत्यं विलुठति च [3]धरणितलशयने,
भूयो भूयो मूर्च्छां धत्ते द्रढयति[3] न शिथिलमपि वसनम्।
[4]अर्थापेतं निःसंबन्धं वचनमपि वदति नदतितरां,
मत्तक्रीडामाप्ता[5] बाला सुभग तव [6]नवविरहविधुरा॥ ३४८.१ ॥

**रजतनिसाश्चन्दनप्रकृतिः ॥ ३४९ ॥**

रजता नत्रयं सश्च। यथा—

दर्शनाद्यदीह संतापमपहरति तदपि बत [7]तया,
नार्जितं धनं प्रभूतं जरसि सुखदमतिसरलतया।
किं तु चन्दनप्रकृत्या सखि सततमपि फलरहितया,
[8]दुर्भुजंगघृष्टया[4] यौवनमिदमफलमहह गमितम्॥ ३४९.१ ॥

---

1) केष्वप्यखर्वे [ति]—केष्वपि भूपालेषु। 2) इन्द्रस्य सहस्रनेत्रकमलवनं त्वत्कथाश्रवणेन प्रीतिं प्राप यत्पूर्वमन्येषां दुर्नृपान्तराणां कथाश्रवणेन मीलितं समभूत्। मेघगर्जारववत्। 3) नो जानीते इत्यत्र धरणीतलमेव शयनं यस्येति। 4) अर्थरहितमाकाङ्क्षाहीनम्। 5) आप्ता प्राप्ता। 6) नवीनविरहपीडिता। 7) दर्शनाद्यदीत्यत्र तयेति—प्रकृत्या। 8) दुष्टभुजंगघृष्टतया यथा दुष्टभुजंगः वञ्चनेन फलं नार्पयति।

---

१ छ्छैः added in GH. २ ललिता॰ G, sūtras 347-362 dropped in H. ३ दढयति N. ४ घृष्ट्या P.

**न्जभजिराः सिद्धिः ॥ ३५० ॥**

**नजभा जत्रयं[1] रश्च । यथा –**

सततनमत्पुरंदरशिरःशुचिरत्नकिरीटमालिका,
विमलमयूखशेखरितपादनखद्युतिजालशालिनम् ।
विपुलदयानिधि [1]प्रणयिकल्पतरुं भजत जिनेश्वरं,
यदि [2]भवकातरस्त्वमिह वाञ्छसि सिद्धिमनुत्तमां सखे ॥ ३५०.१ ॥

**चित्रलता, रुचिरा, शशिवदना चेत्यन्ये ॥ ३५०.१ ॥**

**नजीभ्रा वनमञ्जरी ॥ ३५१ ॥**

**नगणो जगणचतुष्टयं भरौ च । यथा –**

सह धनुषा समदो मदनः किल [3]शीतदीधितिमौलिना,
सुहृदिह भस्म कृतस्तव [4]दीप्तहुताशपिङ्गलया दृशा ।
इति हि मधो कुमते स्मर मा विचरान्तिके तरलभ्रुवां,
विरहजुषां सकलज्वलिताङ्गभृतां दधद् वनमञ्जरीः[2] ॥ ३५१.१ ॥

**त्री र्नौ रस्तरंगः ॥ ३५२ ॥**

**रनरनरनराः । यथा –**

निर्ममो भव विधेहि पञ्चपरमेष्ठिसंसरणमन्वहं,
संयमं कुरु भज क्षमां यदि समीहसे [5]सुखमनश्वरम्[3] ।
यौवनं किल तडिल्लताचपलमभ्रचञ्चलमिदं धनं,
जीवितव्यमपि मारुताहतसरित्तरंगतरलं सखे ॥ ३५२.१ ॥ २११८ ॥

**आकृतौ भ्रौ न्रौ न्रौ न्गौ मद्रकं जैः ॥ ३५३ ॥**

**भरनरनरनगाः । जैरिति दशभिर्यतिः । यथा –**

देव जगत्त्रयैकतिलक प्रभो [6]प्रणयिलोककल्पविटपिन्,
पुण्यवतां [7]शिरोमणिपदं[4] व्यभाजि जिननाथ तैरिह जनैः ।
ये विकचैश्चिराय चरणारविन्दयुगमर्चयन्ति[5] कुसुमैर्,
मद्रकमन्दगीतिभिरभिष्टुवन्ति च चरित्रमत्रभवतः ॥ ३५३.१ ॥

---

1) सततनमदित्यत्र प्रणयिनो भक्ताः । 2) भवात्संसारात् कातरो भीतः । 3) सह धनुषेत्यत्र शीतदीधिनीति–ईश्वरेण । 4) दीप्तेति–तृतीयलोचनेन । को भाव. ? कन्दर्पो हि धनुषा बलवान् तद्धनुः शकलीकृतं स च विनाशितश्च । त्वं च तस्य मित्रम् । यदि ईश्वरेणैकेन लोचनेन प्रज्वालितः । किं चासां स्त्रीणां विरहयोगात् [अङ्गं] दाहानुपक्रमत एव त्वामपि मित्रबलाभावात् भस्मीकरिष्यतीति भावः । 5) अनश्वरं अविनाशि । 6) देव जगत्त्रयैकेत्यत्र भक्तभावि[क]कल्पपादप । 7) शिरोमणि० मुकुटभावं व्यभाजि धृतम् ।

---

१ जगणत्रयं GNP. २ वनमंजरि· N. ३ अनश्विरं A. ४ पदं व्यभाजि NKP. ५ युग्मम० A.

**स्तौ त्नौ स्नौ गौं महास्रग्धरा जछैः ॥ ३५४ ॥**

सततनसररगाः। जछैरिति अष्टभिः सप्तभिश्च यतिः। यथा—

[1]अभि नागान्याति योऽयं स मम मम पुनर्यच्छिरो[2] हुंकरोति,
प्रचलोऽयं [3]यत्कबन्धः प्रहरति स तु मे प्राणनाथोऽस्तु सख्यः।
दलयन् यो दुष्टभूपानहमहमिकया स्वर्गसीमन्तिनीनां,
परिशुश्रावेति वाचो वरवरणमहास्रग्धराणां रणेषु ॥ ३५४.१ ॥

**भृगौ मदिरा ॥ ३५५ ॥**

भृगाविति भगणसप्तकं गुरुश्च। यथा—

ह्रीविनियन्त्रणविघ्नमपाकुरुतेऽभिनवावतरद्वयसां,
प्रौढपुरन्ध्रिजनस्य तथा तिरयत्यपराधपदं सहसा।
कोपपदेन च गोत्रपरिस्खलितं न च कारयते तदसौ,
कामसखी मदिरेह [4]सतर्षमभाजि चिरं किल कामिजनैः ॥ ३५५.१ ॥
लताकुसुममित्यन्ये ॥ ३५५.१ ॥

**मत्यनौगा वरतनुः ॥ ३५६ ॥**

मतया नगणचतुष्टयं गुरुश्च। यथा—

[5]चक्षु.सौन्दर्यं मृगवध्वां परभृतयुवतिषु मधुरगिरं,
यानं हंसीषु स्मितमुद्बुद्धनवविचकिलकुसुमततिषु।
रोलम्बश्रेण्यां कचलक्ष्मीं वदनरुचिमपि विकचकमले,
न्यासं कृत्वा सा खलु याता क्वचिदपि मम वरतनुरधुना ॥ ३५६.१ ॥

**म्सौ ज्सौ ज्सौ ज्गौ दीपार्चिष्ठैः ॥ ३५७ ॥**

मसजसजसजगाः। ठैरिति द्वादशभिर्यतिः। यथा—

प्रायो दुष्कृतकर्मसु स्वयममी प्रयान्ति पिशुनाः सहायतां,
यद्वत्तद्वदनिन्दनीयसुकृतक्रियासु भृशमन्तरायताम्।
वह्नौ संततजन्तुसंकुलमहावनप्लुषि सखा समीरणो,
दीपार्चिष्यखिलोपकारिणि भवत्यकाण्डकुपितान्तकः खलु ॥ ३५७.१ ॥
२२१५ ॥

**विकृतौ न्जौ भ्जौ भ्जौ भ्लौ गोऽश्वललितं टैः ॥ ३५८ ॥**

नजभजभजभलगाः। टैरित्येकादशभिर्यतिः। यथा—

1) अभिनागानित्यत्र नागान् हस्तिनोऽभि। समराङ्गणे युध्यमानेषु भटेषु सुराङ्गनानां परस्परं वचनप्रपञ्चः। 2) यस्य शिरः यच्छिरः। 3) मस्तकहीनं वपुः कबन्धः। 4) सतर्षमिति—सतृष्णम्। 5) चक्षुःसौन्दर्यमित्यत्र मृतस्त्रीकः पुमान् कंचित् प्रति वक्ति मम कान्ता एतानि वस्तूनि एषु मुक्त्वा गता।

१ one म dropped in N, २ प्रवलोयं AEP, प्रभवोयं B ३ हसीषु N. ४ कुसुमजातिषु N. ५ जगौ N. ६ दीपार्चि ठै N ७ गश्च ललितं N.

निरयमहान्धकूपमसमान्धकारभरदुर्विलोकमतुलं,
निपतितगाढमोहपटलान्धजन्तुविविधप्रलापतुमुलम् ।
प्रवचनचक्षुपेक्षत इमं चिराय तनुभृत्तथापि चलचञ्चु-,
चपलतरेन्द्रियार्थललितैर्विकृष्ट" इह तत्क्षणाधिपतति ॥ ३५८.१ ॥

अत्र केचित्सप्तमसगणस्थाने जगणमिच्छन्ति ॥ ३५८.१ ॥

**मौ तो नौल्गौ मत्ताक्रीडा जङैः ॥ ३५९ ॥**

**ममता नगणचतुष्टयं लघुगुरू च । जङैरित्यष्टाभिः पञ्चभिश्च यतिः । यथा –**

"हस्ताक्षेपैर्वारंवारं विदलयति किल निकरमवनिरुहां,
पादानुच्चैः क्षोणीन्द्राणां विघटयति दशनकुलिशविकर्षणैः ।
वेगावेगात्पादन्यासैर्नमयति च फणिपटलमुरगपतेर्,
इत्थं मत्ता क्रीडामात्रं विरचयति नृपवर तव करिघटा ॥ ३५९.१ ॥

**ताज्जौल्गाः शङ्खः ॥ ३६० ॥**

**तगणात्परं जगणषट्कं लघुगुरू च । यथा –**

चौलुक्यनरेश्वर वैभववासव वीरं गभीरिमवारिनिधे,
सौन्दर्यमनोभव कान्तिनिशाकर सेवककल्पतरो भवतः ।
को नाम गुणानिह संकलयेत् किल वच्मि तु किंचन ते यशसां,
"संपर्कमवाप्य स "शङ्खधरोऽभवदद्रिसुताकमितुः" सदृशः ॥ ३६०.१ ॥

**नाद्वंसगतिः ॥ ३६१ ॥**

**नगणात्परं जगणषट्कं लघुगुरू च । यथा –**

मदनगजेन्द्रसहोदयमादधती सहसा विमलप्रसरल्-,
लवणिमसिन्धुरनिद्रितनीलसरोरुहचारुलसन्नयना ।
विशदतराम्बरसंपदियं रजनीकरबिम्बमुखं दधती,
शरदिव संश्रितहंसगतिर्युवतिर्विदधाति न कस्य मुदम् ॥ ३६१.१ ॥

महातरुणीदयितमित्यन्ये ॥ ३६१.१ ॥

**त्री र्नौ र्ल्गाश्चित्रकम् ॥ ३६२ ॥**

**रनरनरनरलगाः । यथा –**

1) निरयेत्यत्र विकृष्ट आकर्षितः । 2) हस्ताक्षेपैरित्यत्र प्रसारणैः भनक्ति वृक्षाणां समूहम् । पादाः पर्यन्तपर्वताः । विघटयति चूर्णयति दन्तवज्रस्पर्शनैः । 3) चौलुक्येत्यत्र सबन्धं प्राप्य । 4 नारायणः । 5 अद्रिसुता पार्वती तस्याः कमिता भर्ता शिवः तस्य समान. श्वेतवर्ण इत्यर्थ. ।

१ श्च ललितै N २ फणिप० N ३ करिघटा A ४ वीरं CDNP ५ वंशगति GH

श्रयतां नृपकुमारपाल तव दर्शनत्वरितया व्यधायि यत्,
पादतामरसयोः सुवर्णकटके कराम्बुरुहयोश्च नूपुरे।
हारदाम च नितम्बबिम्बफलके भृशं हृदि च रत्नमेखला,
निर्ममे जतुरसोऽ[१]लिकेऽधरदले च [1]चित्रकमधीरचक्षुपा ॥ ३६२.१ ॥

**भ्मौ स्भौ निल्गाश्चपलगतिः ॥ ३६३ ॥**

भमसभा नत्रयं लघुगुरू[२] च। यथा—

भूमिभृतामङ्केपु विलास स्वरुचिसदृगमति[2] हि विदधती,
सत्वरमानीता स्फुटमुच्चैः पटह इव नदति यशसि निजे।
[3]दुर्ललिता स्तम्बेरमकान्तेव नृपवर [4]दृढतरगुण[३]गणैः,
साधु भुजस्तम्भे भवता श्रीरतिचपलगतिरिह निगडिता ॥ ३६३.१ ॥

**ज्सौ ज्सौ यिल्गा वृन्दारकम् ॥ ३६४ ॥**

जसजसा यत्रयं लघुगुरू[४] च। यथा—

तदंह्रिपरिताडनं सरभसं कचाकर्पणं स्वेच्छया चोर्जितं,
मुखाम्बुरुहचुम्बनं प्रति मुहुर्नखैर्दारणं[५] निर्विशङ्कं जवात्।
नरेन्द्रतिलक [5]त्वदीयपरिपन्थिनां तुल्यकालं तदेतत्[६]कृतं,
[6]शिवाभिरिह [7]सगरे [8]गगनसीम्नि [9]वृन्दारकप्रेयसीभिस्तथा ॥ ३६४.१ ॥
२३।७ ॥

**संकृतौ भ्तौ न्सौ भ्नौ न्यौ तन्वी टैः ॥ ३६५ ॥**

भतनसभभनयाः। टैरिति द्वादशभिर्यतिः। यथा—

दन्तमयूखाः शशधररुचयो वागमृतं [10]रतिरमणधनुर्भ्रू[९]र्,
लोचनलक्ष्मीस्तुलयति कमलं नूतनविद्रुमसुहृदधरश्च।
चम्पकगर्भप्रतिकृति च वपुर्हंसगतेरनुहरति च [11]यातं,
वच्मि विशेषं कमपरमथवा रम्यम[१०]हो किमिव हि न हि तन्व्याः ॥ ३६५.१ ॥

**नौ भ्नौ ज्नौ न्यौ ललितलता छछैः ३६६ ॥**

ननभनजननयाः। छछैरिति सप्तभिः सप्तभिर्यतिः। यथा—

1) श्रूयतां नृपेत्यत्र चित्रकं तिलकं चपलनेत्रया। 2) भूमिभृतामित्यत्र अति हि भृशार्थेऽखण्डमव्ययम्। 3) दुर्ललिता उत्कटहस्तिनीव। 4) दृढतरेति—गुणा औदार्यादयः, पक्षे रज्जव॰। नियन्त्रिता। 5) तदंह्रिपरीत्यत्र त्वद्वैरिणां समकालम्। 6) शिवाभिः क्रोष्ट्रीभि॰। 7) सगरे सग्रामे। 8) गगनसीम्नि आकाशप्रदेशे। 9) वृन्दारकेति—देवीभिः। 10) दन्तमयूखा इत्यत्र रतिरमणेति—कामधनुर्वद् भ्रू॰। 11) यातं गमनम्।

१ जतुरसोलक P. २ लगौ च A ३ दृढतरगुणै साधु॰ N ४ लगौ च A ५ दारुणं ABCDN. ६ तदेव कृत N, ७ च added in N ८ मयूपा G. ९ धनुर्भ्रूलो॰ N १० रम्यमहा N

परिमलविलुठन्मधुकरकवरी-[1]विरचितनिरवधिशोभाम्,
अभिनवकुसुमस्मितसुभगरुचि मृदुतरकिसलयपाणिम् ।
इह मधुसमये विलसति नियतं मनसिजशरपरिविद्धस्,
तनुललितलतायुवतिमयमहो कलयति मलयसमीरः ॥ ३६६.१ ॥

**नौ र्मेघमाला ॥ ३६७ ॥**

**नगणद्वयं रगणषट्कं च । यथा–**

त्रिभुवनविजयाय बद्धाभिमानस्य [2]शृङ्गारयोनेः प्रयाणक्षणे,
कनकघटितदण्डमेतत्किमाभाति नीलातपत्रं लसत्सर्वतः ।
[3]नवतपविगमश्रिया दीप्रदीपेऽथ किं कज्जलार्थं धृतं [4]कर्परं,
[5]भ्रममिति विदधाति वीक्ष्योन्नतां मेघमालां जनो विद्युतालंकृताम् ॥ ३६७.१ ॥

**भृङ्गाब्जनीलालकेत्येके ॥ ३६७.१ ॥**

**भूः सुभद्रम् ॥ ३६८ ॥**

**भूरिति भगणाष्टकम् । यथा–**

शौर्यमृगेन्द्र चुलुक्यनरेन्द्र महत्त्वगिरीन्द्र गभीरिमसागर,
दोष्णि चिरं निखिलाचलसिन्धुयुतं वसुधावलयं तव विभ्रति ।
अद्भुतभारपरिश्रममुक्ति-[6]समुच्छ्वसितो भुजगाधिपतिस्त्वयि,
[7]शंसति संततमेष सुभद्रमखण्डमहोदयमस्त्विति संप्रति ॥ ३६८.१ ॥

**भितनिसा द्रुतलघुपदगतिः ॥ ३६९ ॥**

**भत्रयं तगणो नत्रयं सश्च । यथा–**

[8]मुञ्चत नूपुरकङ्कणकाञ्चीः क्वणितभरविरचितकलकलाः,
स्वीकुरुताशुगतिं समयोऽयं न खलु समदगजललितगतेः ।
संभ्रमवान् स्ववधूरनुशासद्गिरिसरिदभिमुखमतिकृपणः[9],
संप्रति सिद्धपते तव याति [10]द्रुतलघुपदगति रिपुनिवहः ॥ ३६९.१ ॥

**न्यौ भ्तौ निसौ संभ्रान्ता ॥ ३७० ॥**

**नयभता नगणत्रयं सश्च । यथा–**

1) परिमलेत्यत्र कवरी केशपाशः । 2) त्रिभुवनविजयेत्यत्र शृङ्गारेति–कामस्य । 3) नवतपेति–नवीनप्रावृट्लक्ष्म्या । 4) कर्परं कोसिडं इति प्रसिद्धम् । 5) भ्रमं भ्रान्तिम् । 6) शौर्यमृगेन्द्रेत्यत्र समुच्छ्वसितः उच्छ्वासं प्राप्त. । 7) शंसति प्रशंसति । 8) मुञ्चत नूपुरेत्यत्र पलायनसमये कलकलेति–शब्दानुकरणम् । 9) अतिकृपण इति–अतिदीनः । 10 द्रुतेति–क्रियाविशेषणम् ।

१ अभिनय N २ किशलय B ३ कलयसमीर· A ४ दण्डमेतत् repeated in A ५ भू AN. ६ सुभद्रकं G. ७ समुद्बसितो N. ८ कृपणान् N

[1]रचयतु जन्मस्नानविधौ वस्त्रिजगदधिपचरमजिनपतेः,
सुरपतितुङ्गोत्सङ्गनिषण्णस्य किमपि वलविलसितमतुलम्।
मृदुचरणाङ्गुष्ठाग्रसमाक्रान्तिविधुरचलितकनकशिखरि-,
स्फुटभयसंभ्रान्तामरयक्षोरगपति[1] निखिलदुरितदलनम् ॥ ३७०.१ ॥

**म्सौ ज्सौ तौ भ्रौ विभ्रमगतिः ॥ ३७१ ॥**

मसजसततभराः। यथा –
दृष्ट्वा त्वत्पृतनातुरंगमखुरोद्धूतं[2] धरित्रीरजो[3] गगनाङ्गणे,
[2]तत्तद्भूतिमतीं विहाय सपदि स्वां राजधानीमपि [3]प्रियजीविताः।
गच्छन्तोऽनुगिरीन्[4] पलायनविधिप्रत्यूहहेतुं मुहुः सहचारिणां,
दाराणां [4]कलहंसविभ्रमगतिं निन्दन्ति चौलुक्यचन्द्र तवारयः ॥ ३७१.१ ॥
२४।७ ॥

**अभिकृतौ भ्मस्भनीगाः क्रौञ्चपदा ङ्ङ्जैः ॥ ३७२ ॥**

**भमसभा नगणचतुष्टयं गुरुश्च। ङ्ङ्जैरिति पञ्चभिः पञ्चभिरष्टभिश्च[5] यतिः।**

यथा –
[5]प्रोज्झ्य पुराणि त्वद्भययोगान्नृपवर भवदरिरतिशयविधुरो[6],
दूरमरण्यं प्राप्य [7]कलत्रैः सह समजनि [8]गतिरयवशतृपितः।
सारसनादात् स स्वयमादौ [9]प्रसरति कियदपि भुवमथ सहसा,
प्रेक्ष्य चकोरक्रौञ्चपदाङ्कां ध्रुवमिह सरिदिति निगदति दयिताः ॥ ३७२.१ ॥

**नीस्भिगा हंसलयो ज्छैः ॥ ३७३ ॥**

**नगणचतुष्टयं सगणो भगणत्रयं गुरुश्च। ज्छैरिति अष्टभिः सप्तभिश्च यतिः।**

यथा –
[10]भवशतविरचितनिरवधिसुकृतैस्त्वत्कृतधर्मपथोऽधिगतः,[6]
[11]प्रणयिनि मयि कुरु तदसमकरुणां पश्य सुधारसपूर्णदृशा।
अभिमततरमिति वितर जिनपते [12]शक्रफणीन्द्रनरेन्द्रनुत,
प्रतिदिनमपि तव पदकमलयुगे देव भवेयमहं सलयः ॥ ३७३.१ ॥

---

1) रचयतु जन्मेत्यत्र वः युष्माकं दुरितदलनं वीरजिनस्य वलविलसितं रचयतु निष्पादयतु इति क्रियासंबन्धः। 2) दृष्ट्वा त्वत्पृतनेत्यत्र तत्तत्सपत्नसंपूर्णाम्। 3) प्रियं जीवित येषां ते प्रियजीविताः। 4) कलहंसवद्राजहंस इव विभ्रमेण युक्ता गतिस्ताम्। 5) प्रोज्झ्य पुराणीत्यत्र त्यक्त्वा भवद्भयसंबन्धात्। 6) विधुरो दीनः। 7) कलत्रैर्दारैः। 8) गमनवेगवशतृपातुरः। 9) प्रसरति त्वत्कटकागमनबुद्ध्या स्त्रीणां (स्त्रियः) पश्चान्मुक्त्वा स्वयं अग्रे आगच्छति। 10) भवशतेत्यत्र भवानां शतम्। 11) प्रणयिनीति – स्नेहभाजि। 12) शक्रेत्यादि इन्द्रधरणेन्द्रचक्रवर्तिनुतः।

---

१ पति A २ पृथना N, ३ धरणीरजो B, ४ नु गिरिं N ५ अष्टभि dropped in P
६ विर dropped in N

**त्यौ भौ नीगौ हंसपदा त्रैः ॥ ३७४ ॥**

तयभभा नगणचतुष्टयं गुरुश्च[१] । त्रैरिति दशभिर्यतिः । यथा –

अम्भोजवनं व्याकोशमिदं सलिलमतिविमलमिति[1] वनसरसि,
भ्रान्तोऽपि हि मा कार्षीर्गमनं यदिह विचरति हरिणशिशुनयना ।
तस्या अतिरम्यां वीक्ष्य गतिं [2]निरुपमितिमतिसातिशयमधिगतवतीं[२],
ह्रीतः सपदि त्वं हंस पदात् पदमपि चलसि न खलु नियतमदः ॥ ३७४.१ ॥

**न्जज्या नीगौ चपलम् ॥ ३७५ ॥**

नजजया नगणचतुष्टयं गुरुश्च । यथा –

क्वचिदपि चूतलतामुपभुङ्क्ते क्वचिदपि पिबति विचकिललतां,
क्वचिदपि चुम्बति माधविकां च क्वचिदपि परिसरति च लवलीम् ।
बहुविधपुष्पसमृद्धिनिधाने विलसति नवतरमधुसमये,
[3]चपलभुजंगविलासमजस्रं कलयति [4]मधुकर इह मुदितः ॥ ३७५.१ ॥
२५.४ ॥

**उत्कृतौ मौ तो निरस्लगा[३] भुजंगविजृम्भितं जटैः ॥ ३७६ ॥**

ममता नगणत्रयं रसलगाः । जटैरिति अष्टाभिरेकादशभिश्च यतिः । यथा –

क्वापि स्वैरं क्रूरक्रीडन्महिषशतमचकित[5]-चरत्कुरंगकुलं[४] क्वचित्,
क्वापि क्रीडाव्यग्रक्रोडं[6] क्वचिदपि मदजडविहरन्मतंगजसंकुलम् ।
सिंहक्ष्वेडारौद्रं क्वापि क्वचिदपि विषविषम[५]महाभुजंगविजृम्भितं[7],
श्रीचौलुक्यक्षोणीनाथ स्फुटमजनि भवदरिमहीभुजामधुना पुरम् ॥ ३७६.१ ॥

**मनूसगगा अपवाहो झचचैः ॥ ३७७ ॥**

मो नगणषट्कं सगगाश्च । झचचै[६]रिति नवभिः षड्भिः षड्भिश्च यतिः । यथा –

[8]यः श्लाघ्यः प्रतिदिनमपि मदनदहनगरुडगमनचतुरास्याद्यैर्[७],
गेयो यः सुरपतिपरिषदि च किमपि[८] मुदितविबुधरमणीवृन्दैः ।
चौलुक्यान्वयजलनिधिहिमकर कियदिह तव नृपवर तस्यैतद्,
यत्सर्वं कृतमखिलमपरथमपभटमपगजमपवाहं च ॥ ३७७.१ ॥

---

1) अम्भोजवनमित्यत्र इतिरत्र हेत्वर्थे । 2) निरुपमेति – निर्गता रूपेण(उप)मितिर्मानो(नं)यस्मात्स तम् । 3) क्वचिदपीत्यत्र भुजगो गणिकापतिस्तस्य चेष्टाम् । 4) भ्रमरः मुदितो हर्षं प्राप्तः सन् करोति । 5) क्वापीत्यत्र अचकितेति – शून्यत्वादिति शेषः । 6) क्रोडो वराह । 7) विषविषेति – क्रीडितम् । 8) य. श्लाघ्य इत्यत्र मदनेति – ईश्वरकृष्णब्रह्मादिभि. ।

---

१ गुरुश्च A; २ निरुपमगितिमति AC ३ निरस्गा G ४ महिषशतभ्रमचकितवरकुरंगकुल N ५ विषमतर P, विष dropped in D, ६ झचचरिति N ७ चतुरास्यायैर् N ८ किमुपि A.

**भो नौ स्मौ[1] निल्गा आपीडो डैः[2] ॥ ३७८ ॥**

भननसमा नगणत्रयं लघुगुरू[3] च। डैरिति[4] त्रयोदशभिर्यतिः। यथा–

[1)]पश्य विविधवरविटपिनिकुञ्जश्यामीकृतविपुलतरकटकभूरू,
[2)]आश्रमगतलसदिभहरिमैत्रीप्रेक्षारसवदमरयुवतिजनः।
[3)]रैवतकगिरिरयमिह पुरस्ताद्यस्मिन् जिनचरणनसनमिलिता-,
शेषसुरपतिपतदमलपुण्यापीडैर्भवति सुरभिरयमनिलः[5] ॥ ३७८.१ ॥

**न्जौ न्सौ भनिल्गा वेगवती ॥ ३७९ ॥**

नजनसभा नगणत्रयं लघुगुरू[6] च। यथा–

[4)]नभसि भृशं स्तनति भरितदिक्कन्दरमभिनवजलधरपटले,
धृतमुदि नृत्यति च[7] मधुरकेकाकलकलजुषि समदशिखिकुले।
स्फुटितकदम्बकुटज-[5)]सुमनःसर्जपरिमलमिलदलिनि च वने,
[6)]मनसिशये च [7)]भुवनजयसंवेगवति बत भवसि पथिक कथम् ॥ ३७९.१ ॥

**नजभजिभ्जल्गाः सुधाकलशो ढैः ॥ ३८० ॥**

नजभा जत्रयभजलगाः। ढैरिति चतुर्दशभिर्यतिः। यथा–

[8)]अयमनुनीय सर्वसुरकार्यकृते मम वल्लभेन [9)]दिविषत्पतिना,
ननु विनियोजितः [10)]कवलितश्च तत्रिपुरान्तकृन्नयनहव्यभुजा।
इति हृदये विचिन्त्य परिजीर्थयितुं[8] [11)]मकरध्वजं सपदि पूर्वदिशा,
नियतमुदासि[12)] संप्रति [13)]सुधाकलशः परिपूर्णशीतरुचिबिम्बमिषात्[9] ॥ ३८०.१ ॥

२६।५ ॥

## उक्तादिजातिप्रकरणम्।



1) पश्य विविधेति–समीपपृथ्वी। 2) आश्रमेति–तीर्थवासे तन्महिम्ना उपशान्तवैरः। 3) रैवतेति–राजते इति क्रियाध्याहारः। 4) नभसि भृशमित्यत्र आकाशे गर्जिते। 5) सुमनः अनेकार्थे मालतीवाचकः। 6) मनसिशये कामे। 7) भुवनेति–सम्भवति। 8) अयमनुनीयेत्यत्र पूर्वं हि तारकदैत्ये पीडितजगत्त्रये इन्द्रेण ईश्वर ध्यानाच्चालयितुं कामः प्रेषितः स च ईश्वरेण दग्ध इति श्रुतिः। आग्रहं कृत्वा। 9) दिविषत्पतीति–इन्द्रेण। 10) कवलित. कवलत्वं प्रापित. शंभुनयनाग्निना। 11) मकरेति–कामम्। 12) उदासीति–उत्पाटित। 13) अमृतकुम्भ. पूर्णचन्द्रच्छलात्।

---

१ स्मो N २ ड्डै G, डै N ३ लगौ च A ४ ढैरिति चतुर्दशभिर्यति N ५ सुरपतिपदपदतमल A. ६ लगौ च A ७ च dropped in N ८ परिजीवितु N ९ P adds समर्थयाचके

**शेषजातौ मतिनायि मालाचित्रं दैः ॥ ३८१ ॥**

मस्तगणत्रयं नगणद्वयं यगणत्रयं च एषां समाहारद्वन्द्वः। दैरिति एकादशभिर्यतिः। यथा–

पान्थाः शीघ्रं[1] यात नातः परं वः
क्षणमपि यदिह शुभं तत्र गत्वाश्रयध्वं,
कान्तां नो चेदत्र तां देवतां स्वा
स्मरत सपदि भवतो हन्त संहर्तुकामः।
[1]कालोऽयं जीमूतनामाभ्युपैति
स्तनितबधिरितमहीमण्डलश्चण्डविद्युन्-,
मालाचित्रास्त्रप्रहारीति दूरात्
कथयति शिखिनिवहस्तारकेकारवेण ॥ ३८१.१ ॥ २७१ ॥

**म्तौ य्तौ निर्स्ल्गाः[2] प्रमोदमहोदयो घछदैः ॥ ३८२ ॥**

मतयता नगणत्रयं रसलगाश्च। घछदैरिति चतुर्भिः सप्तभिरेकादशभिश्च यतिः।

यथा–

काप्युद्ग्रीवा [2]प्रास्थित बद्धोत्कण्ठं
करकलितशिथिलवसना दधाव च काचन,
[3]स्तम्भं दध्रे कापि च काचिच्चासी-
दतिशयितबहलपुलकाङ्कुरोल्लसिताङ्गिका।
काचिच्चक्रे भूषणमङ्गे काचित्
तिलकमकृत नवमलिके[4] चुलुक्यमहीपतौ,
यात्रां कृत्वोपेयुषि[5] पौरस्त्रीणां
समजनि निरवधिरधुना प्रमोदमहोदयः ॥ ३८२.१ ॥

यथा वा–

[6]वन्द्या देवी पर्वतपुत्री नित्यं मधुमधुरकमलवदना पुरन्ध्र्यधिदेवता,[3]
देवैः स्तुत्या किंनरगेया भक्त्यावरचरितमहिपमथनी[4] जगत्त्रयनायिका।
सिद्धैर्ध्येया केसरियाना कामं रणचतुररसिकहृदया त्रिलोचनवल्लभा,
वीरैः पूज्या दर्पणपाणिर्नूनं गुणनिलयलटभललिता सतीषु धुरंधरा ॥ ३८२.२ ॥ २९१ ॥

1) पान्थाः शीघ्रमित्यत्र कालः कृतान्तः श्यामवर्णश्च। जीमूतनामा। इदं विशेष्यं न तु कालस्य विशेषणं इदं हि क्रियते। 2) काप्युद्ग्रीवेत्यत्र प्रास्थितेति–चचाल। 3) स्तम्भं जाड्यम्। 4) अलिके भाले। 5) उपेयुषि आगते। 6) वन्द्या देवीत्यत्र पर्वतेति–गौरी। पुरन्ध्र्यधीति–पुरन्ध्रीणामधिदेवता सर्वोत्तमरूपेत्यर्थः। अवरचि (P.चरि for चि)तेति–दुश्चरितम्। गुणेति–गुणनिलया चासौ लटभललिता चेति विशेषणकर्मधारयः। लटभं प्रधानम्।

१ वक्ष्यणमपि A. २ नि र्सल्गा F, निरसलगा GHP. ३ पुरन्ध्र्यपि देवता N ४ मथिनी C.

**द्विर्भजसना भ्यौ नृत्तललितम् ॥ ३८३ ॥**

द्वौ वारौ भजसन इत्येते गणाः । भयौ च केवलौ । भजसनभजसनभया इति ।

यथा –

1)अद्य कलहंसलल[1]ने ललितमन्थरगतौ
सपदि मान[2]य सपत्नरहितं स्वं,
कोकिलविलासिनि विधेहि कलगीतिरचना-
चतुरतामदममन्दमतिमत्ता ।
दुर्ललितनृत्तललितं 2)युवमयूर रचय
त्वमपि संप्रति चिराय गतशङ्कः,
सर्वगुणकेलिसदनं चकितबालमृगलो-
लनयनां प्रियतमामिह विना ताम् ॥ ३८३.१ ॥ ३०।१ ॥

**द्वादश ना ल्गौ ललितलता त्रिर्जैः ॥ ३८४ ॥**

द्वादश नगणा लघुगुरू[3] च । त्रिर्जैरिति त्रीन् वारान् दशभिर्यतिः । यथा –

3)जिनचरणसरसिरुहपरिचरणरतमनसि
परमशममुपदधति कलितपरमलये,
विषयबलदलनजुषि बत तरुणि विफलमति-
चतुरतरनयनगतिमिह यतिनि तनुषे ।
व्रज मदन निजसदनमप[4]सरणमुपरचय
पिकतरुण रणरणकमुपजनयसि न हि,
प्रकटयसि मधुसमय किमिति नवमद[5]मुदित-
मधुपकुलकलरणितमुखरललितलताम् ॥ ३८४.१ ॥ ३८।१ ॥

**मौ तनी[6]जभ्राः पिपीलिका जणैः ॥ ३८५ ॥**

मद्वयं तगणो नगणचतुष्टयं जभराः । जणैरिति अष्टभिः पञ्चदशभिश्च यतिः ।

यथा –

4)निष्प्रत्यूहं[7] पुण्यां लक्ष्मीमविरतमभिलपसि यदि रमयितुं
सुखं च यदीच्छसि,

---

1) अद्य कलेति – दुर्ललितशब्दे लक्षणया सविलासम् । 2) युवा चासौ मयूरश्च । 3) जिनचरणेत्यत्र रतेति – रक्तम् । लये ध्याने । अपसरेति – प्रत्यागमनम् । हे पिकतरुण त्वमप्यपसरण कुरु यतोऽस्य मुनेः औत्सुक्यं नहि जनयसि । नवदर्पहर्षितभ्रमरवृन्दमनोज्ञशब्दितवाचालललितवल्लीम् । 4) निष्प्रत्यूहमित्यत्र निरन्तरायम् । अभिलपती(सी)ति – आत्मनेपदमनित्यमिति न्यायात परस्मैपदं वाञ्छसि ।

---

१ ललिने A  २ मानयि A.  ३ लगौ च A  ४ उपसरणमुपरसय A  ५ तव मद० N.  ६ मातनी० EHN.  ७ नि.प्रत्यूहं AB

स्थातुं [1)]न्यायोन्मीलद्बुद्धे लघुभिरपि सह बहुभिरिह कुरु मा
विरोधपदं तदा।
विस्फूर्जत्फूत्कारं[१] क्रीडाकवलितसकलमृगकुलमजगरं
[2)]भुजंगमसुन्मदं[२],
[3)]संघातं कृत्वा पश्यैता ग्लपितवपुषमनवधिरचितरुजा
अदन्ति पिपीलिकाः ॥ ३८५.१ ॥ ३०।१ ॥

**एषैव नीपरतः पञ्चदशपञ्चदशलवृद्धा[३] क्रमेण करभ ३५-पणव ४०-मालाः[४] ४२ ॥ ३८६ ॥**

एषैव पिपीलिका चतुर्भ्यो नगणेभ्यः परतः पञ्चभिर्दशभिः पञ्चदशभिश्च लघुभिर्वृद्धा[५] शेषगणेषु[६] तथैव स्थितेषु क्रमेण करभादयो[७] भवन्ति। तत्र[८] पञ्चभिर्वृद्धा[९] पिपीलिकाकरभः। यथा–

[4)]नित्यं लक्ष्मच्छायाच्छन्नः
कलयतु कथमिव तव वदनरुचिममृतरुचिश्चिरं क्षयसंयुतः,
तुल्यं नाब्जं [5)]स्फूर्जद्धूली-
विधुरितजननयनयुगमतिमृदुकरचरणस्य निर्मलचारुणः।
कण्ठस्थेयं दासी[१०] श्यामा
परभृतयुवतिरपि मधुपरिचयकलविरुतिर्निसर्गकलध्वनेः[6)],
भ्रूवल्लीभङ्गे छेकाया हरिणनयनमचतुरमतिललिततनु
करभोरु नो[११] सदृशं दृशः ॥ ३८६.१ ॥ ३५।१ ॥

दशभिर्वृद्धा पिपीलिकापणवः। यथा–

[7)]रुन्दोऽमन्दः कुन्दच्छायः
शरदमलघनतुहिनविकचकुमुदवनहरहसितसितः[8)] शशाङ्ककरोज्ज्वलः,
तारः [9)]पारावारापारः
स्थलजलगगनतलसकलभुवनपथधवलनपरिचितः [10)]प्रसाधितदिङ्मुखः।

1) न्यायेन उन्मीलन्ती विकसन्ती बुद्धिर्यस्येति तत्संबोधनम्। 2) भुजैर्यै गच्छन्ति ते सर्वेऽपि गोधासर्पाजगराद्यो भुजंगमा भुजपरिसर्पा उच्यन्ते। 3 सघेति – एकीभूय। ग्लपितं वपुर्यस्य तं कीटिकाः। 4) नित्यं लक्ष्मेत्यत्र कलङ्कच्छायाव्याप्तः। 5) रज परागश्च। 6) स्वभावरम्यध्वनेः। 7) रुन्दोऽमन्देत्यत्र रुन्दो विपुलः। 8) तुहिन-विकचकुमुदवन-शंकराट्टहासवत् शुभ्रः। 9) पारावारवत् समुद्रवदपारः। 10) मण्डितं दिङ्मुखं येन।

१ फूत्कार N २ उन्मुदं B. ३ वृद्धा BFH. ४ माला A ५ वृद्धा ACDEN ६ शेषेषु गणेषु B. ७ करमादयोऽपि B. ८ तेऽत्र N ९ वृद्धा. C १० दाशी B ११ ते N

[1]लोकालोकच्छेदं गत्वा

[2]दृढकठिनविकटदिगवधितटघटनविवलनवलयितो[3] विशुद्धयशश्चयः,

प्रोत्तुङ्गः श्वेतप्राकारो

[4]ध्वनितगुणपणव तव जयति नृपवर नवललितवसतेर्जगत्रितयश्रियः ॥३८६.२॥४०।१

पञ्चदशभिर्वृद्धा पिपीलिकामाला । यथा–

उत्फुल्लाम्भोजाक्ष्यास्तस्याः

कुसुमशरसुभग तव विरहदव इह हि जयिनि समुपचरणविपये व्यधायि सखीजनैः,

[5]अङ्गे वासः कर्पूराम्भ-

स्तिमितशुचि तुहिनकिरणकरपरिभवचतुरधवलिम कुचतटयुगे सुमौक्तिकदाम च ।

[6]रम्भागुल्मं लीलागारं

मलयजरसकलितवसुधमभिनवविकचकुमुदवनदलसमुदयैश्च [7]तल्पककल्पना,

नव्या मौलौ मल्लीमाला

तदिदमखिलमपि दवहुतवहरुचि परिचितमहिम विरचयति मुहुः

प्रदाहमहाज्वरम् ॥३८६.३॥४५।१॥

## शेषजातिप्रकरणम् ।

### अथ दण्डकाः ।

यत् किञ्चिद् दृश्यते छन्दः षड्विंशत्यक्षराधिकम् ।
[8]शेषजात्यादिकं मुक्त्वा तत् सर्वं दण्डकं विदुः ॥ ३८६.४ ॥

तत्र–

**नारूक्र चण्डवृष्टिः ॥ ३८७ ॥**

**ना इति नगणद्वयं रूक्र इति रगणसप्तकं च । समाहारो द्वन्द्वः । यथा–**

[9]अभिनवतरदुर्मदोद्दामपाथोदमालाप्रतिच्छादिते सर्वतो व्योमनि,
स्फुटितकुटजकेतकीपांसुपुञ्जच्छटाच्छोटिताशेपदिश्यैन्द्रदिग्मारुते[10] ।
मुदितनिखिलनीलकण्ठैः कृते क्रूरकेकारवव्याकुले [11]ताण्डवाडम्बरे,
कथमिव चलितोऽसि भोः पान्थ हित्वा प्रियां [12]चण्डवृष्टिप्रपाताकुले वर्त्मनि ॥३८७.१॥

**चण्डवृष्टिप्रपात इत्यन्ये ॥ ३८७.१ ॥**

1) लोकालोकनाम्नो मानुपोत्तरस्य गिरेः पर्यन्तम् । 2) सबल. कठिनः कर्कशः विपुलः । 3) अवधेस्तटानि अवधितटानि दिशां, वलयाकारं प्राप्त. । 4) ध्वनितो गुणा एव पटहो(पणवो) यस्येति । 5) अङ्गे वास इत्यत्र वस्त्रम् । तिमितेति–क्लिन्नम् । 6) कदलीगुल्मं केलीगृहम् । 7) शय्यारचनं संपादयन्ति । शेषजातिप्रकरणम् । 8) शेपजात्यादिकमिति–आदिशब्दाद् वक्ष्यमाणच्छन्दसां समशीर्षादीनां ग्रहणम् । 9) अभिनवतरेत्यत्र पाथोदेति–मेघमाला । 10) इन्द्रो देवता अस्या ऐन्द्री दिक् कर्मधारयः तस्या वायौ । 11) नृत्याडम्बरे । 12) चण्डा प्रचण्डा या वृष्टिः तस्याः पतनेन व्याकुले ।

१ विचलनवल० B, विवलनचल० N. २ समुपवरण० N, स० च० विधये P ३ वसुधामभि० N. ४ रुहि N. ५ पाशु ABC ६ पुंसच्छटा A, ७ प्रयात० BFP.

**[1]यथोत्तरमेकैकरवृद्धा अर्णार्णवव्यालजीमूतलीला-
करोद्दामशङ्खादयः ॥ ३८८ ॥**

**चण्डवृष्टेरूर्ध्वमेकैकरगणवृद्धाः क्रमेणार्णादयो दण्डकाः । तत्र नगणाभ्यां परैरष्टभी रगणैरर्णः । यथा –**

[2]अविरलगुरुशाखिनोऽरण्यभागान् समुत्तुङ्गशृङ्गावलीशालिनः
[3]सर्वभूमीभृतो,
विपुलतरतरंगसंसंगिनीः कूलिनीरुच्छ्रितानेकसौधान् पुर-
ग्रामदेशानपि ।
[4]स्थगयति तमसि प्रपन्ने सपत्नत्वमुन्मुक्तधैर्यस्य पाथो
निधेर्मङ्क्षु रज्यद्वपुः,
कुपित इव तदर्णसः प्रोद्ययौ तस्य संहारकारी समुद्यत्करो-
ऽयं निशावल्लभः ॥ ३८८.१ ॥

**नवभिरर्णवः । यथा –**

[5]प्रसृतनिबिडमारुतान्दोलिताश्वत्थसंशीर्ण[१]पर्णौघविस्फार-
वातोलिको[२]पूर्यमाणाम्बरे,
घनवन[३]दवदह्यमानाखिलक्रूरशार्दूलपोतोद्भटोन्नाद-
संत्रस्तमा[४]तङ्गयूथाकुले ।
दिनकरकरतप्तकोलावलीश्रीयमाणार्द्रतल्ले लसल्लोल-
कल्लोलवाचालमाद्यन्महा-,
र्णवपयसि ननु प्रिय ग्रीष्मकालेऽधुना मा स्म गा मानय त्वं हि
पीनस्तनाश्लेषसौख्यानि मे ॥ ३८८.२ ॥

**दशभिर्व्यालः । यथा –**

[6]चिरवहदरघट्ट[५]संपूर्यमाणोच्छलत्सारिणीतोयधाराभिरामं सदैकान्त-
कान्तप्रसर्पल्लता-,

---

1) यथोत्तरमित्यत्र एकैक'राजिरा'गणवृद्धा इति । 2) अविरलेत्यत्र वृद्धवृक्षान् । 3) विश्वपर्वतान् । 4) स्थगयतीति – आच्छादनं कुर्वति तमोगणे वैरभावं प्रपन्नेऽङ्गीकृते । उन्मुक्तेति – तावन्मया सर्वं व्याप्तं किंच अनेनापि सर्वं व्याप्यते तन्मामपि कदाचिद् व्याप्स्यतीति धैर्यहीनस्य । रज्यद्वपुर्यस्येति – उदयसमये चन्द्रो रक्तो वर्ण्यते इति कविसमय. । तदर्णस इति समुद्रजलात् निर्ययौ तमसो विनाशकारी । हस्ताः किरणाश्च करा उच्यन्ते । 5) प्रसृतनिबिडेत्यत्र अश्वत्थः पिप्पलः । पोतो बालः । कोल. शूकरः । अखातं सरस्तल्लः । आश्लेषः सवन्ध. । 6) चिरवहदरघट्टेत्यत्र अरहट इति प्रसिद्ध । गुल्मः वृक्षान्तरितम् ।

---

१ ससीर्ण A २ वातोलिकी A ३ घनकलदव C, ४ सत्रस्तानातं यूथा० A ५ घट्टपूर्यमाणोच्छल-च्छारणी B, घट्टसपूर्यमापोच्छ० N;

वहलिततरुगुल्मकेलीगृहं ये पुरोद्यानमु[१]द्दामलीलाजुपः स्त्रीसखाश्चारु चेरु[२]श्चुलुक्येश्वर ।
[1]तृपितकरटियूथभल्लूकसदोह[३]कोलव्रजव्याकुलाश्यान[2]कल्लोलिनीवारि दुर्वारसूर्यद्युति,
[3]व्यतिकरविधुरीकृतव्यालसंरुध्यमानद्रुमच्छायमुद्दण्डकान्तारमीयुस्त्वदीयद्विपस्तेऽधुना ॥ ३८८.३ ॥

**एकादशभिर्जीमूतः । यथा —**

[4]जिन[४]पतिपदपङ्कजस्पर्शपुण्यी[५]कृताशेषशृङ्गः पुरस्तादयं तत्तदाश्चर्यसंपन्निदानं भुवो भूषणं,
प्रतिविपिननिकुञ्जकूज[६]त्पिकीपञ्चमोच्चारसंव[७]र्गितस्वर्गसीमन्तिनीवर्गगीतिप्रपञ्चाभिरामोऽन्वहम् ।
कुरुवकसहकारकारस्कराशोकजम्बूकदम्बेङ्गुदीवेणुकान्तारमाला[5]प्रतिच्छन्नमार्तण्डचण्डा[८]तपः,
प्रतितटविनिविष्टजीमूतसंदोहनिर्मुच्यमानामृतासारपूर्णोद्वह[९]न्निर्झरः पश्य दिष्टयोज्जयन्तो गिरिः ॥ ३८८.४ ॥

**द्वादशभिर्लीलाकरः । यथा —**

[6]घनपरिमलसारकर्पूरपानीयतिम्यद्दुकूलं कुकूलश्रियं पद्मिनीपल्लवस्रस्त[१०]रः खादिराङ्गारविस्फूर्जितं,
[7]तुहिनकिरणचन्द्रिका हन्त हालाहलत्वं नवं चन्दनं तप्तलोहोपमां वेणुवीणानिनादोऽपि कर्णज्वरत्वं दधत् ।
अयि तव विरहे यदस्या मृगाक्ष्या भवन्नामधेयाक्षरोच्चारमन्त्रैकरक्षा[११]जुपः सांप्रतं सर्वमेवाभजद् व्यत्ययं[8],
त[१२]दतिसुभग सान्द्रपीयूषलीलाकरैस्तैर्वचोभिः समाश्वासयैनां[१३] चिरायान्यथा तु त्वमेवात्र [9]निःशूकचूडामणिः ॥ ३८८.५ ॥

---

1) तृपितकरटि(टी)[नि] – भल्लूक ऋक्षः । 2) आश्याना ईषत् शुष्का नदी । 3) व्यतिकरः संबन्धः । व्याकुलीकृतम् । 4) जिनपतिपदेत्यत्र पवित्रीकृताखिलशिखर. । संवर्गितस्वर्गकामिनी । अन्वहं निरन्तरम् । कारस्करो वृक्षः । इङ्गुदी गुडी । वेणुर्वंशः । 5) प्रतीति – आच्छादितः । जीमूत० मेघसमूहनिर्मुच्यमानजलवेगवद्धर्ष. । 6) घनपरिमलेत्यत्र घनो वहलः प्रधानकर्पूरजलसिक्तपट्ट[दु]कूलम् । कुकूलेति – तुषानलशोभां दाहाधिकत्वम् । विस्फूर्जितं अनुकारम् । 7) चन्द्रज्योत्स्ना । विषत्वम् । 8) व्यत्ययं वैपरीत्यम् । 9) निर्दयशिरोमणिः ।

---

१ पुरोद्दामद्यानमुलीला० A २ चेलुश्चु० A ३ सदाह A ४ पति dropped in N. ५ पुण्यकृता N ६ कुजत् A. ७ सवर्गगीति प्रप० C ८ चन्द्रातप A ९ पूर्णोद्वाहश्चिज्झर A १० श्रस्तर P. ११ रक्षायुष. B, १२ तदस्ति N १३ एता P

त्रयोदशभिरुद्दामः। यथा—

[1]"वलयितवरकन्धरं वल्गदुत्तुङ्गतेजस्विगन्धर्वराजीखुरक्षुण्णविश्वं-
भराक्षोदसंदोहविक्षेपणादुर्दिनाडम्बरं[2]",
प्रथममपि निरीक्ष्य सप्रेमकान्तामुखाम्भोरुहालोकने स क्षणं कौतुकी
नष्टकामोऽपि यावद्भवत्युन्मनास्त्वद्विपक्षव्रजः।
नृप तव सहसा जयश्रीविलासैकधामाभ्रमातङ्ग[3]-संस्पर्धिनोऽभ्रंकपैर्विग्रहै-
र्भीषणाः क्षोभयन्तो जगद्गर्जितैरूर्जितैः,
स्नुतमदजलनिर्झरैर्ध्वस्तधूलीवितानाः कृतान्ता इवोद्दामगन्धद्विपास्-
तावदाविर्भवन्तश्चिरान्मूर्च्छयामासुरेनं विभो॥ ३८८.६॥

चतुर्दशभिः शङ्खः। यथा—

[4]"अमरपतिकरिभ्रमं बिभ्रतीभाः समग्राः कलङ्कः कलाविभ्रमं धारय-
त्यत्रिनेत्रप्रसूतस्य कृष्णो वहत्यन्धकध्वंसकर्तुस्तुलां,
कुवलयवनमातनोति श्रियं पौण्डरीकीं कलिन्दात्मजा जह्नुकन्योज्ज्वलं
वारि धत्ते विधत्तेऽञ्जनाद्रिर्विलासं च कैलासपृथ्वीभृतः।
कलयति लवणोदधिः क्षीरपाथोधिलीलायितं शेषशोभामशेषाह्वयः[5] प्राप्नु-
वन्तीन्द्रनीलाश्च[6] मुक्तामणीनां समासादयन्ति त्विषं,
विचकिलहरहासनीहारहारेन्दुशङ्खावदातैरमीभिः स्फुरद्भिर्महीपालचूडामणे
[7]शासनैश्वर्यवज्रायुध त्वद्यशोराशिभिः॥ ३८८.७॥

आदिशब्दात् पञ्चदशभिः समुद्रः षोडशभिर्भुजंग इत्येवमादयो यथेष्टकृतनामानो यावदेकोनसहस्राक्षरैः पादस्तावद्भवन्ति॥ ३८८.७॥

**नाभ्यां रवद्यादयः प्रचितः॥ ३८९॥**

नगणद्वयात् परे यादयः सर्वे वर्णगणा यदा भवन्ति तदा प्रचितः। [8]रवद् इत्य-

1) वलयितवरेत्यत्र वलयिता वलयाकारं प्रापिता कन्धरा यत्रेति क्रियाविशेषणम्। वल्गन्तो धावन्तस्तेजस्विनो गन्धर्वा अश्वास्तेषाम्। 2) दुर्दिनमिव दुर्दिनं मेघजं तमस्तस्याडम्बरस्तम्। 3) अभ्रमातङ्ग ऐरावणः। अभ्रं आकाशं कषन्तीति अभ्रकषा.। उच्चैरुच्चा। विग्रहा(है). शरीरा(रैः)ः। ऊर्जितैर्दीप्रैः। कृतान्ताः यमा इव श्यामवर्णत्वात्। उद्दामेति—उत्कटमूर्च्छां प्रापयामासुः। 4) अमरपतीत्यत्र इन्द्रहस्तिभ्रान्तिम्। सर्वेऽपीभा· श्यामा अपि शुभ्रा जाता.। अत्रिनेत्रेति—चन्द्रो हि अत्रिऋषिनेत्रजात इति श्रुतिः। अन्धकेति—ईश्वरस्य। कलिन्देति—यमुना गङ्गोज्वलम्। शेषेति—शुक्तः स। 5) अखिलनागाः। 6) इन्द्रः मणिभेदः। 7) शासन आज्ञा ऐश्वर्य च ताभ्या वज्रायुधस्तत्संबोधनम्। 8) रवदित्यतिदेशादिति—अत्र अन्यत्र विस्तारेण प्ररूपितस्य सक्षेपेण कथनमतिदेश। कस्मिन्नपि दण्डके रवद् यगणानां न्यासः भवतु, कस्मिन्नपि भगणानां, कस्मिन्नपि तगणानां इति। पुन· सप्तसु यगणेषु प्रचित सप्तसु भगणेषु प्रचित.। तथा तगणादिष्वपि ज्ञेयम्। ततः परं सर्वेषां गणानां न्यासः। सदृशान्येवार्णार्णवादीनि इति।

१ वलात्तुङ्ग N २ तेजश्वि B ३ रुहावलोकने A ४ धामोऽभ्रमा० N ५ श्रुत० A श्रुत० ODN. ६ करिविभ्रमं A ७ विभ्रती भो N ८ अशेषाह्वय N ९ शुभनामानो P. १० क्षरपादः N.

तिदेशात्सप्तभियैः प्रचितः । ततः परमेकैकयादिवृद्ध्या अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयोऽत्रापि भवन्ति । यथा –

[1]विलसदुरुतरवारिप्रचण्डे महावाहिनीव्यूहविस्फारणव्यक्तशक्तौ,
प्रकटयति रुचिराखण्डकोदण्डदण्डं दिशैत्युच्चकै [2]राजहंसप्रणाशम् ।
प्रशमयति निखिलं मेदिनीचक्रसंतापविस्फूर्जितं[3] न्यक्कृतार्कप्रतापे,
[4]प्रचितघनवलैयुक्ते नभस्यायमाने चुलुक्येश्वरे को न धत्ते प्रमोदम् ॥ ३८९.१ ॥

एवमादिषु शेषगणेषूदाहार्यम् । एकैकगणवृद्ध्या च अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयोऽप्युदाहार्याः ।

**नगभ्यामष्टादिराः पन्नग-दम्भोलि-हेलावली-मालती-केलि-कङ्केल्लि-लीलाविलासादयः ॥ ३९० ॥**

नगणाद्गुरोश्च परे अष्टादिसंख्या रगणा येषु ते यथासंख्यं पन्नगादयो दण्डका भवन्ति । तत्राष्टरगणः पन्नगः । यथा –

[5]अविकलध्यानसंतानधूमध्वजज्योतिराडम्बरप्लुष्टनिःशेषकर्मेन्धनो,
[6]विदलितोदग्रभूयःकषायश्चिरायैष पायादपायात् स वः पार्श्वनाथो जिनः ।
कमठदैत्ये च गाढोपसर्गक्रियाकर्कशे तत्प्रतीकारबद्धप्रयत्ने भृशं,
प्रकटितात्यन्तभक्तौ तदा पन्नगेन्द्रे चँ यस्याभवन् दृष्टिपाताः कृपार्द्राः समाः ॥ ३९०.१ ॥

एवमेकैकरगणवृद्ध्यान्येऽपि षडुदाहार्याः ॥ ३९०.१ ॥

**लोर्यथेष्टं राश्चण्डकालः ॥ ३९१ ॥**

लघुपञ्चकात्परे यदृच्छया क्रियमाणा रगणाश्चण्डकालः । यथा –

[7]विविधमणिमेखलाश्रेणिविश्राणितश्रीणि हित्वा पुराण्याशु चान्तःपुराण्युच्चकैः,
करटितुरगादिसेनासहस्राणि च स्वीकृतच्छद्मकर्मन्दिवेषास्त्वदीयद्विपः ।
प्रतिदिशममी गिरीणां महाकन्दराः शाखिगुल्मानि कूलंकषाकूलरन्ध्राणि च,
स्फुरति तव चण्डकाले कराले कृपाणे सदा सश्रयन्ते महीपालचूडामणे ॥ ३९१.१ ॥

एवमेकैकरगणवृद्ध्याप्युदाहार्यम् ॥ ३९१.१ ॥

---

1) विलसदुस्तरवारीत्यत्र महावाहिनी सेना नदी च । कोदण्डं इन्द्रधनुः । 2) राज्ञां जीवा. पक्षे राजहंसाः तेषां गमनम् । 3) विस्फूर्जितं क्रीडितम् । 4) प्रचितेति – घन प्रभूतं यद्बलं सैन्यं पक्षे मेघानां बलम् । नभस्येति – भाद्रपदमासत्वमाचरति । 5) अविकलध्यानेति – अविकलं असाधारणं ध्यानं तस्य संतानः परंपरा [तेन] एव अग्निज्वालाडम्बरेण दग्धः कर्मकाष्ठनिकरो येनेति सः । 6) विदलितेति – भूयो बहुः । 7) विविधमणीत्यत्र मेखला अद्रेर्मध्यभागा. विविधमणयश्च ता मेखलाश्च विविधमणिमेखलाः तासां श्रेणयः ताभ्यो विश्राणिता श्रीर्यैः । पक्षे मेखला रसना । यद्वा पुरपक्षे मेखला खङ्गबन्धो यस्य असबलंति प्रसिद्धिः इति प्रत्यन्तरे ।

---

१ स्यु॰ F २ नरोवारि A ३ व्यक्त dropped in N. ४ दिश्युत्यु॰ N. ५ वलयुक्तो N. ६ स्युः F. ७ वयस्या॰ N ८ कर्मादिवे॰ ADN ९ ABN drop एव, D adds अन्यद् before अप्यु॰

**याः सिंहविक्रान्तः ॥ ३९२ ॥**

लोः परे यथेष्टं यगणा यत्र स सिंहविक्रान्तः । यथा–

तरुणतरणितेजःप्रतप्ता वराहा इवारण्यभागेषु मुस्ताक्षतिं पल्वलान्ते,
विदधति किल केचित्तथान्ये महाभूभृतां कन्दराः कौशिकौघा[1] इवाभिश्रयन्ते ।
विपिनगहनमध्ये पुनः केऽपि [2]शाखामृगक्रीडितं बिभ्रति [3]प्रत्यनीकक्षितीशाः,
प्रकटयति सदा सिंहविक्रान्तलीलामनूनां त्वयीमां धरित्रीश चौलुक्यचन्द्र ॥ ३९२.१

एवमेकैकयगणवृद्धयाप्युदाहार्यम् ॥ ३९२.१ ॥

**लूगिभ्यां मेघमाला ॥ ३९३ ॥**

लघुषट्कात् गुरुत्रयाच्च परे यथेष्टं यगणा यत्र प्रयुज्यन्ते स मेघमाला नाम दण्डकः । यथा–

अविरलमदपाथोनिर्झर[2]प्लावितक्षोणिपीठा महाशैलशृङ्गायमाणाः,
कपिशरुचिलसद्दन्ताशनिद्योतरौद्रा महागर्जितत्रासिताशेषलोकाः ।
रिपुनरपतिमातंगाः क्षणादेव देव प्रणाशं ययुः [4]संयुगान्तर्युगान्ता-,
निल इव विपुलप्राणे महामेघमाला महीपालधुर्ये त्वयि [5]प्रोज्जिहाने ॥ ३९३.१ ॥

एवमेकैकयगणवृद्धयान्येऽप्युदाहार्याः ॥ ३९३.१ ॥

**यथेष्टं रा मत्तमातंगः ॥ ३९४ ॥**

स्वेच्छया यत्र रगणाः प्रयुज्यन्ते स मत्तमातंगः । पुनर्यथेष्टग्रहणं लूगिभ्यामित्ये-[3]तस्य निवृत्त्यर्थम् । यथा–

[6]पुष्पचापस्य चापश्रियं बिभ्रती भङ्गुरभ्रूविलासैः स्मितस्मेरकस्तूरिका-,
केलिपत्रावलीभङ्गिविभ्राजिगण्डस्थलेनेन्दुबिम्बानुकारं सदा कुर्वती ।
चारुवक्रोक्तिगर्भैर्वचोभिर्विदग्धैरमन्दं च पीयूषनि[4]ष्यन्दमातन्वती,
मत्तमातंगलीलागतिः काञ्चनच्छेदगौरी मुदं कस्य नाविष्करोति प्रिया ॥ ३९४.१ ॥

एवमेकैकरगणवृद्धयान्यदप्युदाहार्यम् ॥ ३९४.१ ॥

**साः कुसुमास्तरणः[5] ॥ ३९५ ॥**

यथेष्टं सगणा यत्र प्रयुज्यन्ते स कुसुमास्तरणः । यथा–

1) तरुणतरणीत्यत्र कौशिकास्तत्समूहा इव घूकश्रेणय इव । 2) शाखामृगेति–वानरः । 3) प्रत्यनीका वैरिण. । 4) अविरलेत्यत्र संयुगान्तरिति–संग्राममध्ये । यथा युगान्तानिले प्रोद्यते सति विपुलप्राणे महापराक्रमे महामेघमाला. प्रणाशं यान्ति । 5) प्रोज्जीति–देदीप्यमाने.। 6) पुष्पचापेत्यत्र कन्दर्पस्य धनु.श्रियम् । भङ्गुरेति वक्रम् । हास्यविकस्वरम् । कस्तूरीपत्रवल्लीलक्ष्मस्थाने भङ्गिः रचना । चारु इति–गर्भे मध्ये । आविरिति–प्रकटीकरोति ।

१ सा ABCDN २ निर्झराप्लावित P ३ इत्यस्य F ४ निष्पन्द N ५ कुसुमास्तर H.

[1]सुभग त्वयि दूरमुपेयुषि सा न कदाचिदुपैति विलासगृहाभिमुखं,
विकचाब्जवने न ददाति दृशं शिशिरागुरुचन्दनपङ्कमपाकुरुते ।
न च हृष्यति [2]चाटुकरीषु सखीष्वपि पक्वपलाण्डुनिभं वहते वदनं,
कुसुमास्तरणानि पिनष्टितरां परिमुह्यति शीतलशीतमयूखकरैः ॥ ३९५.१ ॥

एवमेकैकसगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९५.१ ॥

**याः सिंहविक्रीडः ॥ ३९६ ॥**

यत्र यथेष्टं यगणाः प्रयुज्यन्ते स सिंहविक्रीडः । यथा—

[3]क्वचित्पङ्कशङ्काभ्रमत्कोलदंष्ट्रासमुल्लेखनिष्पिष्ट-
वेश्मान्तकाचावनीकं,
क्वचिन्नालिकेरीफलास्फालनव्यग्रशाखामृगश्रेणि-
पर्याकुलोद्यानभागम् ।
क्वचित्तप्तमज्जन्महासैरिभोद्दामशृङ्गाग्रवातोच्छलद्-
दीर्घिकावारिसान्द्रं,
क्वचित् सिंहविक्रीडवूत्कारघोरं चुलुक्येन्द्र जज्ञे पुरं
त्वद्रिपूणामिदानीम् ॥ ३९६.१ ॥

एवमेकैकयगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९६.१ ॥

**ल्गावनङ्गशेखरः ॥ ३९७ ॥**

यत्र यथेष्टं निरन्तरौ लघुगुरू प्रयुज्येते सोऽनङ्गशेखरः । यथा—

[4]विशालभाललोलघूर्णमानकज्जलोज्वलालक-
द्विरेफमालिकोपशोभिते,
विबुद्धहावमुग्धचारुपक्ष्मलालसभ्रमत्सु-
तारदीर्घनेत्रपत्रसुन्दरे ।
अमन्दकुन्दकुड्मलाग्रकोमलोल्लसद्द्युतीद्ध-
शुद्धदन्तपङ्क्तिकेसरालये,

1) सुभग त्वयीत्यत्र उपेयुषीति—गतवति क्रीडागृहसमुखम् । 2) चाटुकेति—प्रियवचनानि तानि । पलाण्डुर्लसनकन्दः । पिनष्टि चूर्णीकरोति । परीति—मूर्च्छां गच्छति चन्द्रकिरणैः । 3) क्वचिदित्यत्र कर्दमभ्रमात् । शूकरः । अन्तः(न्त)शब्दः स्वरूपे प्रान्ते बन्धे च । शाखामृगेति—वानराः । महासैरिभो वनमहिषः । विक्रीडनेन क्रीडया वूत्काराः । 4) विशालभालेत्यत्र उज्वला. दीप्तिमन्तः येऽलकास्त एव भ्रमराः । हावो मुखविकारः । अनङ्गशेखरोऽनङ्गपरवशः ।

१ वते N. २ शिशिरागरु N. शशिरागुरु P; ३ प्रवातो० N, ४ विक्रीडि B. ५ लग (गौ) प्रयुज्येते A. ६ पूर्णमान० N.

प्रियामुखाम्बुजेऽधरं चिराय सव्विवापिवन्ननारतं
भवेदनङ्गशेखरः ॥ ३९७.१ ॥

**एवं लघुगुरुवृद्धयान्यदप्युदाहार्यम् ॥ ३९७.१ ॥**

**ग्लावशोक[1]पुष्पमञ्जरी ॥ ३९८ ॥**

यत्र यथेष्टं निरन्तरौ गुरुलघू प्रयुज्येते सोऽशोक[1]पुष्पमञ्जरीनामा दण्डकः । यथा—

अस्तमाश्रितस्तुपारभारपातदग्धसर्व-
पुष्पजातिसंचयो हिमर्तुरद्य[2],
सर्वतो वसन्तनामधेय एष जृम्भते[3] प्रियः
सखा तवेह देव पुष्पचाप ।
विष्टपत्रयीपराजयेच्छया गृहाण नूतनान्
[1)]शिलीमुखानखण्डितैकवीर,
चारुचूतकोरकानशोकपुष्पमञ्जरीर्नवाः
स्मितानि केसराणि पाटलाश्च ॥ ३९८.१ ॥

**एवं गुरुलघुवृद्धयान्यदप्युदाहार्यम् ॥ ३९८.१ ॥**

**ता गौ कामबाणः ॥ ३९९ ॥**

यत्र यथेष्टं तगणा अन्ते गुरुद्वयं च प्रयुज्यते स कामबाणः । यथा—

[2)]त्वद्विप्रयोगे नवे वालिकाया मनोभूशरक्लेशशान्त्यै प्र-
यत्नात्सखीभिः समन्तात्,
पाथोजिनीपल्लवैः कल्पितं चारु तल्पं समासूत्रिता नूत-
नैर्हारयष्टिर्मृणालैः ।
रम्भादलैः कोमलैर्निर्मितं तालवृन्तं कृतश्चान्दनेन
द्रवेणाङ्गरागः किलास्याः,
तीव्रव्यथां प्रत्युतैतद्वितन्वत्समग्रं कठोराशयां[4]शिश्रियत्
कामबाणत्वमुग्रम् ॥ ३९९.१ ॥

**एवमेकैकतगणवृद्धयान्यदप्युदाहार्यम् ॥ ३९९.१ ॥**

**भा गौ भुजङ्गविलासः ॥ ४०० ॥**

यत्र यथेष्टं भगणाः प्रयुज्यन्तेऽन्ते च गुरुद्वयं स भुजंगविलासः । यथा—

1) अस्तमाश्रित इत्यत्र शिलीमुखान् वाणान् । रम्या मञ्जरीः । स्मितानि विकसितानि । 2) त्वद्वि-[प्र]योग इत्यत्र तव विरहे नवे प्रथमोद्भवे । कल्पितं रचितम् । प्रत्युत संमुखम् । कठिनाशय ।

१ अशोकमञ्जरी BG. २ रथा B ३ जृम्भति N. ४ याशिश्रयत् A, याशिक्षितात् N.

[1]पीनघनोन्नतवृत्तविशालतरस्तनमण्डलगाढनिपीडन-
कण्टकिताङ्गः,
कोमलबाहु[1]मृणाललताद्दढवेष्टितकण्ठतटः परिचुम्बन-
विभ्र[2]मपात्रम् ।
वासगृहे वहलोच्छ्वसिता[3]गुरुधूमलतानिचिते शयने
मृदुनि [2]क्षणदायां,
यो दयितां र[4]मयत्यतिसंभ्रममानजुषं स भुजंगविलास-
धुरामिह धत्ते ॥ ४००.१ ॥

एवमेकैकसगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ४००.१ ॥

**नाभ्यां पञ्चमात्रैरुत्कलिका ॥ ४०१ ॥**

**द्वा[5]भ्यां नगणाभ्यां परैर्यथेष्टं पञ्चमात्रैर्गणैरुत्कलिका नाम । यथा —**

[3]स्मितबकुलशिरीषकङ्केल्लिकङ्कोलनव्यप्रसूनावलीपरिमलविलोल-
रोलम्ब-[4]रोलाँ[6]कुलीकृताखिलचारुलीलावनो,
मृदुमलयसमीर-[5]शैलूषशिक्षाक्रमानुगुणविविधाङ्गहारप्रयोग-
प्रपञ्चप्रवलगल्लतानर्तकीरम्यरङ्गावनिः ।
अभिनवसहकारकोरकास्वादमाद्यत्-[6]पिकयुवतिपञ्चमोच्चारमन्त्रास्त्र-
साधितविषममानिनीमानदुर्गः समन्तादयं,
कमिव सपदि [7]संततोत्कलिकमिह नो[7] विधत्ते जनं [8]हेलया निर्जिता-
शेषलोकस्य देवस्य कामस्य निर्व्याजबन्धुर्मधुः ॥ ४०१.१ ॥

एवमेकैकपञ्चमात्रवृद्ध्यान्यदप्युदाहार्यम् ॥ ४०१.१ ॥

दण्डकप्रकरणम् ।

*

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ
समवृत्तव्यावर्णनो नाम द्वितीयोऽध्यायः ॥ २ ॥

ग्रन्थाग्रं १०४३; उभयं ११६८ ।

---

1) पीनघनोन्नतेति — पीनाः पुष्टाः । घना कठिनाः । वृत्ता वर्तुला. । 2) क्षणदायां रात्रौ । 3) स्मित-बकुलेत्यत्र प्रसूनं पुष्पम् । 4) रोला. शब्दाः । 5) शैलूषो भरत. । 6) पिकयुवति. कोकिला । 7) संत-तोत्कलिकं आल्हादमयम् । 8) हेलया क्रीडया । इति श्रीछन्दोनुशासनद्वितीयाध्यायपर्यायाः सपूर्णाः ॥

---

१ कोमलपङ्कमृ० N. २ विभ्रम dropped in O ३ वहलोच्चलितागुरु N. ४ दयिता मयत्यतिशंभ्रम० A. ५ द्वाभ्या dropped in P ६ रोलम्बलीलाकुली० वने N. ७ न ABCN .

# अथ तृतीयोऽध्यायः ।

इदानीमर्धसमवृत्तव्यावर्णनार्थमुपक्रम्यते –

**ओजयुजोः ॥ १ ॥**

अधिकारोऽयमाविषमवृत्तेभ्य उपतिष्ठते । तत्रौजं विषमं; युक् समं लोक[1]सिद्धम् ॥ १ ॥

तत्र –

**सिल्गा नभभ्रा हरिणप्लुता ॥ २ ॥**

पाद इति चानुवर्तते । ओजपादयोः सगणत्रयं लघुगुरू च । युक्पादयोः नभभरा यत्र वृत्ते सा हरिणप्लुता । यथा –

1) नृप शैलशिलाशयनासनाः, विदि[2]तकन्दफलाहरणाः सदा ।
निवसन्ति वने भवतो द्विप[3]स्, तरुनिकुञ्जगता हरिणप्लुताः ॥ २.१ ॥

**सिल्गा भिगगा उपचित्रम् ॥ ३ ॥**

ओजपादयोः सगणत्रयं लघु[4]गुरू च । युजोर्[5]भगणत्रयं गुरुद्वयं च । यथा –

2) अयमत्र नृपः सचिवस्त्वसा-, वेष कुमार इतः प्रतिहारः ।
उपचित्रमिति त्वदरेर्गृहे, वक्ति मिथः किल पान्थसमूहः ॥ ३.१ ॥

**लोनं वेगवती ॥ ४ ॥**

उप[6]चित्रमेव लघुना रहितं वेगवती । ओजे सिगौ युजि भिगगा इत्यर्थः । यथा –

3) नृपते तव कार्मुकवंशान्,-निष्पतिता शितसायकमाला ।
क्षितिभृच्छिरसि प्लवमाना, वेगवती वत नूतनरे[7]खा ॥ ४.१ ॥

4) आपातलिकेयम् ॥ ४.१ ॥

**भिगगा नजज्या द्रुतमध्या ॥ ५ ॥**

ओजे भगणत्रयं गुरुद्वयं च । युजि नजजयाः । यथा –

5) वीरजिनेन्द्र भवत्पदपद्मं, भ्रमर इव द्रुतमध्यगमद् यः ।
मुक्ति[8]र्वधूपरिरम्भणसौख्यं, करतलगामि कृतं खलु तेन ॥ ५.१ ॥

उपचित्रा । आपातलिकापरान्तिकेयं[9]म् ॥ ५.१ ॥

---

अथ तृतीयोऽध्याय' सपर्यायो लिख्यते ।

1) नृप शैलशिलेत्यत्र आहरणं आहारः । हरिणवत् प्लुतं गमनं येषां ते । अथवा सुभटागमशङ्कया हरिणेऽपि दृष्टे नष्टा. प्लुष्टा. (ता) । 2) अयमत्रेत्यत्र प्रती(ति)हारो दौवारिकः । उपचित्रमिति – त्वद्वैरिनगरे नित्रन्समीप परस्परं निदर्शयति । 3) नृपते तवेत्यत्र रेवापि वशान्निर्गच्छति इति श्रुति. । रेवा तु गिरेरधोभागे प्लवते द्वयं तु क्षितिभृता राज्ञां [ शिरसि ] प्लवते ततो नूतनरेवा । 4) आपातलिकेयमिति – ओजे षण्मात्रा युज्यष्टौ भगणद्वयान्ताश्चेदापातलिका । 5) वीरजिनेन्द्रेत्यत्र अध्यगमद् मध्ये (अधि?) गच्छति । मुक्तिरामोपगूहनसौख्यम् । हस्तगामि ।

---

१ लोकन जिद्धं P. २ विदित dropped in N ३ रिपोस् N ४ N. adds प्राच्यवृत्तिरियम् । ५ लगौ च A. ६ ओजयोरुपान्त्यलघुना न्यूनम् । आपातलिकेयं F. ७ रेखा N. ८ मुक्तिविधं परि० A. ९ इयं dropped in A.

**तज्ञगा मस्जगगा भद्रविराट् ॥ ६ ॥**

ओजे तजरगाः। युजि मसजगगाः। यथा–

[1]पश्येद्भगवन् पदारविन्द-, द्वन्द्वं भक्तित एकदापि यस्ते।
बिभ्रद्भुवनाधिपत्यमेकं, भद्रं भद्रविराट् भजेत सोऽपि ॥ ६.१ ॥

औपच्छन्दसकमिदम्[१] ॥ ६.१ ॥

**सजस्गा भर्नगगाः केतुमती ॥ ७ ॥**

ओजे सजसगाः। युजि भरनगगाः। यथा–

[2]प्रसरद्रजःस्थगितसूर्या, केतुमतीमुदीक्ष्य तव सेनाम्।
वसुधापते दिवमिवात्म-, नाशमशङ्कत त्वदरिवर्गः ॥ ७.१ ॥

**ताजगगा जतजगगा आख्यानकी[२] ॥ ८ ॥**

ओजे ततजगगाः। युजि जतजगगाः। यथा–

[3]त्वद्वैरिभूपैरियमागतोच्चैर्-, मरालनादैर्मुखरा शरच्छ्रीः।
आख्यानकीव त्वदनीकयात्रो-, त्सवस्य सद्यश्चकितैरुदैक्षि ॥ ८.१ ॥

आख्यानकी वार्त्ताहारिका ॥ ८.१ ॥

**व्यत्यये विपरीतादिः ॥ ९ ॥**

व्यत्यये इति ओजे जतजगगाः। युजि ततजगगाः। विपरीतादिर्विपरीताख्यानकीत्यर्थः। यथा–

[4]अमंस्त ते दुर्नयचेष्टितानाम्, आख्यानकीं[३] या विपरीतवृत्तिम् ॥
पुरः सखीनां ब्रुवता विपक्ष-, नाम त्वया संप्रति लज्जिता सा ॥ ९.१ ॥

[5]एतयोश्च उपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थमत्र पाठः ॥ ९.१ ॥

**र्जजर्जा ज्ञ्जगा यवमती[४] ॥ १० ॥**

ओजे रजरजा। युजि जरजरगाः। यथा–

---

1) पश्येद्भगवन्नित्यत्र भद्रं कल्याणं भजेत। भद्रं स्यादेवं विराजते भद्रविराट्। 2) प्रसरद्रज इत्यत्र आच्छादितरविम्। केतवो ध्वजा ग्रहाश्च। आकाशमिव। यदा गम(ग)ने केतुरुदयति तदा जीवाना नाशो भवतीति लोका.। [ दिवशब्देन दिन भासते। ततो यथा दिनस्यात्मनाशो जात. तथास्माकमपि B. P. ]। 3) त्वद्वैरीत्यत्र हंसध्वनितै.। आख्यानं करोति कारयति वा गौरादित्वात् ङीः। उदैक्षीति–दृष्टा। 4) अमंस्त ते इत्यत्र या कामिनी तव दुर्नयचेष्टितानां कथयित्रीं अमन्यत पराङ्मुखवृत्ति सा सांप्रतं विपक्षाया· सपत्न्याः नाम सखीनां पुरतो ब्रुवता व्रीडां धत्ते इति। 5) एतयोरित्यत्र इन्द्रवज्रोपेन्द्रवज्र।(ज्र)-[योरुपजात्य]न्तर्गतापि विशेषावबोधार्थं उक्ता उदाहरणद्वयी।

---

१ औपच्छन्दसिकमिदं ABN. २ आख्यानिकी H ३ आख्यानकी–वृत्ति A ४ यत्रवती BN

[1]वन्यसैरिभा भवद्विपक्षधाम्नि, निरन्तरेन्द्रनीलबद्धभूमिभागे ।
त्र्यग्मुखं प्रकुर्वते मुधा वितर्क्य, विनीलविस्फुरद् यवान्वितां[1] धरित्रीम् ॥ १०.१ ॥

यवान्वितां यवमतीमित्यर्थः । छन्दोवशाच्च यवान्वितामित्युक्तम् ॥ १०.१ ॥

**व्यत्यये षट्पदावली ॥ ११ ॥**

[2]व्यत्यये इत्योजे जरजरगाः । युजि रजरजाः । यथा—

[2]नवोदयं चिरादुपेयिवांसमर्क, स्वागतानि पृच्छतीव संमदेन ।
सरोजिनी विकस्वरा निशावसाने, षट्पदावलीकृतस्वनच्छलेन ॥ ११.१ ॥

**नभभ्रा नभिरा मकरावली[3] ॥ १२ ॥**

ओजे नभभराः । युजि नो भत्रयं रश्च । यथा—

[3]मकरकेतुभटस्य विराजते, वरतनुर्ध्वजयष्टिरिव प्रगुणीकृता ।
मृदुकपोलतले दधती नवां, मृगमदस्तबकैर्लिखितां मकरावलीम् ॥ १२.१ ॥

**म्सागाः सभासाः करिणी ॥ १३ ॥**

ओजे मः सगणद्वयं गुरुश्च[4] । युजि सो भगणद्वयं[5] सश्च । यथा—

[4]चन्द्रो मत्तकरीन्द्र इवायं, दलितोद्दामतमस्तरुगहनः ।
क्रीडत्यम्बरपल्वलमध्ये, स्फुटताराकरिणीभिरनुसृतः[6] ॥ १३.१ ॥

**साज्गाः सभ्रल्गाः[7] प्रबोधिता ॥ १४ ॥**

ओजे सद्वयं जगौ च । युजि सभरलगाः । यथा—

[5]तरुमूलगृहाः क्षपाक्षये, नृप निद्रां जहति द्विपस्तव ।
विटपान्तकुलायनिष्पतत्-, पतगश्रेणिरवैः प्रबोधिताः[8] ॥ १४.१ ॥

**नारल्गा नजज्रा अपरवक्त्रम् ॥ १५ ॥**

ओजे नगणद्वयं[9] रलगाश्च । युजि नजजराः । यथा—

[6]नृपवर भवदीयवर्णनं, निखिलमुखे रचयन् पुरातनैः ।
अधिकमपरवक्त्रमीहते, श्रुतिपठनाय चतुर्मुखोऽधुना ॥ १५.१ ॥

एतौ वैतालीयभेदौ ॥ १५.१ ॥

1) वन्यसैरिभा इत्यत्र वनमहिपाः स्वद्वैरिगृहे । तिर्यग् । आशङ्क्य । नूतनयवयुक्तां वसुधाम् । 2) नवोदयमित्यत्र उपेयिवांसं आगतम् । स्वागतेति—शोभनान्यागतानि स्वागतानि कुशलागमनानि । निशेति—रात्रिप्रान्ते । छलेन कपटेन । 3) मकरेत्यत्र कन्दर्पसुभटस्य । कामिनी । ध्वजः पताका । मकरेति—मकरस्य रूपाकृतिपत्रलेखाम् । ध्वजेऽपि मकररूपाणि भवन्ति । 4) चन्द्रो मत्तेत्यत्र उद्दामो दीप्तः । अनुसृत. आश्रितः । 5) तरुमूलेत्यत्र शाखाप्रान्तमालकनिर्गच्छत्पक्षिराजिशब्दैः । 6) नृपवरेत्यत्र पुरातनैः जीर्णैः । पञ्चमं वाञ्छति ब्रह्मा ।

१ यववर्ती BNP २ व्यत्यये इति dropped in P ३ मकरावती G. ४ सद्वयं गुश्च A. ५ भद्वय A ६ अनुसृता A ७ सभलर्गा N, सभ्रसल्गा. A ८ प्रवोधिता B ९ नद्वयं A.

**गान्तं पुष्पिताग्रा ॥ १६ ॥**

**अपरवक्त्रमेव ओजयुजोर्गान्तं पुष्पिताग्रा । यथा–**

1)स्मर इव शयितः कयाप्यशोके[१], पदहननेन[२] जगज्जयाय नुन्नः ।
सपदि यदिपवोऽस्य पुष्पिताग्र-, प्रसवमिपात् प्रगुणाः परिस्फुरन्ति ॥ १६.१ ॥

**साज्जगाः स्भर्यौ मालभारिणी ॥ १७ ॥**

**ओजे ससजगगाः । समे सभरयाः । यथा–**

2)इह वासकसज्जिकाविलासं, वहते शारदशर्वरी वरेण्यम् ।
अवतंसितकैरवोज्ज्वलश्रीर्, 3)विकसत्तारकमालभारिणीयम्[३] ॥ १७.१ ॥

**नितम्बिनीत्यन्यः । औपच्छन्दसक[४]भेदावेतौ ॥ १७.१ ॥**

**भ्तल्गा न्जन्सगा विलसितलीला ॥ १८ ॥**

**ओजे भद्वयं तलगाश्च । युजि नजनसगाः । यथा–**

4)वक्त्रनि[५]रीक्षणभङ्गिप्रणयी, भ्रमति धनुर्विलसदिपुरनङ्गः ।
भृत्य इवाशु यदाज्ञां विदधद्, रमयति सा नवविलसितलीला ॥ १८.१ ॥

**भ्रन्जनलगा[६] ढैर् न्जभ्जन्सा[७]ष्टैर्मानिनी[८] ॥ १९ ॥**

**ओजे भरनजनलगाः । ढैरिति दशभिर्यतिः । युजि नजभजनसाः । टैरित्येकादशभिर्यतिः । यथा–**

5)मानभृतामिदं तृणमिव जीवितमिति न किं,
कलयसि शास्सि[९] रोहिणि न यस्त्वमपि[१०] निजपतिम् ।
दक्षसुते कलङ्कय पितृगोत्रमलमधुना,
चिरमथ मानिनीजनवधानुमतिघटनया ॥ १९.१ ॥

**रो ज्रल्गाः कामिनी ॥ २० ॥**

**ओजे रगणः । युजि जरलगाः । यथा–**

6)निर्वृतिं,
विधेहि हस्तगामिनीम् ।

---

1) स्मर इवेत्यत्र नुन्न. प्रेरितो जागरितश्च । यस्मात् कामस्य सज्जीकृता. । 2) इह वासकेत्यत्र या सङ्केतं सविलासं ददाति सा वासकसज्जिका । या स्त्री भर्तरि समागते स्वं मण्डयति सा वा इति प्रत्यन्तरे । 3) विकसदिति–माला श्रेणिः पुष्पादिमयी च । 'मालेषीकेष्टकस्यान्ते भारितूलचिते' ( सि० है० २ ४.१०२ ) इति ह्रस्व. । 4) वक्त्रनिरीक्षणेत्यत्र कटाक्षभङ्गीषु कृताश्रयः स्फुरति । धनुषि विलसन्त इषवो बाणा यस्येति । सा स्त्री रमयति लोकं इति शेष. । 5) मानभृतामित्यत्र कलयसि इति–किं न जानासि । शास्सि शिक्षयसि न स्वभर्तारम् । मानिनीति–चन्द्रो हि विरहिणीमानिनीजनानां दाहकरणादिति त्वं निजपतेर्मानिनीजनवधानुमतिं ददासीति भाव. । 6) निर्वृतिं विधेहि इत्यत्र करगताम् । जहि त्यज ।

---

१ कयाथ शोकं N २ प्यपदहनेन N. ३ इयं dropped in A ४ औपच्छन्दसिक० BN ५ वक्त्रनि० ADEN ६ भ्रनजनलगा H; ७ नजभ्जनसा A, न्जभ्जनसा CD, न्जभजनसा. N, नजभ्जन्सा P ८ मानिनी N ९ सासि A, सास्सि B, शशि D, शास्सि N १० न यस्त्वमपि repeated in A

सर्वथा,

जहीहि हन्त कामिनीम् ॥ २०.१ ॥

**रो ज्रज्राः शिखी ॥ २१ ॥**

**ओजे रगणः । युजि जरजराः । यथा –**

[1]योपितो,

वियोगदुःखखिद्यमा[1]नमानसाः ।

दन्दहत्,

कटुस्वनैर्मयूर[2] निश्चितं शिखी ॥ २१.१ ॥

**रो ज्र[3]ज्रा ज्गौ नितम्बिनी ॥ २२ ॥**

**ओजे रगणः । युजि जरजरजगाः । यथा –**

[2]सर्वथा,

विरि[4]ञ्चिशंकरामराधिराजकेशवर्षयः ।

भेजिरे,

यद्गुत्पथं चिराय तत्र कारणं नितम्बिनी ॥ २२.१ ॥

**रस्त्रिज्रौ ल्गौ वारुणी ॥ २३ ॥**

**ओजे र[5]गणः । यु[6]जि त्रीन् वारान् ज्रौ । जरजरजरलगाः । यथा –**

[3]उत्तमं,

घनाविनश्वरप्रमोदकारणं कृतिन् यदीहसे सुखम् ।

निर्मलं,

तदा शमामृतं पिवा[7]निशं सुदारुणं विमुञ्च [4]वारुणीम् ॥ २३.१ ॥

**रश्चतुर्ज्रौ वतंसिनी ॥ २४ ॥**

**ओजे र[7]गणः । यु[8]जि चतुरो वारान् ज्रौ । जरजरजरजराः । यथा –**

शोभते,

धनुर्लतेव पुष्पधन्वनः शिरीषकोमलाङ्गिका सरोजलोचना ।

बालिका,

जपासहोदराधरा [5]मधूककान्तिमत्यशोकपल्लवावतंसिनी ॥ २४.१ ॥

1) योपित इत्यत्र हे मयूर त्वं शिखी असि निश्चयेन। शिखी मयूरो वह्निश्च। 2) सर्वथेत्यत्र उन्मार्गं चिरकालम्। 3) उत्तममित्यत्र अविनाशिहर्षहेतुम् 4) मदिराम्। 5) शोभत इत्यत्र मधूककान्तिमतीति – गौराङ्गीत्यर्थः। कंकेल्लिकिसलयशेखरवती।

१ मान dropped in c २ निहन्ति N ३ रो ज्रज्रज्गाः BF. ज्गौ dropped in. G. ४ विरिञ्च N, विरिंचि P. ५ र॰ A. ६ समे A ७ र A ८ समे A.

**कामिन्याद्या व्यत्यये वानरीशिखण्डिसारस्यपराहंस्यः ॥ २५ ॥**

कामिनी-शिखि-नितम्बिनी-वारुणी-वतंसिन्यः ओजयुक्पादयोर्व्यत्यये यथासंख्यं[१] वानरी-शिखण्डि-सारस्यपरा-हंसीसंज्ञाः । कामिनीव्यत्यये वानरी । यथा–

1)नियम्य गाढसंततैः,
सद्गुणैः ।
सखे स्थिरां कुरु श्रियं,
वानरीम् ॥ २५.१ ॥

शिखिव्यत्यये शिखण्डी । यथा–

तपात्यये घनध्वनन्मृदङ्गके,
कुर्वते ।
अखण्डषड्[२]जगीतयः शिखण्डिनस्,
ताण्डवम् ॥ २५.२ ॥

नितम्बिनीव्यत्यये सारसी । यथा–

2)त्वमब्[३]जलोचने शरत्[४] त्वदीयमेतदाननं,
चन्द्रमाः ।
झणज्[५]झणायितस्वनाऽपि मेखला विभाति ते,[६]
सारसी ॥ २५.३ ॥

वारुणीव्यत्यये अपरा । यथा–

3)जिन त्वदीयशासनादृते विवेकदीपको भवत्ययं,
न क्वचित् ।
तमश्छिदाक्षमं हि तेज एकमूर्जितं प्रसूत इन्द्रदिक्,
नापरा ॥ २५.४ ॥

वतंसिनीव्यत्यये हंसी । यथा–

4)त्वदारवे कृतस्पृहाशु[७] विस्मृतस्वनिस्वना वकी जगाम साधुना,
मूकताम् ।
सरो विकस्वराम्बुजाकरं प्रियप्रणीतचाटुका तदेहि सोत्सवं,
हंसिके ॥ २५.५ ॥

---

1) नियम्येत्यत्र नियम्य । सद्गुणैरिति–गुणा रज्जवश्च । वानरीव वानरी तां चपलां इत्यर्थः । 2) त्वमब्जेत्यत्र सारसीव सारसी तद्वत् मधुरस्वरत्वात् । 3) जिन त्वदीयेति अत्र ऋते विना । इन्द्रदिक् पूर्वा । 4) त्वदारवे इत्यत्र कृतवाञ्छा । मूकत्वम् ।

---

१ क्रमेण E. २ अखण्डखण्ड B; अपण्डषड्ज D ३ त्वमब्जलोच repeated in A. ४ शरस् N ५ रणज्झणायित AP, झणझणायित BN. ६ ते dropped in A ७ स्पृहाशु वि repeated in A.

१४ छन्दो०

**स्लगा सिल्गा इला ॥ २६ ॥**

ओजे सलगाः। युजि सत्रयं लघुगुरू च। यथा–

[1]करटिस्रवन्[1]-,
मदपङ्किलधूलिचितालिनाम्[2]।
रणितच्छलात्,
तव गायति नूनमिला वलम् ॥ २६.१ ॥

**स्लगाः स्मृगाङ्कमुखी ॥ २७ ॥**

ओजे सलगाः। युजि सगणाष्टकम्। यथा–

[2]विरहे नवे,
भवतः सुभगोद्धतबाष्पतुषारकणप्रकरो ग्लपयत्यनिशम्।
कुमुदस्मिताम्,
अरविन्दकरां विकचोत्पलचारुदृशं परिपूर्णमृगाङ्कमुखीम् ॥ २७.१ ॥

**न्लृलगा[3] न्लृगौ शिखा ॥ २८ ॥**

ओजे नगणनवकं लघुगुरू च। युजि नगणदशकं गुरुश्च। यथा–

[3]प्रसृमरमरिनरपतिबलतिमिरं[4]निकरमतनुमपि गुरुगिरिगुहा-,
तरुगहनविकटकुहरशरणमिममखिलमिह समरसमयदिनमुखे।
परममहिमनिलय[5]शशधरकुलगगनदिनकरपरपटिमजुषः,
किरणततय इव विदधति चिरतरमवनिपतितिलक तव वरविशिखाः[6] ॥ २८.१ ॥

**व्यत्यये खञ्जा ॥ २९ ॥**

ओजयुक्पादयोर्व्यत्यये[7] शिखैव खञ्जा। तत्रौजयोस्त्रिंशल्लघवो गुरुश्च। युक्पादयोरष्टाविंशतिर्लघवो[8] गुरुश्च। यथा–

[4]प्रमुदितसमदपरभृतकलरणितमविकलशशधरकिरणविततयो,
विकसितसरसिरुहविपिनमलिकुलविरुतमुखरितकुसुमितलताः।
कुरवक[9]बकुलविचकिल[10]विलसदविरलपरिमलसुरभिमलयपवनो,
विरहविधुरयुवतिहृदयतपनमिदमखिलमपि नवमधुसमये[11] ॥ २९.१ ॥

1) करटीत्यत्र चित मिलित। इला वसुधा। 2) विरहे नवे इत्यत्र ग्लपयति ग्लानिं करोति पूर्णचन्द्रमुखीम्। हिमकणप्रकरोऽपि कुमुदारविन्दोत्पलमृगाङ्कान् ग्लपयति। 3) प्रसृमरमित्यत्र प्रसृमरं प्रसरन् (न्तम्)। अरितिमिरनिकरं गुहादिशरणं विदधति कुर्वन्तीत्यर्थः। के? तव बाणाः। क इव? किरणश्रेणय इव। क्व? संग्रामदिनप्रारम्भे। हे चन्द्रवंशगगनसहस्रकिरण। 4) प्रमुदितसमदेत्यत्र कोकिल(लः)। विततयः श्रेणयः। विपिनं वनम्। विरुतेति–शब्दवाचाल(ला)ः। विचकिलो मल्लिका। सुरभिः सुगन्धः। विरहो वियोगः। तपनमिति–तापकारि भवतीत्यर्थः। नूतनवसन्तसमये।

१ श्रवन् AP. २ चितालितां N ३ न्लृलगा GH. ४ मितिर A; ५ लय dropped in N. ६ वरशिखा A ७ युजो E ८ विंशतिलघवो N ९ कुरबक N १० विचकिललसद० N ११ तव म० B.

खञ्जेति शब्दस्य छन्दसि प्रवेशयितुमशक्यत्वात्[1] नाम नोक्तम् ॥ २९. १ ॥

शिखा-खञ्जयोः प्रकारान्तरमाह–

अर्धयोर्वा ॥ ३० ॥

न्लगा न्लगौ चेत्योजयुक्पादयोर्यच्छिखाया लक्षणमुक्तं तत् पूर्वापरार्धयोश्चेद् भवति तदापि शिखा। एवं पूर्वापरार्धयोर्व्यत्यये खञ्जापि। अर्धयोरित्यभिधानादोजयुजोरिति निवृत्तम्। तत्र शिखा यथा–

[2]सुभग तव नवविरह इह महति विलसति चकितहरिणशिशुदृशः।
अमृतरुचिरुचिरजनि विषममलकमलदलततिरपि दववदहनशिखा ॥ ३०.१ ॥

खञ्जा यथा–

अभिनवविकसितकुरवकविचकिलवकुलपरिमलमधुरमधुसमये।
त्वमिह कथमिव पथिक हतक गतकरुण परिहरसि निजमृगदृशम् ॥ ३०.२ ॥

अनयोर्विषमवृत्तत्वेऽप्यर्धसममध्ये लाघवार्थं पाठः ॥ ३०.२ ॥

न्लगावतिरुचिरा ॥ ३१ ॥

द्वयोरर्धयोर्नगणनवकं गुरुश्च। यथा–

[3]घनपरिमलमिलदलिकुलमुखरितनिखिलकमलकुवलयवनः।
जनयति मनसि निरवधि मुदमविरतमिह मम मधुरतिरुचिरे[4] ॥ ३१.१ ॥

न्लगाश्च ॥ ३२ ॥

द्वयोरर्धयोर्यथासंख्यं न्लगौ न्लगाश्च यत्र भवन्ति सात्यतिरुचिरा। यथा–

[5]रतिकरमलयमरुति शुचिशशिभृति हतहिममहसि मधुसमये।
परिहरसि पथिक हतक कथमतिरुचिरयुवतिमति हि चपलतया ॥ ३२.१ ॥

द्वे अप्येते चूलिके इत्यहीन्द्रः ॥ ३२.१ ॥

अर्धसमप्रकरणम्।

अथ विषमवृत्तान्युच्यन्ते–

अनुष्टुभि नाद्यात् स्नौ तुर्याद्यो वक्त्रम् ॥ ३३ ॥

अनुष्टुभ्यष्टाक्षरायां जातौ पादस्याद्यात् प्रथमादक्षरात् परौ स्नौ सगणनगणौ न भव-

1) अशक्यत्वादिति–द्विगुरुत्वात्। अत्र न पादनियमः। किं तु शिखायाः द्वाभ्यां पादाभ्यां द्वयोरर्धयोर्निष्पन्नयोरत्र वृत्तं सपूर्णं जायते। 2) सुभग तवेत्यत्र अमृतेति–चन्द्र किरण.। अमलेति–पत्रश्रेणिः। दवदेति–अग्निज्वाला। यथेति–तथात्रापि योज्यम्। 3) घनपरिमलेत्यत्र अत्रापि न पादसख्या। 4) (हे अतिरुचिरे B)। 5) रतिकरेति–सुखकारी। अति हि भृशार्थम्। चञ्चलतया।

१ रुचि dropped in A २ कुरुवक NP. ३ मधुर dropped in N. ४ कल A. ५ न्लगाश्च EGH. ६ स्यु· EF ७ शशिभृति N.

तोऽन्ये तु पड् गणा यथेष्टं भवन्ति । चतुर्थादक्षरात् परतश्च यगणो भवति तद्वृत्तं वक्त्रं[१] नाम । यथा –

[1]तस्यास्त्रस्तकुरङ्गाक्ष्या वक्त्रेण त्वं पराभूतः ।
हिमांशो क्षीयसे युक्तं लज्जसे तु न किं वृद्धया ॥ ३३.७ ॥

एवमन्यदप्युदाहार्यम् । अत्र[२] प्रथमपादस्य[३] प्रथमस्थाने ग्लाविति द्वौ विकल्पौ । द्वितीये स्त्रवर्जनात् शेषगणैः पट् । तृतीये य एक एव । चतुर्थे ग्लाविति द्वौ । [2]अन्योऽन्याभ्यासे चतुर्विंशतिः । प्रतिपादं चतुर्विंशतेर्भावादन्योऽन्याभ्यासे जातास्तिस्रो लक्षाः एकत्रिंशत्सहस्राः सप्त शतानि पट्सप्तत्यधिकानि ( ३३१७७६ ) । एवमियमेव संख्या प्रत्येकं विपुलाभेदेष्वपि ज्ञेया ॥ ३३.१ ॥

**तद्युजोर्जः[४] पथ्या ॥ ३४ ॥**

तद्वक्त्रं युजोः पादयोस्तुर्यादक्षरात् परो जगणश्चेद् भवति तदा पथ्या । यथा –

[3]आलानितगजस्कन्धघृष्टाः पथ्यायतद्रुमाः ।
अद्यापि कथयन्त्येते राजेन्द्र तव दिग्जयम् ॥ ३४.१ ॥

**ओजे विपरीतादिः ॥ ३५ ॥**

ओजयोः पादयोस्तुर्यादक्षरात् परो[५] जगणश्चेद् विपरीतादिः पथ्या । युक्पादयोर्य एवावतिष्ठते । यथा –

[4]विपरीतानि रे शठ करिष्यसि कियन्त्यस्मात् ।
दुकूलं प्रच्छदीकृतं [5]तस्या धत्से ममाग्रे यत् ॥ ३५.१ ॥

**नश्चपला ॥ ३६ ॥**

ओजयोः पादयोस्तुर्याक्षरात् परो नगणश्चेच्चपला[6] । यथा –

[7]वीक्षितोऽप्येप तिलकश्चपलाक्षि त्वया सद्यः ।
दधाति नव्यमुकुलै रोमाञ्च[६]कञ्चुकं मन्ये ॥ ३६.१ ॥

**युजोः षड्भ्यो लो विपुला ॥ ३७ ॥**

1) तस्यास्त्रस्तेत्यत्र त्रस्तो भयभ्रान्तः स चासौ कुरंगस्तद्वदक्षिणी यस्याः । परेति–निर्जितः । 2) अन्योऽन्याभ्यासे इत्यत्र द्वौ पड्गुणौ जाता १२ एकेन गुणितं तदेव ततो १२ द्विगुणा २४ । एवं द्वितीयादिषु पादेषु भवन्ति भङ्गकाः । प्रथमपादभेदैः द्वितीयपादभेदाः ताड्यन्ते । एवं पादद्वयभेदैः तृतीयपादभेदाः । त्रिकपादभेदैः चतुर्थपादभेदाः । तदा उक्तसंख्या । 3) आलानितेति – आलानस्तम्भत्वं प्रापिता ये सामयोनयः । घृष्टाः त्वगुन्निराकरणात् । पथि मार्गे । दिग्यात्राम् । 4) विपरीतेत्यत्र अस्मादपीति – अन्यानीति शेषः । पटकूलं 'पछेडी'ति प्रसिद्धम् । 5) अपरस्त्रियः । 6) चपलेत्यत्र अत्रापि ३३१७७६ भेदा भवन्तीति । 7) वीक्षितोऽपीत्यत्र तिलको वृक्षविशेषः । मुकुलैः कोरकैः ।

१ वक्त्रनाम N. २ अथ P. ३ आद्यपादस्य EF. ४ तद्युजो A ५ परे जेगण० P. ६ रोमाङ्कक० A.

युक्पादयोः षड्भ्यः परो लघुश्चेद् विपुला । [1]नचेयं पथ्यया गतार्था । विपुलावर्गस्येदानीमारभ्यमाणत्वात् तां विना तस्यानुपपत्तेः । युक्पादयोः[१] सप्तमेन लघुना अवश्यमेव भवितव्यं विषमपादयोस्तु[२] नादिभिर्यगणस्यापवादं वक्ष्यति । पथ्यायां तु यगण एवावतिष्ठते ॥ ३७ ॥

**सैतवस्य चतुर्षु ॥ ३८ ॥**

सैतवस्याचार्यस्य मते चतुर्षु पादेषु षड्भ्यः परो लो भवति । यथा –

विपुलेऽप्यम्बुधौ कृतं वर्त्म रामेण सैतवम् ।
चित्रमेतदिहाथवा किमसाध्यं महात्मनाम् ॥ ३८.१ ॥

**तुर्यान्नतभरमसास्तद्विपुला ॥ ३९ ॥**

ओजे विपरीतादिरित्यत ओज इत्यनुवर्तते । ओजयोः पादयोस्तुर्यादक्षरात्[३] परे[४] यगणं बाधित्वा नतभरमसाश्चेद् भवन्ति तदा तद्-विपुला । नविपुला तविपुला भविपुला रविपुला मविपुला सविपुला चेति । युजोः षड्भ्यो ल इति तु स्थितमेव । नविपुला यथा –

पश्यन्ति देव चरणद्वयं ये तव भक्तितः ।
तेषां भवन्ति विपुलाः सद्यः कल्याणसंपदः ॥ ३९.१ ॥

ओजे इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम्[५] । व्यक्तिपक्षे पुनरेकस्य प्रथमस्य[६] तृतीयस्य वा । तथा च [2]महाकवीनां प्रयोगः –

[3]अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना ॥ ३९.२ ॥

तथा –

[4]तव मन्त्रकृतो मन्त्रैर्दूरात् संशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः[७] शराः ॥ ३९.३ ॥

तविपुला जातिपक्षे यथा –

पादेन हता येन सा जातीलुब्धेन मल्लिका ।
अलेस्तस्य दैवादहो वदर्यपि सुदुर्लभा ॥ ३९.४ ॥

व्यक्तिपक्षे –

[5]वन्दे कविं श्रीभारविं लोकसंतमसच्छिदम् ।
दिवा दीपा इवाभान्ति यस्याग्रे कवयोऽपरे ॥ ३९.५ ॥

---

1) पथ्यया गतार्था न भविष्यति यतस्तत्र जगणो भवति । नगणादिभिस्त्वियम् । न पथ्यालक्षणं एवं प्रायेण भवति । 2) महाकवीनामिति – कालिदासादीनाम् । 3) अनाकृष्टेत्यत्र पारं पश्यति पारदृश्वा । रघुवंशे । 4) तव मन्त्रैरित्यत्र शान्तिं प्रापिता अरयो यैस्ते तैः । 5) वन्दे कविमित्यत्र पक्षे भाभिः कान्तिभिः उपलक्षितो रविः ।

---

१ युजो F. २ ओजयोस्तु EF ३ तुर्याक्षरात् C ४ पारयगणं A, पर यगणं N. ५ पादयो. dropped in B. ६ आद्यस्य F. ७ लक्ष० A.

तथा —

लोकवत्प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः ।
लोकव्यवहारं प्रति सदृशौ बालपण्डितौ ॥ ३९.६ ॥

जातिपक्षे भविपुला यथा —

इयं सखे चन्द्रमुखी स्मितज्योत्स्नावभा[1]सिनी ।
इन्दीवराक्षी हृदयं दन्दहीति तथापि मे ॥ ३९.७ ॥

व्यक्तिपक्षे यथा —

यस्य प्रभावाद् भुवनं शाश्वते पथि तिष्ठति ।
देवः स जयति श्रीमान् दण्डधारो महीपतिः ॥ ३९.८ ॥

तथा —

[1]मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ ३९.९ ॥

जातिपक्षे रविपुला यथा —

[2]वधूभिः पीनस्तनीभिस्तूलीभिः कुङ्कुमेन च ।
कालागुरु[2]धूपधूमैर्हेमन्ते जयति स्मरः ॥ ३९.१० ॥

व्यक्तिपक्षे यथा —

महाकविं कालिदासं वन्दे वाग्देवतागुरुम् ।
यज्ज्ञाने विश्वमाभाति दर्पण[3]प्रतिबिम्बवत् ॥ ३९.११ ॥

तथा —

कामिनीभिः सुखं संगः क्रियते पण्डितैरपि ।
यदि न स्याद् वारिवीचीचञ्चलं हतजीवितम् ॥ ३९.१२ ॥

जातिपक्षे मविपुला यथा —

[3]सर्वातिरिक्तं लावण्यं बिभ्रती चारुविभ्रमा ।
स्त्रीलोकसृष्टिः सा नूनं निःसामान्यस्य वेधसः ॥ ३९.१३ ॥

व्यक्तिपक्षे यथा —

[4]मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
[4]षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥ ३९.१४ ॥

तथा —

[5]अदूरवर्तिनीं सिद्धिं राजन् विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ३९.१५ ॥

---

1) मुक्तशेषेत्यत्र उपस्थितं उपासितम् । प्राञ्जलिनेति — योजितहस्तेन । कुमारकाव्ये काव्यमिदम् । 2) वधूभिरित्यत्र जयतीति — लोकमिति शेष. । 3) सर्वातिरिक्तमित्यत्र सृज्यतेऽसाविति लोकानां मध्ये सृष्टिः । कर्मणि क्तिन् । 4) मनोभिरित्यत्र ख(प)ड्जसंवादिनीरिति — स्वरविशेषं अनुवदन्ति । मयूरं(रो) मन्द्रं रौति मयूरी तारम् । 5) अदूरवर्तिनीमित्यत्र विगणयेति — जानीहि । प्रकटितेयम् । का धेनुः । कीर्तिते [ नाम्नि ] ।

---

१ ववासिनी A. २ कालागरु N. ३ दर्पणे प्र० B. ४ खड्ग N.

जातिपक्षे सविपुला यथा –

[1]क्षणविध्वंसिनि काये का चिन्ता मरणे रणे ।
को हि मन्दः सहसैव स्वल्पेन वहु हारयेत् ॥ ३९.१६ ॥

एवं व्यक्तिपक्षेऽप्यन्वेष्यम् । [2]संकीर्णाश्च विपुलाप्रकारा दृश्यन्ते ।

यथा –

क्वचित्काले प्रसरता [3]क्वचिदापत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां वलम् ॥ ३९.१७ ॥
तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन् म्रदिम्नः स्फुटं फलम् ॥ ३९.१८ ॥

इत्यादि । ते स्वबुद्ध्याऽभ्यूह्याः । सर्वासां च विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः ।

## वक्त्रप्रकरणम् ।

**एकोऽष्टाक्षरः पादश्चतुर्वृद्धाः क्रमात् परे पदचतुरूर्ध्वं चतुर्विंशतिधा ॥४०॥**

एकः कश्चिदष्टाक्षरः पादस्ततोऽन्ये पादाः क्रमाच्चतुर्भिश्चतुर्भिर्वर्णैर्वृद्धाः कार्या इति पदचतुरूर्ध्वम् । तच्च न्यासभेदाच्चतुर्विंशतिधा । स्थापना यथा –

| | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | ८ | ८ | ८ | ८ | ८ | १२ | १२ | १२ | १२ | १२ | १२ | १६ | १६ | १६ | १६ | १६ | १६ | २० | २० | २० | २० | २० | २० |
| १२ | १६ | २० | १२ | १६ | २० | ८ | १६ | २० | ८ | १६ | २० | १२ | ८ | २० | १२ | ८ | २० | १२ | १६ | ८ | १२ | १६ | ८ |
| १६ | १२ | १६ | २० | २० | १२ | १६ | ८ | १६ | २० | २० | ८ | ८ | १२ | ८ | २० | २० | १२ | १६ | १२ | १६ | ८ | ८ | १२ |
| २० | २० | १२ | १६ | १२ | १६ | २० | २० | ८ | १६ | ८ | १६ | २० | २० | १२ | ८ | १२ | ८ | ८ | ८ | १२ | १६ | १२ | १६ |

प्राप्ते वसन्तमासेऽस्मिन्-,
अनन्तरेणौपर्धिं[7] वल्लभां गेहिनीम् ।
पदचतुरूर्ध्वं कथमिव पथिक यास्यसि,
विपलतिकानामिवोत्फुल्लकङ्केल्लिलतानां गन्धं जिघ्रन् ॥ ४०.१ ॥

एवमन्येऽपि भेदा उदाहार्याः ॥ ४०.१ ॥

**तदादौ द्विगं सर्वलं प्रत्यापीडः ॥ ४१ ॥**

तदेव पदचतुरूर्ध्वमादौ द्विगुरुकं ततः परं सर्वलघुवर्णं प्रत्यापीडः । यथा –

1) क्षणविध्वंसिनीति [ अत्र ] रणे सङ्ग्रामान्तर्मरणे का चिन्तास्ति । 2) संकीर्णाश्चेति – एकः पादो नगणस्य द्वितीयो मगणस्य । एवं एको मगणस्यान्य· सगणस्येत्यादिना नगणादीनां संकरे । 3) क्वचिदापत्येत्यत्र स्वर्भानुः राहुः । माघकाव्ये वृत्तमिदम् ।

१ विघ्नता A २ भानुमत P ३ मृदिम्न B महिम्न C ४ क्रमाच्चतुर्भिर्वर्णैर्वृद्धिर्याका क्रमाच्चतुर्भिरिति पद० A ५ कार्या droppoed in E ६ E adds –षोढैको द्विर्द्विरन्येऽवस्तदन्ये तु क्रमोत्क्रमात् । चतुर्विंशतिभेदं स्याच्चतुरूर्ध्वक्रमोत्क्रमौ । ७ ओपर्धीं A.

स्वामिन् जिनवर तव,
यो॑ऽह्रिद्वितयमृषभ विनमति ।
नम्रामरमणिमयमुकुटशुचिकिरण,-
मालाकिसलयितचरणकमल इह दिवि भवति ॥ ४१.१ ॥

**अन्ते च ॥ ४२ ॥**

तत्पदचतुरूर्ध्वमन्ते चकारादादौ च द्विगं शेषसर्वलघुवर्णं पुनः प्रत्यापीडसंज्ञम् ।

यथा –

नित्यं प्रणमत भक्त्या,
पादद्वयमिह चरमजिनस्य ।
सद्यो यदमरनरभुजगपरिवृढानां,
मौलौ सपदि भवति नवविकसितकमलवतंसः ॥ ४२.१ ॥

**द्विगमापीडः ॥ ४३ ॥**

चानुकृष्टत्वादादाविति नानुवर्तते । अन्ते द्विगुरुकं शेषसर्वलघुकं पदचतुरूर्ध्वमापीडसंज्ञम् । यथा –

[1]मदमुखरमयूरे,
स्फुटविविधसरिदधिकपूरे ।
नवघनसमय इह कलय वत कान्तां,
शरणमयि पथिक हतक झगिति जहिहि वनान्तम् ॥ ४३.१ ॥

अत्र प्रतिपादं चतुर्भिर्यतिरिति कश्चित् ॥ ४३.१ ॥

पदचतुरूर्ध्ववदापीडोऽपि चतुर्विंशतिधेति तन्मध्यात् [2]पूर्वाचार्यानुरोधेन भेदत्रयस्य नामान्युच्यन्ते –

**स आद्यस्य द्वितीयादिना व्यत्यये कलिकालवल्यमृतधाराः ॥ ४४ ॥**

स आपीड आद्यस्य पादस्य द्वितीयतृतीयतुर्यपादैर्विपर्यासे यथासंख्यं कलिकादयो भवन्ति । तत्राद्यस्य द्वितीयेन व्यत्यये कलिका । यथा –

[3]करकलितनिशितकरवालः,
सुचिरमवनिपालः ।

1) मदमुखरेत्यत्र नवीनमेघार्तो शीघ्रं त्यज काननसमीपम् । 2) पूर्वाचार्यानुरोधेनेत्यत्र यद्यपि चतुर्विंशतिधा स्थापिते आपीडे सर्वेऽपि विकल्पा अन्तर्भवन्ति तथापि पूर्वसूरिकृतप्रकारेण उदाहरणानां नामत्रयं पृथगुदाहार्यमिति । 3) करकलितेत्यत्र तीक्ष्णखड्गः । अवेति – राजा । कालो यमः ।

१ योऽङ्घ्रिद्वितीय N २ किशलयित E ३ द्विगं EF ४ जहहि A ५ चतुर्धैवेति E ६ द्वितीयादिपादैः F. ७ तुर्यैः पादैः E ८ कलिकाद्या यथाक्रमं स्युः F

[१]पृथुमदरिपुनृपतिवलदलनकालस्,
त्वमिह जय निज[२]विलसितपरिदलितकलिकालः ॥ ४४.१ ॥
मञ्जरीति पिङ्गलः ॥ ४४·१ ॥

आद्यस्य तृतीयेन व्यत्यये लवली । यथा –

[1]त्वयि जलधिमनु च[३]लति नृप,
मुखवासः समजनि निखिलदिग्बलानाम् ।
सुरभिबहुरजोभिस्,
तरलतुरगनिकरखुरमृदितमृदुलवलीनाम् ॥ ४४.२ ॥

आद्यस्य तुर्येण व्यत्यये अमृतधारा । यथा –

[2]प्रणययति सखि समुपहसि[४]तमनसिशयरूपे,
प्रणयमनुसर क इव मानः ।
स्रवति [५]वचनमपि मधुरमिह यदस्य,
सततममृतधाराम् ॥ ४४.३ ॥

[3]पिङ्गलस्तु पदचतुरूर्ध्वभेदा[६]नेतानाह । यथा –

[4]जनयति महतीं प्रीतिं हृदये,
कामिनां चूतमञ्जरी ।
मिलदलिचक्रचञ्चुपरिचुम्बितके[७]सरा,
कोमलमलयवातपरिनर्तिततरुशिखरस्थिता ॥ ४४.४ ॥

[5]विरहविधुरहूणकान्ताकपोलावदातं,
परिणतिदरपीतपाण्डुच्छवि लवलीफलं निदाघे ।
जयति हिमशीतलं,
[6]षा[८]डवस्वादु तृष्णाहरं सुन्दरम् ॥ ४४.५ ॥
यदि वाञ्छसि कर्णरसायनं सततममृतधाराभिर्,
यदि हृ[९]दि वा परमानन्दरसम् ।

1 ) त्वयि जलधीत्यत्र अनु लक्ष्यीकृत्य । मुखवासः पटवास· । दिग्रूपकामिनीनाम् । 2 ) प्रणेति – स्नेहयति स्नेहं कुरु । 3 ) पिङ्गलस्त्विति – पिङ्गलस्येत्युदाहृतिः यदनया रीत्या स्थापितानि त्रीणि उदाहरणानि अस्माकं मते पदचतुरूर्ध्वसंज्ञां प्राप्नुवन्ति । पर तस्य लघुगुरुव्यक्तिर्न । 4 ) जनयति महेत्यत्र चञ्चु इति – निपुणं अथवा अलिनिकरस्य चञ्चवस्ताभि· । 5 ) विरहविधुरितेत्यत्र हूणो देशविशेषस्तत्रत्यस्त्रिय· । परिणतीति – पाकेन ईषत्पाण्डुच्छवि । 6 ) षड्रसानवतीति–षडवं पानविशेष· तस्येदं तद्वद्वा स्वादु । [ षाडवः पानकभेदः । तद्वत् स्वादु P ] । पाण्डवपाठपक्षे पण्डववनजातम् ।

१ प्रथुमद N २ निज dropped in A ३ वलति N ४ A adds मनसित after हसित ५ वदनमपि A ६ भेदानेततनोततोह A भेदानेतास्त्रीनप्याह F ७ केशरा ८ पाण्डव ABCDNS ९ हृदि dropped in B

भ्रातः शृणु [1]धरणीधरवाणीममृतमयीं,
तत्काव्यगुणभूषणम् ॥ ४४.६ ॥

पदचतुरूर्ध्वप्रकरणं [2]सप्तभिः ॥ ४४.६ ॥

स्जस्ला न्सज्गा भ्नजल्गाः स्जसज्गाः पादैरुद्गता ॥ ४५ ॥

यस्य प्रथमे पादे सजसलाः, द्वितीये पादे नसजगाः, तृतीये पादे भनजलगाः, चतुर्थे पादे सजसजगाः – तद्वृत्तमुद्गता । यथा –

[3]वत चन्द्रिकाजलमशेषम्,
उपरमयितुं चकोरकाः ।
शक्यमिह न खलु तत्परितः,
पिबतोद्गतां सपदि चन्द्रलेखिकाम् ॥ ४५.१ ॥

र्नभगास्तृतीये सौरभकम् ॥ ४६ ॥

उद्गतैव तृतीये पादे रनभगाश्चेत् सौरभकम् । तृतीय इति वचनादुद्गताया एवान्ये त्रयः पादा गृह्यन्ते । यथा –

[4]अतिरेकवान् किल गुणोऽपि,
कलयति कदापि दोषताम् ।
सप्तपर्णविटपी विलसन्,
मदसौरभाद् [5]वनगजैर्विदल्यते ॥ ४६.१ ॥

नौ सौ ललितम् ॥ ४७ ॥

उद्गतैव तृतीये पादे ननससाश्चेल्ललितम् । पादत्रयं पूर्ववत् तदेव । यथा –

[6]सदलंकृतैर्गुणगणेन,
विविधरसभावभङ्गिभिः ।
सुललितपदरचनाभिरहो,
ललनेव का न कविता मनोरमा ॥ ४७.१ ॥

उद्गताप्रकरणं त्रिभिः ॥ ४७.१ ॥

1) धरणीधरः कविविशेषः । 2) सप्तभिरिति – पदचतुरूर्ध्वं १ प्रत्यापीडभेदद्वय ३ आपीड ४ कलिका ५ लवली ६ अमृतधारा ७ । 3) वत चन्द्रिकेत्यत्र काचिद्विरहिणी चकोरपक्षिणः प्राह – हे चकोराः भवद्भिरिति गम्यम् । उद्गतां इमां चन्द्रिकां यूयं पिबत पानं कुरुध्वम् । 4) अतिरेकवानित्यत्र अतिरेक आधिक्यम् । 5) वनगजैरिति – वनगजा हि तद्गन्धं न सहन्ते इत्युत्पाटयन्ति । 6) सदलंकृतेत्यत्र प्रधानोपमाद्यलंकारैर्भूषणैश्च । गुणा माधुर्यादयः १० शीलरूपादयः । विविधेति – शृङ्गारादय गभीरार्थाः । पक्षे हावभावादयः । कान्तेव । कवेः कर्म कविता ।

१ वि dropped in N

**म्सज्भगगाः स्नजरगाः नासौ निज्याः पादेपूपस्थितप्रचुपितम् ॥ ४८ ॥**

प्रथमे पादे मसजभगगाः, द्वितीये पादे सनजरगाः, तृतीये ननसाः, चतुर्थे नगणत्रयं जयौ च यत्र भवन्ति तदुपस्थितप्रचुपितं वृत्तम् । यथा–

[1]राजन् यैः समरे मदादुपस्थितपूर्व,
द्विरदप्रचुपितयायिभिर्विपक्षैः ।
तव धनुरुरुनिनदाद्,
द्रुतगति मृगवदपसरन्ति त एते ॥ ४८.१ ॥

**नौ स्नौ न्सौ तृतीये वर्धमानम् ॥ ४९ ॥**

उपस्थितप्रचुपितमेव तृतीये पादे ननसननसाश्चेद् वर्धमानम् । तृतीये इति वचनादन्यत्पादत्रयं तदवस्थमेव । यथा–

[2]दिग्यात्रासमयेऽद्य जैत्रतूर्यनिनादैर्,
वियति प्रतिरसितेन वर्द्धमानैः ।
भयतरलितगमनान् दिनकररथतुरगान्,
कथमपि नृवर नियमयत्यरुणोऽयम् ॥ ४९.१ ॥

**तज्राः शुद्धविराड्ऋषभम् ॥ ५० ॥**

उपस्थितप्रचुपितमेव तृतीये पादे तजराश्चेत् तदा शुद्धविराड्ऋषभम् । अन्यत्पादत्रयं तदवस्थमेव । यथा–

[3]लावण्यामृतपूरधारिणीह विशाल–,
रमणोन्नतपुलिनस्थलीमनोज्ञा ।
सा शुद्धविराण्मुखाम्बुजा,
सरिदिव रमयति हृदयानि नराणाम् ॥ ५०.१ ॥

**उपस्थितप्रचुपितप्रकरणं त्रिभिः ॥ ५०.१ ॥**

+

**पूर्वेऽर्धे म्गौ परे न्ल्ललाः सौम्या ॥ ५१ ॥**

पूर्वार्धे पञ्च मगणा गुरुश्च । षोडश गुरव इत्यर्थः । उत्तरार्धे दश नगणा लद्वयं च द्वात्रिंशल्लघव इत्यर्थः यत्र तच्छन्दः सौम्या । यथा–

---

1) राजन् यैरित्यत्र राज्ञां समूहे. पूर्वमागतं गजवत् प्रचुपितं मन्दं याति इति । सलीलगतय इत्यर्थः । द्रुतगतीति–क्रियाविशेषणम् । 2) दिग्यात्रेत्यत्र तूर्यं वादित्रम् । वियत्याकाशे । प्रतिशब्देन । नियच्छयति सूर्यसारथिः । 3) लावण्यामृतपूरेत्यत्र शुद्धो धवलो वीनां पक्षिणां राजा राट् अर्थात् हंस मुखे येषां एवंविधानि अम्बुजानि यस्यां सा। पक्षे शुद्ध निर्मल विराजति इति विराट् । एवंविधं वदनाम्बुजं यस्याः सा नदीव ।

---

१ स्नजर्गा BFGHP २ पादे dropped in ABDP ३ अपसरति N ४ तदवस्थितमेव A ५ नियमायत्य० A. ६ प्रचुपित dropped in N, ७ पूर्वार्धे H, पूर्वे अर्धे ABCDN ८ गुरुन A

[1]सौम्यैतस्याः किं बालाया नो जानीषे कष्टावस्थाम् ।
धरणितलविलुठनमलिनितकुचकलशमनुभवति तव[1] विरहमिह किल ॥ ५१.१ ॥

**व्यत्यये ज्योतिः ॥ ५२ ॥**

यत्र पूर्वार्धे द्वात्रिंशल्लघव उत्तरार्धे षोडश गुरवस्तच्छन्दो ज्योतिः । यथा—

[2]परिहर बत परिचयमयि[2] युवतिषु किमिति[3] नहि विसृजसि विषयसुखमिह ।
ज्योतीरूपं निष्कर्माणं[4] कृत्वात्मानं मुक्तिं यायाः ॥ ५२.१ ॥

एते द्वे अप्यनङ्गक्रीडे इति जयदेवः । शिखेत्यहीन्द्रः ॥ ५२.१ ॥

**विषमवृत्तप्रकरणम् ॥**

अथ मात्राच्छन्दांसि ।

**ओजे षण्मात्रा रलगन्ता[5] युज्यष्टौ न युजि षट् संततं ला न समः परेण गो वैतालीयम् ॥ ५३ ॥**

ओजपादयोः षण्मात्रा रलगन्ताः रगणलघुगुर्ववसानाः । युक्पादयोरष्टौ मात्राः रलगन्ता एव यत्र तद्वैतालीयं नाम च्छन्दः । अपवादमाह—न युजोः पादयोः षड् लघवो निरन्तरा भवन्ति[6] । [3]न च समो लः सर्वपादेषु परेण सह गुरुर्भवति । यथा—

[4]अधुना भवदीयवैरिणाम्, अटवीकोटरचारिणां नृप ।
प्रतिभाति तृषान्धचेतसां, वै तालीयरसः सुधोपमः ॥ ५३.१ ॥

[5]अत्रौजपादेऽष्टौ विकल्पाः । युक्पादे त्रयोदश । अष्टभिस्त्रयोदश गुणिताश्चतुरुत्तरं शतं वैतालीयपूर्वार्धे भेदा भवन्ति । उत्तरार्धेऽपि तावन्त एव । अन्योऽन्यताडनायां जातानि दश सहस्राणि अष्टौ शतानि षोडशाधिकानि ॥ ५३.१ ॥

**र्यान्ता औपच्छन्दसकम् ॥ ५४ ॥**

ओजे षण्मात्रा युज्यष्टौ र्यान्ता रगणयगणान्ताश्चेद् भवन्ति शेषं तु सर्वं वैतालीयसमं तदा औपच्छन्दसकं नाम च्छन्दः । यथा—

1) सौम्यैतस्याः बालायाः मुग्धाया दुःखावस्थाम् । 2) परिहरेत्यत्र परिचयं संसर्गं यायाः गच्छेः । 3) न च समो ल इति—द्वितीयचतुर्थषष्ठादिवर्णः समः स लघुः परस्त्रेतनेन अक्षरभारेण गुरुर्न कार्य इत्यर्थः । 4) अधुनेति—वै निश्चयेन । ताल्या अयं तालीयः । 5) अत्रौजपादेऽ[ष्टौ] विकल्पा इति—अत्र वैतालीयस्य विषमपादे त्रयोदशधा षगणः प्रस्तार्यते तत्र या समभात्रा पराश्रिता भवति तान् विकल्पान् परित्यज्य शेषा अष्टौ गृह्यन्ते । युक्पादयोरार्याया गणद्वयं प्रथमं प्रस्तार्यते ततो विंशतिर्विकल्पा भवन्ति । ततो येषु रूपेषु समा मात्रा पराश्रिता भवति तदप्रस्तारान् परित्यज्य अपरे ग्राह्याः ।

१ तव dropped in A. २ अपि CDFNP. ३ किमति N ४ नि कर्माणं P. ५ लगन्ता GH ६ न्यु P.

कीर्तिस्तव वल्लभा त्रिलोकीम्, अखिलां पर्यटतीति यत् प्रबुद्धाः ।
कवयः कथयन्ति[1] सत्यमेतन्-, [1)]नौपच्छन्दसका[2] भवन्ति सन्तः ॥ ५४.१ ॥

**भगगान्ता आपातलिका ॥ ५५ ॥**

ओजे पण् मात्राः युज्यष्टौ भगणगुरुद्वयान्ताश्चेद् भवन्ति शेषं वैतालीयसमं तदा आपातलिका नाम च्छन्दः । यथा–

[2)]आपातलिका वत संपत्, क्षणिकं प्राणितमप्यसुभाजाम् ।
इति मत्वा निश्चयपूर्वं, शाश्वतिकार्थे यत्नमुपाध्वम् ॥ ५५.१ ॥

आपातलिका अस्थिरा ॥ ५५.१ ॥

**युजि तिसृभ्यो गः प्राच्यवृत्तिः ॥ ५६ ॥**

युक्पादयोस्तिसृभ्यो मात्राभ्यः परो गुरुश्चेत् तदा प्राच्यवृत्तिच्छन्दः । ओजयोस्तु [3)]पूर्ववत्[3] । सा च वैतालीय-औपच्छन्दसक-आपातलिकोपाधिभेदात् त्रेधा[4] । तत्र वैतालीय-प्राच्यवृत्तिर्यथा–

[4)]भुवने दधदेकवीरतां, त्यागधर्मकरुणापराक्रमैः ।
नृपसिंह पटच्चरीं निज-, प्राच्यवृत्तिमकरोः पुनर्नवाम् ॥ ५६.१ ॥

औपच्छन्दसकप्राच्यवृत्तिर्यथा–

[5)]उदयाचलवप्रभागवल्गत्-, सप्तसप्तितुरगांह्रितांडनोत्था[5] ।
नवपल्लवपाटला पुरस्ताद्, धातुधूलिपटलीव भाति सन्ध्या ॥ ५६.२ ॥

आपातलिकाप्राच्यवृत्तिर्यथा–

[6)]अलिमलिने व्योम्नि पतन्तो, रश्मयोऽभिनवशीतमरीचेः ।
दधति तुलामन्तरुदन्वत्-, सान्द्रविद्रुमलताविपिनानाम् ॥ ५६.३ ॥

अत्र चत्वारो विकल्पाः । यथा ऽ|ऽ|ऽ; |||ऽ|ऽ; ऽ|ऽ|||; |||ऽ|||; ते च ओजपाद-विकल्पैरष्टभिराहता द्वात्रिंशत्पूर्वार्धविकल्पाः । उत्तरार्धेऽपि[6] तावन्तः । अन्योऽन्यताडनायां दश शतानि चतुर्विंशत्यधिकानि । इयमुपपातलिकेत्येके[7] ॥ ५६.३ ॥

**अयुज्याद्यलाद्[8] ग उदीच्यवृत्तिः ॥ ५७ ॥**

अयुक्पादयोराद्याल्लघोः[9] परो गुरुश्चेत् तदा उदीच्यवृत्तिः । युजोस्तु पूर्ववत्[10] । एषापि पूर्ववत् त्रिधा[11] । तत्र वैतालीयोदीच्यवृत्तिर्यथा–

1) नौपच्छन्दसका इति–छन्द उपपन्नं च्छन्दोऽनुवर्तनम् । तत्र भवेऽण् । स्वार्थे कश्च । 2) आपातलिकेत्यत्र आपातं समन्तात्पतनं लातीति आपातला । ततः स्वार्थे कः । प्राणितं जीवितम् । उपाध्वं उद्यमं कुरुध्वम् । 3) पूर्ववदिति–वैतालीयादिवत् । 4) भुवने दधेत्यत्र पटच्चरी जीर्णाम् । स त्वं इत्यध्याहार्यम् । 5) उदयाचलेत्यत्र सप्तसप्तिः सूर्यः । 6) अलिमलिने इत्यत्र अन्तरु[द]न्वेति–समुद्रमध्ये । घनप्रवालवल्लिवनानाम् ।

१ कवयन्ति N  २ नौपच्छन्दसिका K  ३ प्राग्वत् F  ४ त्रिधा F  ५ तुरगांह्रि N  ६ तावद्भिरेवोत्तरार्धसत्कैस्ताडिता १०२४ F  ७ इत्यन्ये P  ८ आद्याल्लाद् GH  ९ आद्याल्लालघो A  १० प्राग्वत् F,  ११ त्रेधा P

[1]विवस्वतोदीच्यवृत्तिना, मरुता दक्षिणवृत्तिना[1] तथा ।
जनोऽयमिह जायते [2]मधौ, युगपत्तापतुषारभाजनम् ॥ ५७.१ ॥

औपच्छन्दसकोदीच्यवृत्तिर्यथा –

[3]भवद्गुणकथा[2]श्रुतेरमर्षाद्, दशनैरोष्ठमखण्डयन्नृपा ये ।
महीश युधि [4]चेटचिह्नमेते, विदधत्यङ्गुलिखण्डनं त्वदग्रे ॥ ५७.२ ॥

आपातलिकोदीच्यवृत्तिर्यथा –

विनम्रसुररत्नकिरीट-, रश्मिविमिश्रितपादनखांशुः ।
अगाधकरुणारससिन्धु, पातु स वश्चरमो जिननाथः ॥ ५७.३ ॥

अस्या अपि विकल्पौ द्वौ ।ऽ।ऽ; ।ऽ।।।; युक्पादविकल्पैस्त्रयोदशभिराहतौ षड्विंशतिः पूर्वार्धभेदाः । अपरार्धेऽपि तावन्तः । अन्योऽन्यताडनायां जातानि षट् शतानि षट्सप्तत्यधिकानि ॥ ५७.३ ॥

**ते मिश्रे प्रवृत्तकम् ॥ ५८ ॥**

ते प्राच्यवृत्त्युदीच्यवृत्ती मिश्रे संकीर्णे प्रवृत्तकम् । युक्पादे मात्रात्रयाद् गुरुः, अयुक्पादे आद्यलाद् गुरुरित्यर्थः । इदमपि वैतालीयादिभेदात् त्रेधा । तत्र वैतालीयप्रवृत्तकं यथा –

[5]प्रवृत्तकरिविद्रवं रथ-, भ्रष्टनष्टसुभटं [6]विधाजि च ।
द्विषां बलमजायत त्वयि, क्ष्मापते [7]क्षणमधिज्यधन्वनि ॥ ५८.१ ॥

औपच्छन्दसकप्रवृत्तकं यथा –

[8]पुरो दिनपतेरमुष्य सद्यः, पश्य संप्रति कठोरपादपातैः ।
स्फुटन्ति कमलाकराः समन्ताच्-, छीर्यते च सहसा तमिस्र[3]राशिः ॥ ५८.२ ॥

आपातलिकाप्रवृत्तकं यथा –

[9]भवच्चरणयोः प्रणयित्वं, यान्त्ययुः क्षितिभृतां न गिरांसि ।
क्षणाद् दहगिरे युधि तानि, क्षुद्रगृध्रचरणप्रणयीनि ॥ ५८.३ ॥

अत्र प्रथमपादविकल्पाभ्यां द्वितीयपादविकल्पाश्चत्वारः आहताः अष्टौ पूर्वार्धे विकल्पाः । एवमुत्तरार्धेऽपि । अन्योऽन्यताडनायां चतुःषष्टिविकल्पाः ॥ ५८.३ ॥

1) विवस्वतोदीच्येत्यत्र उत्तरदिग्वर्तिना सूर्येण दक्षिणदिग्वर्तिना वायुना । 2) वसन्ते समकालं तापशीतपदम् । सूर्येण तापो मरुता तुषारश्च शीतलतया । 3) भवद्गुणेत्यत्र श्रवणात् । अमर्षात् क्रोधात् । दन्तैरधर राजानः । 4) नामलक्षणम् । 5) प्रवृत्तकरीत्यत्र पूर्वं भ्रष्टाः पश्चान्नष्टा रथेभ्यः भ्रष्टनष्टाः सुभटा यत्र । 6) विगताश्वम् । 7) ज्यामधिरूढं तस्मिन् । 8) पुरो दिनपतेरित्यत्र कठिनकिरणपतनैः विकसन्ति पद्माकरा लक्ष्मीवन्तश्च । स्फुटन्ति ध्वान्तराशिः । 9) भवच्चरणेत्यत्र अयुरिनि-इक् गतौ ।

१ दक्षिणावृत्तिना A, दक्षिणावर्तिना E  २ कथा dropped in N  ३ तमिस्र० CP.

वैतालीयादेर्युक्पादजा अपरान्तिका ॥ ५९ ॥

वैतालीय-औपच्छन्दसक-आपातलिका-तत्प्राच्यवृत्तीनां समपादैर्जनिता अपरान्तिका । तत्र वैतालीयापरान्तिका यथा–

[1]दिशतीं दुग्धपयोधिविभ्रमं, लवणाब्धेरिह रोधसि स्थिताः ।
श्रीसिद्धाधिप कीर्तिमुच्चकैस्, तव गायन्त्यपरान्तिकाः स्त्रियः ॥ ५९.१ ॥

इयं वैतालीयदक्षिणान्तिकेत्येके ॥ ५९.१ ॥

औपच्छन्दसकापरान्तिका यथा–

श्रीचौलुक्य किमद्भुतं पपात, व्योम्नो यत्त्वयि दिव्यपुष्पवृष्टिः ।
प्राक् तस्मिन्नरिकुम्भिकुम्भभेदात्, कीर्णा मौक्तिकपङ्क्तयस्त्वया हि ॥ ५९.२ ॥

इयमौपच्छन्दसकदक्षिणान्तिकेत्येके ॥ ५९.२ ॥

आपातलिकापरान्तिका यथा–

[2]तरुणीवेषा दीपितकामा, विकसज्जातीपुष्पसुगन्धिः ।
उन्नतपीनपयोधरभारा, प्रावृट् तनुते कस्य न हर्षम् ॥ ५९.३ ॥

इदं नलिनमित्येके ।

अत्र भेदत्रये प्रत्येकं प्रथमपादविकल्पैस्त्रयोदशभिर्द्वितीयपादविकल्पास्त्रयोदश आहताः एकोनसप्तत्यधिकं शतं पूर्वार्धे विकल्पाः । उत्तरार्धेऽपि तावन्तः । अन्योऽन्यताडनायां जातान्यष्टाविंशतिसहस्राणि पञ्च शतान्येकषष्ट्यधिकानि ॥ ५९.३ ॥

वैतालीयप्राच्यवृत्त्यपरान्तिका यथा–

[3]आगतोऽसि धूर्तापरान्तिकान्-, न ह्यलीकवा[1]चामिहास्पदम् ।
जतुरसोऽयमक्ष्णोस्तथाधरे, कज्जलं च यत्ते विलोक्यते ॥ ५९.४ ॥

औपच्छन्दसकप्राच्यवृत्त्यपरान्तिका यथा–

केवलस्य न गिरेर्यदङ्घ्रिपद्मा[2]-, ङ्गुष्ठपीडनवशाच्छिरः सुमेरोः ।
कम्पितं दिविपदा च विस्मितानां, पातु पश्चिमजिनः स वोऽद्भुतश्रीः ॥ ५९.५ ॥

आपातलिकाप्राच्यवृत्त्यपरान्तिका यथा–

[4]सुभग हे सरभस सविलासैः, प्रतिमुहुस्तरललोचनपातैः ।
संगमोत्सवविधौ तव सत्यं–, कारमर्पयति पङ्कजनेत्रा ॥ ५९.६ ॥

---

1) दिशती दुग्धेत्यत्र अपरान्ते पश्चिमदिगन्ते भवा. अथवाऽपरस्यान्तिका. पश्चिमदिग्वर्तिन्य. इत्यर्थ. । 2) तरुणीवेषेति–अत्र कान्तेव उभयोरपि दीपितेति समानं विशेषणम् । जातिकुसुमै. सुगन्धि· । स्त्रीपक्षे तद्वत् सुगन्धिः । पयोधरा मेघाः स्तनाश्च । 3) आगतोऽसीत्यत्र कस्या अपि स्त्रिय पुर. प्राणेशो वक्ति नाहं कस्या अपि समीपादागतोऽस्मि अपराया. कामिन्या इत्यर्थ· । परस्परं नेत्राधरचुम्बनेन अधरे कज्जलं लोचने लाक्षारसः । 4) सुभगेत्यत्र सत्यंकार 'सचकार' इति प्रसिद्धम् ।

---

१ वचसा E  २ अह्रिपदाङ्गुष्ठ O, अङ्घ्रिपद्माङ्गुष्ठ N

इयमुत्पातलिकेत्येके[1] । अत्रापि भेदत्रये प्रत्येकं प्रथमपादविकल्पैश्चतुर्भिर्द्वितीयपादविकल्पाश्चत्वारः आहताः षोडश पूर्वार्धे । उत्तरार्धेऽपि तावन्तः । अन्योऽन्यताडनायां द्वे शते षट्पञ्चाशदधिके ॥ ५९.६ ॥

**ओजजा चारुहासिनी ॥ ६० ॥**

वैतालीयादेर्विषमपादजाता चारुहासिनी । तत्र वैतालीयचारुहासिनी यथा –

यदि सा वत चारुहासिनी, किमु [1]चन्द्रिकयानया ततः ।
यदि सा च विलोलॅलोचना[2], किमु नीलसरोजिनीवनैः ॥ ६०.१ ॥

वैतालीयोत्तरान्तिकेत्येके ॥ ६०.१ ॥

औपच्छन्दसकचारुहासिनी यथा –

[2]ततिरिह गगने न तारकाणां, प्रतिदिशमुदिता विभाति किं तु ।
सरभसमुपसर्पतः सुधांशोः, कीर्णः कुसुमाञ्जली रजन्या ॥ ६०.२ ॥

औपच्छन्दसकोत्तरान्तिकेत्येके ॥ ६०.२ ॥

आपातलिकाचारुहासिनी यथा –

[3]भाति सुवदने तव भाले, नवमलयजचित्रकलेखा[3] ।
पद्मं जित्वा नयनाभ्याम्[4], उक्षिप्तेवेह पताका ॥ ६०.३ ॥

अवपातलिकेत्यन्ये[5] ।

अत्र भेदत्रये प्रत्येकं प्रथमपादविकल्पैरष्टभिर्द्वितीयपादविकल्पाः अष्टावाहताः[6] चतुःषष्टिः पूर्वार्धे । अपरार्धेऽपि तावन्तः । अन्योऽन्यताडनायां चत्वारिंशच्छतानि षण्णवत्यधिकानि ॥ ६०.३ ॥

वैतालीयोदीच्यवृत्तिचारुहासिनी यथा –

[4]हृदि प्रविष्टा मृगेक्षणा, तथा यथैव तस्थुषी ।
मनोभुवो निष्पतच्छरैर्[7], निरन्तरैः कीलितेव सा ॥ ६०.४ ॥

औपच्छन्दसकोदीच्यवृत्तिचारुहासिनी यथा –

[5]विदग्धयूनां पतद्भिरेभिः, स्खलद्गतिरिवायतैः कटाक्षैः ।
इयं सुजघनातिमन्दमन्दं, सखे वितनुते पदप्रपञ्चम् ॥ ६०.५ ॥

1) चन्द्रिकया अनयेति–चन्द्रज्योत्स्नया । श्यामकमलवनैः । 2) ततिरिहेत्यत्र ततिः श्रेणि. । सरभसं सादरम् । कुसुमेति प्रसिद्धा । 3) भाति सुवदने इत्यत्र नवेति–तिलकरेखा । उक्षिप्तेवेति–ऊर्ध्वीकृतेव पताका । 4) हृदि प्रविष्टेत्यत्र मम इय हृदये तथा प्रविष्टा यथा इवोत्प्रेक्षते मम हृदये किं कीलिता । हृदयान्न नि.सरतीति भाव. । 5) विदग्धेत्यत्र आयतैर्विस्तीर्णै. । सुजघनेति–कान्ता ।

१ इमा उत्पातलिका केचिदाहु· F २ लोल dropped in B ३ चित्रके लेखा A ४ नयानाभ्या A ५ इत्येके P ६ अष्टाहता P ७ नि पतन् C

आपातलिकोदीच्यवृत्तिचारुहासिनी यथा —

[1]विशालवंशादपि जातः, सदा प्रकटयन्नतिमेकाम्।
धनुःसदृशतां कलय त्वं, गुणाधिरोहोऽभिमतश्चेत्॥ ६०.६ ॥

अत्रापि भेदत्रये प्रथमपादविकल्पाभ्यां द्वितीयपादविकल्पावाहतौ चत्वारः पूर्वार्धे। अपरार्धेऽपि तावन्तः। अन्योऽन्यताडनायां षोडश ॥ ६०.६ ॥

**सर्वेष्वाद्यलाद् गो दक्षिणान्तिका ॥ ६१ ॥**

वैतालीयादेः [2]यथासंभवं सर्वेषु पादेषु आद्याल्लघोः परो गुरुश्चेद् भवति तदा दक्षिणान्तिका। यथा —

[3]तुषारसंभारवेदना-, भियेव हैमवतीं त्यजन् दिशम्।
मयूखवानेष[1] संप्रति, प्रयाति सरणिं दक्षिणान्तिकाम्॥ ६१.१ ॥

एवमौपच्छन्दसकापातलिकयोरुदाहार्यम्। अत्र भेदत्रयेऽपि प्रत्येकं प्रथमपाद-विकल्पद्वयेन द्वितीयपादविकल्पाश्चत्वारो हताः अष्टौ पूर्वार्धे। अपरार्धेऽपि तावन्तः। अन्योऽन्यताडनायां चतुःषष्टिः॥ ६१.१ ॥

**ओजे चौ युजि पचौ लदलदान्तौ मागधी ॥ ६२ ॥**

विषमे चौ चतुर्मात्रौ द्वौ गणौ लदलदान्तौ। समे पचौ षण्मात्र-चतुर्मात्रौ च लदलदान्तौ। ते यत्र भवतः सा मागधी। लदलदान्ताविति — ल इति लघुः, द इति मात्राद्वयम्। पुनर्लघुर्मात्राद्वयं चान्ते ययोस्तौ तथा। यथा —

[4]मधुसहचरीह पिकरमणी, नवसहकारविहारलालसा।
त्रिजगज्जयिनो मनोभुवो, मङ्गलगीतौ भवति मागधी॥ ६२.१ ॥

अत्र प्रथमपादे चौ पञ्च-पञ्चभेदौ। ल एकभेदः, दो द्विभेदः पुनर्ल एकभेदः, दो द्विभेदः। [2]एषामन्योऽन्यताडने जातं शतम्। द्वितीयपादे षत्रयोदशभेदः। चः पञ्चभेदः। ल एकभेदः। दो द्विभेदः। पुनर्ल एकभेदः। दो द्विभेदः[2]। अन्योऽन्य[3]ताडने षष्ट्य-धिकशतद्वयम्। अस्य प्रथम[4]पादविकल्पैस्ताडने जातानि षड्विंशतिः सहस्राणि पूर्वार्धे विकल्पाः। अपरार्धेऽप्येवम्। अन्योऽन्यताडने जाताः सप्त[5]षष्टिः कोट्यः षष्टिलक्षाधिकाः ॥ ६२.१ ॥

1) विशालेत्यत्र गुणा. शौर्यादयः। पक्षे मौर्वी। 2) यथासंभवमित्यत्र प्राच्यवृत्ति-उदीच्यवृत्तिछन्दसी वर्जयित्वा। यतः प्राच्यवृत्तेर्भणितचतुःप्रकाराणां मध्यादेकस्मिन्नप्याद्यलाद् गो न भवति। उदीच्यवृत्तिरुक्तमध्ये एवान्तर्भूता। तस्या एवंविधस्यैव लक्षणस्य प्रतिपादितत्वात्। 3) तुषारसंभारेत्यत्र हिमाचलसंबन्धिनीं दिशं अर्थादुत्तराम्। मयूखवान् रविः। दक्षिणस्याः समीपवर्तिनीं सरणिं मार्गम्। 4) मधुसहचरीत्यत्र वसन्तस्य सखी कोकिला। नवाम्रक्रीडनासक्ता। मागधी मङ्गलगानकर्त्री।

१ मयूषवान् A २-२ एषामन्योन्य० to दो द्विभेद (२nd) is dropped in N ३ एषामन्योन्य० C, अन्योन्याभ्यासे A ४ पाद dropped in A ५ सप्तषष्टिकोट्य ACN.

**ओजजा पश्चिमान्तिका ॥ ६३ ॥**

माग[1]धिकाया ओजपादेन जनिता पश्चिमान्तिका । यथा –

[1] उदयं लब्ध्वा महीतले, सन्तापकरः कथं भवान् ।
दिवसापगमेऽस्तकारिणी, तरणे तव पश्चिमान्तिका ॥ ६३.१ ॥

अत्र प्रथमपादविकल्पशतेन द्वितीयपादविकल्पशतं ताडितं जातानि दश सहस्राणि पूर्वार्धे । अपरार्धेऽप्येवम् । अन्योऽन्यताडनायां जाता दश कोट्यः ॥ ६३.१ ॥

**युग्जोपहासिनी ॥ ६४ ॥**

मागधिकायाः समपादैर्जनितोपहासिनी । यथा –

[2] वपुषेयं द्रुतहेमभासिनी, लोचनलक्ष्म्याम्बुजविलासिनी ।
भ्रुवा मनसिजधनुःप्रकाशिनी, वदनरुचा चन्द्रोपहासिनी ॥ ६४.१ ॥

अत्र प्रथमपादविकल्पानां षष्ट्यधिकशतद्वयेन द्वितीयपादविकल्पास्तावन्त एवाहताः । जातानि सप्तषष्टिः सहस्राणि षट्शताधिकानि पूर्वार्धे । अपरार्धेऽप्येवम् । अन्योऽन्यताडनायां [3] चत्वार्यब्जानि षट्पञ्चाशत्कोट्यः सप्तनवतिर्लक्षाः षष्टिः [2] सहस्राणि ॥६४.१॥

**वैतालीयप्रकरणं त्रिंशत् ॥**

*

**अजमुखश्चीर्गन्तो नवमे ले मात्रासमकम् ॥ ६५ ॥**

न विद्यते जगणो मुखे यस्यासावजमुखः । चीरिति चत्वारश्चगणाः । गुर्वन्ताः । नवमे लघौ सति मात्रासमकम् । [4] तत्राद्ये चगणे चत्वारो विकल्पाः ऽऽ; ।।ऽ; ऽ।।; ।।।।; द्वितीये त्रयः ऽऽ; ।।ऽ; ऽ।।; मध्यगुरुसर्वलघुविकल्पौ तु [5] विश्लोकेनापोदितत्वान्न भवतः । तृतीये एकः ।।ऽ; नवमे ले इति वचनादादिगुरुसर्वगुरू[3] न भवतः । मध्यगुरुसर्वलघू तु [6] वानवासिकालक्षणेनापोदितौ[4] । चतुर्थे द्वौ ऽऽ; ।।ऽ; गन्तत्वाभिधानादन्यविकल्पानामप्राप्तिः । अन्योऽन्यताडनायां प्रतिपादं चतुर्विंशतिर्भेदाः । चतसृणां चतुर्विंशतीनामन्योऽन्यताडनायां जातं तिस्रो लक्षाः एकत्रिंशत्सहस्राः सप्त शतानि षट्सप्तत्यधिकानि । यथा –

1) उदयं लब्ध्वेत्यत्र अन्योक्तिः । उदयं प्रतिष्ठां प्राप्य कथं भवान् संतापकृत् । किं तु इदं न जानासि तव विनाशकारिणी पश्चिमान्तिका अन्तिकप्रान्तावस्था । ततो भव्यं किमपि कुरु । अथवा पश्चिमा दिक् अन्तिका समीपस्था । 2) वपुषेत्यत्र द्रुतं गलितम् । 3) चत्वार्यब्जानीति – कोटिशतसंख्यमब्जम् । 4) तत्राद्ये गणे चत्वारो विकल्पा इति – जगणरूपचगणस्य वर्जितत्वात् । 5) विश्लोकेनेति – लौ पञ्चमाष्टमौ विश्लोकः । 6) वनवासिकालक्षणेनेति – द्वादशश्च वानवासिका । अयमर्थः – द्वादशश्चकारान्नवमश्च यत्र लघुर्भवति सा वानवासिका ।

१ मागधिकाया placed after जनिता in A २ षष्टिसहस्राणि P ३ आदिगुरुसर्वलघू N. ४ अपोदितत्वात् ACDN

[1]अद्यापि मधुः शिशुरेवायं, नो सज्जशरः कुसुमास्त्रोऽपि ।
मा त्रासमुपाश्रय[1] धीरास्त्वं[2], भावी क्षणतः प्रणतः[3] सोऽपि ॥ ६५.१ ॥

## ग्युपचित्रा ॥ ६६ ॥

अजमुखश्रीर्गन्तो नवमे गुरावुपचित्रा । अस्यां तृतीये चे[4] द्वौ विकल्पौ SS; S||; अन्ये चगणविकल्पाः प्राग्वत् । अन्योऽन्यताडनायां प्रतिपादमष्टाचत्वारिंशद्भेदाः । प्राग्वदन्योऽन्यताडनायां[5] त्रिपञ्चाशल्लक्षाः चतुरशीतिः शतानि षोडशोत्तराणि । यथा–

[2]शङ्खक्षोदरुचा तव कीर्त्या, लोकानां च त्वय्यनुरागैः ।
कृष्णैश्चापयशोभिर्द्विपतां, दिशि दिशि जाता भूरुपचित्रा ॥ ६६.१ ॥

## लौ पञ्चमाष्टमौ विश्लोकः ॥ ६७ ॥

यस्य पादे पञ्चमाष्टमौ लघू भवतः स विश्लोकः । अत्राद्ये चे चत्वारो विकल्पाः SS; ||S; S||; ||||; द्वितीये द्वौ |S|; ||||; तृतीये द्वौ SS; S||; गुरुमध्य-गुर्वन्त-सर्वलघु-गणत्रयं तु [3]चित्रयापोदितम् । चतुर्थे[6] गुर्वन्तं गणद्वयमेव SS; ||S; अन्योऽन्यताडनायां प्रतिपादं द्वात्रिंशद्भेदाः । प्राग्वदन्योऽन्यताडनायां दश लक्षा अष्टाचत्वारिंशतसहस्राः पञ्च शतानि षट्सप्तत्यधिकानि । यथा–

[4]यस्य न कुलमपि यो विश्लोकः, स्फुरति च मनसि न यस्य विवेकः ।
येन न गुणविषये निहिता धीः, जीवन्नपि स पुमानवसन्नः ॥ ६७.१ ॥

## नवमश्च चित्रा ॥ ६८ ॥

नवमो लघुश्चकारात् पञ्चमाष्टमौ च यत्र भवतः सा चित्रा । आद्ये चे विकल्पाश्चत्वारः SS; ||S; S||; ||||; द्वितीये द्वौ |S|; ||||; तृतीये त्रयः ||S; |S|; ||||; चतुर्थे द्वौ SS; ||S; अन्योऽन्यताडनायां प्रतिपादमष्टाचत्वारिंशद्भेदाः । प्राग्वदन्योऽन्यताडनायामुपचित्रातुल्या संख्या । यथा–

[5]नित्यं प्रतिगृहमपि विस्फूर्जद्-[7], विद्रुममरकतकनकमयूखैः ।
चित्रा नृप तव पुरि भवति द्यौः, प्रकटितवहुविधसुरधन्वेव ॥ ६८.१ ॥

## द्वादशश्च वानवासिका ॥ ६९ ॥

द्वादशश्चकारान्नवमश्च यत्र लघुर्भवति सा वानवासिका । अत्राद्ये चे चत्वारः SS;

1) अद्यापि मधुरित्यत्र सज्ज इति–पुष्पाभावात् । ऋतोस्तिस्रोऽवस्था वर्ण्यन्ते । शैशवं प्रौढिरनुवृत्तिश्चेति । आत्मीयभावी भर्ता स्मरः । 2) शङ्खक्षोदरुचेत्यत्र उपचित्रेति–परस्परमुभयोः संयोगे उपचित्रता । चित्रमपि एकत्र कृष्णं श्वेतं च स्यात् । 3) चित्रयापोदितमित्यत्र चित्रायां हि नवमेन लघुनैव भवितव्यम् । 4) यस्य नेति–पुरुषस्येत्यध्याहारः । विश्लोकः कीर्तिरहितः । अवसन्नो मृतः । 5) नित्यं प्रतिगृहेत्यत्र चित्रा द्यौः द्युत् । पक्षे आकाशं प्रकटितवहुविधेन्द्रधनुः ।

१ उपश्रय B, अपाश्रय CDE, २ धीरा स्म C ३ प्रयत N ४ चे dropped in A ५ ताडने F. ६ तुर्ये गान्तं F ७ प्रतिगृहविस्फूमपिर्ज० A

विश्लोकचित्रयोश्च प्रत्येकं द्वाविति षड् भेदाः। एवं त्रिंशत्। चतुष्कसंयोगे एकैकपरिहारेण पञ्च। सर्वे मिलिताः पञ्चषष्टिः।

द्विजातिजा विकल्पाः स्युः, त्रिंशत्; त्रिंशत् त्रिजातिजाः[१]।
चतुर्जातिभवाः पञ्च, पञ्चषष्टिरितीरिताः ॥ ७०.१ ॥

इति संग्रहश्लोकः। एषां च पञ्चषष्टेर्भेदानां मध्यात् मात्रासमकस्य त्रयः पादाः, एकः उपचित्रायाः इत्येवंरूपस्य प्रथमभेदस्य संख्या यथा मात्रासमकपादत्रयभेदानां तिसृणां चतुर्विंशतीनां उपचित्रैकपाद[२]भेदानां चाष्टाचत्वारिंशतोऽन्योऽन्याभ्यासे जाताः षड् लक्षाः त्रिषष्टिः सहस्राणि पञ्च शतानि द्विपञ्चाशदधिकानि।

प्रथम[३]भेदस्य च [2]लोष्टसंचारक्रमेण चातुर्विध्यम्। स्थापना — ततश्चतुर्भिर्गुणने जाताः षड्विंशतिर्लक्षाः चतुःपञ्चाशत्सहस्राः द्वे शते अष्टोत्तरे। एवं द्वितीयादिभेदेष्वप्यूह्यम्।

| | | | |
|---|---|---|---|
| मा | मा | मा | उ |
| मा | मा | उ | मा |
| मा | उ | मा | मा |
| उ | मा | मा | मा |

तत्र मात्रासम[४]कस्य त्रिभिः पादैरुपचित्रायाश्चैकेन पादाकुलकं यथा —

[3]शशधरपादाकुलके गगने, कोकिलनादैर्मुखरे च वने।
मदने च जगज्जयनैकाग्रे, पान्थ कथं गन्ता तदिहाग्रे ॥ ७०.२ ॥

मात्रासम[५]कस्य पादद्वयेन उपचित्रायाः एकेन विश्लोकस्य चैकेन यथा —

[4]जयिनि दिगन्ताद् भवति प्राप्ते, पौरस्त्रैणं त्वरितं नृपते।
विचरति सद्यः पादाकुलकं, मलयानिल इव [5]भृङ्गीकुलकम् ॥ ७०.३ ॥

[6]मात्रासमकोपचित्राचित्रावानवासिकापादैर्यथा —

[7]वन्दितपादाकुलकैर्युसदाम्, अनुपममहिमश्रीधाम सदा।
सा वो वितरतु शिवमाकल्पम्, भारत्यनु[६]दिनमसममनल्पम् ॥ ७०.४ ॥

भाषान्तरेष्वपि यथा —

[8]चंदुज्जोओ चंदणलेवो[७], कुवलयसेज्जा कमलुक्खेवो[७]।
दाहिणमारुअओ कप्पूरं, अहिअं विरहे डहइ सरीरं ॥ ७०.५ ॥

---

1) द्विजातिजेत्यत्र द्विकसंयोगभवेति भावः। 2) लोष्टसचारक्रमेणेति–पूर्वं तावत् पादत्रयं मात्रासमकस्य पश्चादुपचित्रायाः एक. पादः। अनया रीत्या ज्ञेयम्। 3) शशधरेत्यत्र पादैः किरणैराकुलम्। स्वार्थे के पादाकुलकं तस्मिन्। 4) जयतीत्यत्र पादेति – क्रियाविशेषणम्। (पादैराकुलकं पादाकुलकं P)। 5) भ्रमरीवृन्दम्। 6) मात्रासेति–प्रत्येकं पादो योज्यः। 7) वन्दितपादेत्यत्र आकल्पं युगान्तं यावत्। 8) चंदुज्जोउत्ति–चन्द्रोद्द्योत. चन्दनलेप. कुमुदशिप्पो(शय्या) कमलतालवृन्तं दक्षिणवायुः सिताभ्रोऽधिकं दहति शरीरम्।

---

१ त्रिजातिका B २ पाद dropped in B, ३ आद्यभेदस्य F. ४ गणने B ५ मात्रासमस्य A ६ अविकलं for अनुदिनं A(V L) BFP ७ लेओ खेओ B.

एवमन्यदप्युदाहार्यम् । अथवा एभिरिति वैतालीयादिभिः पादाकुलकम् । अयमर्थः—एकः[1] पादो वैतालीयस्य, अपरः औपच्छन्दसकादेर्[2]मात्रासमकादेर्वा । यद्वा एकः औपच्छन्दसकादेः, अपरो मात्रासमकादेः । यद्वा एको मात्रास[3]मकस्य, अपरः उपचित्रादेः पादः इत्यादि । तद[4]ापि पादाकुलकम् ॥ ७०.५ ॥

**चो गीर्नटचरणं जैः ॥ ७१ ॥**

चगणो गुरुचतुष्टयं च । जैरित्यष्टभिर्मात्राभिर्यतिः । यथा—

कर्मविशेषाद् दिव्यो, मर्त्यस्तिर्यङ्नृपः ।
इह भव[5]नाख्ये जन्तुर्, नटचरणं ही धत्ते ॥ ७१.१ ॥

इह चः प[6]ञ्चविकल्पो गीस्त्वेकविकल्पः इत्यन्योऽन्याघाते पञ्चैव प्रतिपादम् । तेषामन्योऽन्यताडनायां षट् शतानि पञ्चविंशत्यधिकानि ॥ ७१.१ ॥

**चौ गौ चो गौ नृत्तगतिष्ठैः ॥ ७२ ॥**

द्वौ चतुर्मात्रौ गुरु[7]द्वयं चतुर्मात्रो गुरुद्वयं च । ठैरिति द्वादशभिर्यतिः । यथा—

अधुना ध्वनति गभीरं मेघमृदङ्गे, च[8]ण्ड्यां तडिति पुरस्ताच्चित्रपदायाम् ।
इह किमपि नीलकण्ठः प्रमुदितचित्तो, गीतगति तनुतेऽसौ नृ[9]त्तगतिं च ॥ ७२.१ ॥

अत्र प्र[10]थमे चगणे पञ्च भेदाः । द्वितीयेऽपि । तृतीये एकः[11] । चतुर्थे पञ्च । पञ्चमे एकः । अन्योऽन्यघाते पञ्चविंशत्यधिकं शतं प्रतिपादं भावादन्योऽन्यताडनायां चतुर्विंशतिः कोट्यः एकचत्वारिंशल्लक्षाः चत्वारिंशत्सहस्राः षट् शतानि पञ्चविंशत्यधिकानि ॥७२.१॥

**चीर्नौजे जो जो लीर्वान्तेऽनुप्रासे पद्धतिः ॥ ७३ ॥**

चगणचतुष्टयं पादान्तेऽनुप्रासे सति पद्धतिः । पद्ध[12]टिकेत्यन्ये । अस्यापवादः । नात्र विषमे जगणः पादान्ते च जगणो लघुचतुष्टयं वा । यथा—

छत्रायमाणधरणोरगेन्द्र, पार्श्वजिनेन्द्र स्मरमृगमृगेन्द्र ।
दर्शय दीर्णदुरिततिमिरनिकर, सत्पद्धतिमास्यजितरजनिकर ॥ ७३.१ ॥

यथा वा धनपालस्य—

1)नतसुरकिरीटसंघृष्टचरण, जय भवगतिभीतजनैकशरण ।
चपलाक्षशकुनिसंयमनपाश, जय विदितजगत्स्थितिसर्गनाश ॥ ७३.२ ॥

अपभ्रंशे चास्या भूयसा प्रयोगः । यथा—

2)उन्निद्दकमलदलदीहरच्छु, कंचणकवाडदढविअडवच्छु ।
सुरवइकरिंदकरसरलबाहु, 3)एक्कंगिणँ[13] अरिबलु धरइ[14] नाहु ॥ ७३.३ ॥

1) नतसुरेत्यत्र चञ्चलेन्द्रियपक्षियन्त्रणपाशेति । 2) उन्निद्देत्ति—उत्फुल्लपङ्कजदलदीर्घाक्षः स्वर्णकपाटदृढविपुलवक्षाः ऐरावणशुण्डावत् प्रलम्बबाहुः । 3) एकाङ्गेन एकक इत्यर्थः । वैरिसैन्यं धरति नाथः ।

१ एकपादो N २ मात्रासमादे BDNP ३ मात्रासमस्य BDNP ४ तदपि B ५ भगवनाख्ये A ६ पञ्चधा F ७ गुरुद्वयं चतुर्मात्रो dropped in N ८ चन्द्र्यां N. ९ नृत्यगतिं A १० प्रथमचगणे P ११ एकभेदः A १२ पद्धडिके० A १३ उक्कंगिण A. १४ धरइ K

इत्यादि । अत्राद्ये चे चत्वारो विकल्पाः । द्वितीये पञ्च । तृतीये चत्वारः । चतुर्थे द्वौ । अन्योऽन्यघाते षष्ट्यधिकं शतम् । प्रतिपादं तेषां भावादन्योऽन्यताडनायां पञ्चषष्टिः[1] कोट्यः त्रिपञ्चाशल्लक्षाः षष्टिः सहस्राणि भवन्ति ॥ ७३.३ ॥

**मात्रासमकादिप्रकरणं[1)] नवभिः ॥**

*

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ
अर्धसम-विषम-वैतालीय-मात्रासमकादिव्यावर्णनो
तृतीयोऽध्यायः ॥ ३ ॥
ग्रन्थाग्रं ३८८; उभयं १५४६ ।

*  *
*

1) प्रकरणं नवभिरिति मात्रासम १ उपचित्रा २ विश्लोक ३ चित्रा ४ वानवासिका ५ पादाकुलकं ६ नटचरणं ७ नृत्तगति ८ पद्धति ९ इति नव ॥ इति तृतीयाध्यायपर्यायाः ।

१ पञ्चषष्टिकोट्य P

# अथ चतुर्थोऽध्यायः ।

1)चृगौ षष्ठो जो न्लौ वा पूर्वे[१]ऽर्धेऽपरे षष्ठो ल[२]ार्या गाथा ॥ १ ॥

नौजे जः इति वर्तते । चृगौ चगणसप्तकं गुरुश्चार्धे यस्याः सा आर्या । अत्रापवादः । पूर्वेऽर्धे षष्ठो जगणो न्लौ वा । अपरेऽर्धे[३] षष्ठो गणो लघुः कार्यः । अर्धग्रहणादार्यादिषु पादव्यवस्था नास्ति । 2)तेन 'द्वीपादन्यस्मादपि' इत्यादौ गणत्रयस्य [८]3)अन्ते [४]लघोर्गुरुत्वं न भवति । आर्यैव संस्कृतेतरभाषासु गाथासंज्ञेति गाथाग्रहणम् । अत्र पूर्वार्धे 4)प्रथमे चे विकल्पाश्चत्वारः । यथा – ऽ ऽ; ।। ऽ; ऽ ।।; ।।।।; द्वितीये पञ्च ऽ ऽ; ।। ऽ; । ऽ ।; ऽ ।।; ।।।।; तृतीये चत्वारः ऽ ऽ; ।। ऽ; ऽ ।।; ।।।।; चतुर्थे पञ्च ऽ ऽ; ।। ऽ; । ऽ ।; ऽ ।।; ।।।।; पञ्चमे चत्वारः ऽ ऽ; ।। ऽ; ऽ ।।; ।।।।; षष्ठे द्वौ । ऽ ।; ।।।।; सप्तमे चत्वारः ऽ ऽ; ।। ऽ; ऽ ।।; ।।।।; अष्टमे गुरुरेक एव । अन्योऽन्यताडनायां द्वादशसहस्राण्यष्टौ शतानि । एवमपरार्धेऽपि । नवरं षष्ठे लघुन्येकस्मिन्नेक एव विकल्पः । अन्योऽन्यताडनायां षट् सहस्राणि चत्वारि शतानि । उभयदलविकल्पताडनायां अष्टौ[५] कोटयः एकोनविंशतिर्लक्षाः विंशतिः[६] सहस्राणि । यदाह –

जगणविहीना विषमे चत्वारः पञ्च युजि चतुर्मात्राः ।
द्वौ षष्ठाविति चगणास्तद्घातात्[७] प्रथमदलसंख्या ॥ १.१ ॥
एवमपरार्धसंख्या षष्ठे स्याल्लघुनि चैकस्मिन् ।
आर्यासंख्योभयदलसंख्याघाताद् विनिर्दिष्टा ॥ १.२ ॥

आर्या यथा –

5)उपदिश्यते तव हितं यदि वाञ्छसि कुशलमात्मनो नित्यम् ।
मा जातु दुर्जनजनेष्वार्याचरितं प्रपद्यस्व ॥ १.३ ॥

प्राकृते यथा –

6)कलसभवतवस्सिचुलुअपूरणमेत्ते वि मुणिअमज्झाण ।
जलहीण कहं सरिसा सया अगाहा महप्पाणो ॥ १.४ ॥

---

अथ चतुर्थाध्यायस्य पर्यायाः प्रादुःक्रियन्ते । 1) चृगौ षष्ठो ज इत्यत्र चृगौ पूर्वार्धे पश्चार्धे च भवतः । परं परार्धे षष्ठचतुर्मात्रिकस्थाने एक एव लघुवर्णः कार्यः । एतावता मात्रात्रयं हीयते अपरार्धे । चृ इति–सप्तमः स्वरः । 2) तेन द्वीपेत्यत्र द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् । आनीय झटिति घटयति विधिरभिमतमभिमुखीभूत. । अन्तात् प्रान्तात् । झटिति शीघ्रम् । अभिमतं इष्टं संमुखः सन् । 3) अन्ते गुरुत्व नेति–वान्ते ग्वक्र इति सूत्रोक्तम् । 4) प्रथमे चे विकल्पाश्चत्वार इति–नौजे जः इति सूत्रांशेन जगणस्य निषिद्धत्वात् । 5) उपदिश्येत्यत्र आर्याणां सरलानां आचरितम् । 'शठस्तु हठकर्मणा लुठति पादपीठे परम्' इति वचनात् । 6) कलसभवेत्यत्र महात्मनां समुद्रोपमानं न घटते यथा कुम्भजन्मतपस्विचुलुकमानमात्रेऽपि ज्ञातमध्याना जलधीनां कथं सदृशा सदा अगाधा अप्राप्तपारा महात्मान. ।

---

१ पूर्वार्धे परे H, पूर्वेऽर्धे परे BN, पूर्वेऽर्धे अपरेऽर्धे A, पूर्वेऽर्धे अपरे P २ आर्या N. ३ परेऽर्धे N. ४ लघो dropped in P. ५ अष्टा N ६ विंशतिसह० N. ७ तज्जाता ABCN ८ मित्ते EF.

पैशाचिके यथा—

[1]पनमध पनयपकुप्पितगोलीचलनग्गलग्गपतिविंवं ।
तससु नखतप्पनेसुं एकातसतनुधलं लुद्दं ॥ १.५ ॥

एवमन्यभाषास्वप्युदाहार्यम् ॥ १.५ ॥

आर्याया वक्तव्यान्तरमाह—

**षष्ठे न्ले लाद् द्वितीयात्सप्तमे त्वाद्यात्पदमन्यार्धे च पञ्चमे ॥ २ ॥**

पूर्वार्धे षष्ठे गणे न्ले सति द्वितीयाल्लादारभ्य पदं भवति । षष्ठन्लगणस्य प्रथमे ले यतिरित्यर्थः । तथा सप्तमे न्ले आद्याल्लादारभ्य पदं भवति । षष्ठगणान्ते यतिरित्यर्थः । अन्यार्धे द्वितीयेऽर्धे पञ्चमे न्ले सत्याद्याल्लात्पदम् । चतुर्थगणान्ते यतिरित्यर्थः । यथा—

[2]चतुरम्बुराशिमुद्रितभूभारोद्धारचतुरभुजपरिघः ।
एकाङ्गवीरतिलकः श्रीमानिह जयति सिद्धेशः ॥ २.१ ॥

आर्याया विशेषानाह—

**आद्यचियतिः पथ्या ॥ ३ ॥**

यस्या द्वयोरप्यर्धयोराद्यचगणत्रये यतिर्भवति सा पथ्या । यथा—

[3]नेपथ्यानि निरस्यति संत्रस्यति मत्तकोकिलानादात् ।
निन्दति चेन्दुमयूखांस्त्वद्विरहे नः सखी सुभगा ॥ ३.१ ॥

**विपुलान्याद्यन्तसर्वभेदात् त्रेधा ॥ ४ ॥**

अन्या द्वयोरर्धयोराद्यचियतिरहिता विपुला । सा चाद्यन्तसर्वभेदात् त्रेधा । पूर्वार्धे चगणत्रययतिरहिता आदिविपुला । मुखविपुलेत्यर्थः । अपरार्धे अन्तविपुला । जघनविपुलेत्यर्थः । द्वयोरप्यर्धयोः सर्वविपुला । महाविपुलेत्यर्थः । यथा—

[4]मुखविपुलाः पर्यन्ते च लघीयांसो भवन्ति नीचानाम् ।
वर्षासु ग्रामपयःप्रवाहवेगा इव स्नेहाः ॥ ४.१ ॥

[5]नाभीनिम्ना कुचतटतुङ्गा जघनविपुलाथ मध्यकृशा ।
भ्रूकुटिलाशयसरला च मानसं हरति सा बाला ॥ ४.२ ॥

1) पनमधेत्यत्र प्रणमत प्रणयप्रकुपितगौरीचरणाग्रलग्नप्रतिबिम्बं दशसु नखदर्पणेषु एकादशतनुधरं रुद्रम् । 2) चतुरम्बुधे(र)ति [अत्र] मुद्रित॰ सहित॰ । पृथ्वीभारोद्धरणदक्षभुजार्गलः सिद्धेश॰ सिद्धराजः । 3) नेपथ्यानीति—कस्याश्चित् सख्यस्तद्रमणं प्रति कथयन्ति । निरस्यति निराकरोति । संत्रस्यति त्रास भजति । चन्द्रकिरणान् । नोऽस्माकं सखी । 4) मुखविपुलाः पर्यन्ते चेत्यत्र नीचानां स्नेहा भवन्ति । क इव वर्षाकाले ग्रामजलप्रवाहवेगा इव । बहिःक्षेत्रेषु प्रवेशनात् । कथंभूता॰ । आदौ वृद्धाः प्रान्ते लघवः । 5) नाभीनिम्नेत्यत्र नाभौ निम्ना स्तनभागे उन्नता नितम्बे विशाला कटौ कृशा दुर्बला । भ्रूकुटिं लातीति भ्रूकुटिला भ्रुवो वक्रेति वा ।

१ The word is dropped in A २ पनयकुप्पत C ३ चलणग्ग BE ४ तप्पतेसुं B. ५ चाद्यात् N ६ आद्ये ले F. ७ मयूपान् B ८ त्रिधा N. ९ अन्त्यविपुला C. १० मुखविपुला AN.

[1]शस्त्राभ्यासे रतिवल्लभस्य मन्ये खल्लूरिका रम्या ।
तव कमलदलाक्षि नितम्बभूमिरेषा महाविपुला ॥ ४.३ ॥

**गमध्ये द्वितीयतुर्यौ जौ चपला ॥ ५ ॥**

गुर्वोर्मध्ये द्वितीयतुर्यौ जगणौ यस्यां सा चपला । सा चाद्यन्तसर्वभेदात् त्रेधा । तत्र पूर्वार्धे आदिचपला मुखचपलेत्यर्थः । अपरार्धे अन्तचपला जघनचपलेत्यर्थः । द्वयोरप्यर्धयोः सर्वचपला महाचपला[1]लेत्यर्थः । तत्र पूर्वार्धे [2]प्रथमे चे द्वौ विकल्पौ-SS; ||S; द्वितीये एकः |S|; [3]तृतीयेऽप्येकः SS; चतुर्थे[2]ऽप्येकः |S|; [4]पञ्चमे द्वौ SS; S||; [5]षष्ठेऽपि[3] द्वौ |S|; ||||; [6]सप्तमे चत्वारः SS; ||S; S||; ||||; अष्टमे गुरुरेव । अन्योऽन्यताडनायां द्वात्रिंशत् । अपरार्धे[4] षष्ठस्य लघोरेकत्वात् षोडशैव । उभयार्ध[5]ताडनायां पञ्चशतानि द्वादशोत्तराणि सर्वचपलाविकल्पाः । मुखचपलायां पूर्वार्धविकल्पैर्द्वात्रिंशता अपरार्ध[6]चतुःषष्टिशतविकल्पानां ताँडने[7] द्वे लक्षे अष्टाचत्वारिंशच्छतानि । जघनचपलायां चापरार्धविकल्पैः षोडशभिः पूर्वार्धविकल्पानामष्टशताधिकद्वादशसहस्रसंख्यानां ताडने तावन्त एव विकल्पाः । तत्र पथ्यापूर्विका मुखचपला यथा—

[7]एकोऽपि बालचूतः शिखोद्गमैरभिनवैर्मनो दहति ।
एतत्पुनरधिकं सखि कलकण्ठी तत्र मुखचपला ॥ ५.१ ॥

आदिविपुलापूर्विका मुखचपला यथा—

[8]मृदु वाच्य एष नैणाक्षि वल्लभस्ते शठोऽन्यविवशमनाः ।
तर्जय परुषैर्वचनैर्मुखचपलानामयं विषयः ॥ ५.२ ॥

अन्तविपुला[8]पूर्विका मुखचपला यथा—

[9]दयितस्तवानुनीतो मया सखि त्वां किलानुनेष्यति सः ।
तं पादानतमालोक्य मा कटु ब्रूहि मुखचपले ॥ ५.३ ॥

एवं सर्वविपुलापूर्विकायां मुखचपलायामुदाहार्यम् । पथ्यापूर्विका जघनचपला यथा—

---

1) शस्त्राभ्यास इत्यत्र खल्लूरिका श्रमयोग्या भूः । 2) प्रथमे चे द्वौ विकल्पाविति—यतो द्वितीयो जगणो गुरुद्वयमध्ये भवति गुर्वन्तौ च एतौ स्तः । जगणस्य तु ओजस्थानत्वान्निषेध. । 3) तृतीयेऽप्येक इत्यत्र ओजस्थानत्वात् जगणस्य निषेधः शेषाणा चतुर्णां गणानां मध्ये द्वयोर्गणयोरादौ लघु [ एकस्य चान्ते लघुः ] तत एक एव सर्वगुरुरूपो अवशिष्यते । 4) पञ्चमे द्वाविति—अत्राप्योजस्थानत्वाज्जगणस्य निषेधः । द्वयोस्त्वादौ लघुः स्यात् ततो गणत्रयवर्जनम् । 5) षष्टे द्वौ इति—षष्टे स्थाने जन्लयोरेवानुज्ञातत्वात् । 6) सप्तमे चत्वार इति—ओजस्थानत्वात् जगणो न । 7) एकोऽपि बालेत्यत्र कलकण्ठी कोकिला । मुखे वाचाला । 8) मृदु वाच्य एष इत्यत्र मृदु क्रियाविशेषणम् । अन्यासु विवशं परवश मनो यस्येति स । या मुखे चपला वाचाला भवन्ति तासां गोचरः । 9) दयितस्तवेत्यत्र अनुनयं प्रापित. त्वा(त्वां) मानयिष्यति हे आस्यवाचाले ।

---

१ महाचपला dropped in A. २ dropped in C. ३ अपि dropped in KP ४ अपरार्द्ध N; अपरार्धेऽपि A ५ उभयार्द्ध N ६ अपरार्धे P. ७ ताडनाया A ८ अन्तविपुला यथा A.

[1]तस्या नितान्तचपलान् नेत्रविलासान् विलोक्य बालायाः ।
को वर्णयेदमुग्धः कुरङ्गिकादृष्टिललितानि ॥ ५.४ ॥

अन्तविपुलापूर्विका जघनचपला यथा –

[2]उद्दाममारुतहतध्वजघनचपलानि जीवितव्यानि ।
जानन् जनः कथं नाम जातुचित् प्रीयते तत्र ॥ ५.५ ॥

महाविपुलापूर्विका जघनचपला यथा –

कस्य कृते कृतपुण्यस्य दृष्टिरियमनिमि[1]षा त्वया ध्रियते ।
यासीत्पुरा कुरङ्गाक्षि नित्यमत्यन्तचपलैव ॥ ५.६ ॥

एवं मुखविपुलापूर्विका जघनचपलोदाहार्या । पथ्यापूर्विका महाचपला यथा –

[3]चपलं न कस्य चेतो नरस्य जायेत पश्यतस्तन्वीम् ।
नृत्ये[2]क्षणेऽत्र नव्याङ्गहा[3]रलीलामहाचपलाम् ॥ ५.७ ॥

महाविपुलापूर्विका महाचपला यथा –

[4]युगपत्प्रफुल्लकङ्केल्लिमल्लि[4]कावकुलचम्पकान् दृष्ट्वा ।
जाता मधूत्सवे षट्पदावलीयं महाचपला ॥ ५.८ ॥

एवं मुखविपुलापूर्विका जघनविपुलापूर्विका च महाचपलोदाहार्या । [5]एवं गाथाप्युदाहार्या । एवं पथ्याभेदेनैकेन [6]विपुलाभेदैस्त्रिभिश्चपलाभेदैर्द्वादशभिः[7] षोडश भेदाः । [8]केचित्तु लघुत्रयादारभ्य द्विद्विलघुवृध्या कमलादीन् षड्विंशतिभेदानाहुः । यथा –

कमला ललिआ सीला[5] जुण्हा[6] रंभा य मागही लच्छी ।
विज्जा माला हंसी ससिलेहा जण्हवी[7] सुद्धा ॥ ५.९ ॥
काली कमली[8] मेहा सिद्धी रिद्धी अ कुम्मई धरणी[9] ।
जक्खी वीणा वंभी गंधव्वी मंजरी गोरी ॥ ५ १० ॥
कमला तिहि लहुएहिं ललिआ पंचेहिं एवमाईओ ।
विहिं विहिं वड्ढंतेहिं कमेण सेसाओ जाअंत्ति ॥ ५.११ ॥

एतच्च गाथाप्रस्तारेष्वन्तर्भूतमिति न पृथग्लक्ष्यते । न च सर्वे प्रस्तारभेदाः शक्या उपदर्शयितुमित्यास्तामेतत् ॥ ५.११ ॥

1) तस्या नितान्तेत्यत्र अमुग्धो दक्षः । ललितानि क्रीडितानि । 2) उद्दाममारुतेत्यत्र प्रचण्डवात्याहतपताकामेघचञ्चलानि । नाम कोमलामन्त्रणे । कदाचित् प्रीणाति संसारे । 3) चपलं न कस्येत्यत्र तन्वीं कान्ताम् । नाट्यावसरे नवीनाङ्गविक्षेपमहाचञ्चलाम् । 4) युगपत् प्रेति – मधूत्सवे वसन्तावसरे । 5) एवं गाथेति–प्राकृतादिजा । 6) विपुलाभेदैस्त्रिभिरिति – मुखविपुला-जघनविपुला-सर्वविपुला-भेदैः । 7) द्वादशभिरिति – यतो मुखचपला-जघनचपला – सर्वचपला – रूपेषु त्रिष्वपि भेदेषु प्रत्येकं पथ्या-मुखविपुला-जघनविपुला – सर्वविपुला – रूपाश्चत्वारो भेदा लभ्यन्ते ततो भवन्ति द्वादश । 8) केचित्तु लघुत्रयादिति – आर्याणां हि लघुत्रयेणावश्यं भाव्यम् । काली कुमा(म)रीत्यत्र कुमा(म)रीस्थाने कमली प्रत्यन्तरे ।

१ अनिमिषात् N. २ नृत्यत्क्षणेत्र N. ३ नव्याङ्गलहार A ४ मल्लिका व० N ५ लीला A. ६ जुन्हा F. ७ जन्हवी F. ८ कुमरी AFKP. ९ धरिणी P.

**द्विः पूर्वार्धे गीतिः ॥ ६ ॥**

द्वौ वारौ पूर्वार्धलक्षणं यस्यामार्यायां सा गीतिः । सा चैकः पथ्यायास्त्रयो विपुलाया द्वादश चपलाया विकल्पा इति षोडशधा । अत्र पूर्वार्धे द्वादश सहस्राण्यष्टौ शतानि विकल्पाः । अपरार्धेऽपि तावन्तः । अन्योऽन्यताडनायां षोडश कोट्यः अष्टात्रिंशल्लक्षाः चत्वारिंशत्सहस्राः विकल्पाः पथ्यागीतौ भवन्ति । विपुलागीतावपि त एव । सर्वचपलागीतौ पूर्वार्धे द्वात्रिंशद्विकल्पाः । अपरार्धेऽपि तावन्तः । अन्योऽन्यताडनायां चतुर्विंशत्यधिकानि दश शतानि । मुखचपलागीतौ पूर्वार्धे द्वात्रिंशद्विकल्पाः । अपरार्धे[1] द्वादशसहस्राण्यष्टशताधिकानि । अन्योऽन्यताडनायां चतस्रो लक्षाः षण्णवतिः शतानि । जघनचपलायामप्येतावन्त एव । तत्र पथ्यागीतिर्यथा –

1)विरचितकुसुमाभरणा तन्वाना गीतिमलिकुलनिनादैः ।
अभ्यागच्छति चैत्रे वासकसज्जेव संप्रति वनश्रीः ॥ ६.१ ॥

महाविपुलगीतिर्यथा –

2)मत्तद्विरेफपुंस्कोकिलै[2]र्वैतालिकमहाविपुलगीत्या ।
क्रियते निर्भरमुन्निद्र एष यूनां मनःसु मनसिशयः ॥ ६.२ ॥

पथ्यामहाचपलागीतिर्यथा –

3)यावल्लुनामि चूताङ्कुरान्पुरोऽस्या मधुं व्यपहोतुम् ।
तावद्बभूव गीतिः पिकाङ्गनानां प्रमोदचपलानाम् ॥ ६.३ ॥

महाविपुलमहाचपलागीतिर्यथा –

कष्टं[3] जनस्त्वदालोकनादपि क्षणमिमां दशां लभते ।
विपुलां तनोषि दीर्घाक्षि गीतिमेतां कुतो महाचपले ॥ ६.४ ॥

एवं शेषभेदेषु द्वादशस्वप्युदाहार्यम् ॥ ६.४ ॥

**परार्धमुपगीतिः ॥ ७ ॥**

द्विः परार्धलक्षणं यत्र भवति सा आर्योपगीतिः[4] । इयमपि पूर्ववत् षोडशभेदा[5] । तत्र पथ्योपगीतौ पूर्वार्धे चतुःषष्टिशतानि विकल्पाः । अपरार्धेऽपि तावन्तः । अन्योऽन्यताडनायां चतस्रः कोट्यो नव लक्षाः षष्टिः सहस्राणि । विपुलोपगीतावपि तावन्त[6] एव ।

1) विरचितेत्यत्र भर्तरि समागते आत्मानं अलंकरोति । (see p. 103 n. 2). 2) मत्तद्विरेफेत्यत्र पुरुषवत् प्रगल्भवचाः कोकिलः पुंस्कोकिल उच्यते । 3) यावल्लुनामीत्यत्र काचिद्विरहिणी वसन्तागमे वसन्तं विनाशयितुं [ प्रवृत्ता आह ]–वसन्ते कन्दर्पसद्भाव इति हेतोः कन्दर्पशस्त्रहेतून् चूताङ्कुरान् हे सखि यावल्लुनामि तावत्कोकिलानां ध्वनिः प्रादुर्भूतः । किं करोमि इति भावः । यद्वा चूताङ्कुरा हि मधोरवतारे भवन्ति ततश्च यदि छिनद्मि तदेषा विरहिणी वसन्तागमं न जानातीति भावः ।

१ अपरार्धे तु P. २ पुष्कोकिल P ३ काष्टा जनः A; कष्टाज्जन॰ N. ४ उपगीति N. ५ षोडशभेदाः N. ६ त एव B.

महाचपलोपगीतौ पूर्वार्धे षोडश। अपरार्धेऽपि तावन्तः। अन्योऽन्यताडनायां षट्पञ्चाशदधिके द्वे शते। मुखचपलोपगीतौ पूर्वार्धे षोडश विकल्पाः। अपरार्धे चतुःषष्टिः[१] शतानि। अन्योऽन्यताडनायां लक्षमेकं चतुर्विंशतिः[२] शतानि। जघनचपलोपगीतावपि तावन्त एव। तत्र पथ्योपगीतिर्यथा–

[1]उपगीति कुरङ्गशिशो मा गाः श्रुतिसुखलवस्पृहया।
व्याधं किमिति न पश्यसि चापन्यस्तेषुमिह पुरतः॥ ७.१॥

महाविपुलोपगीतिर्यथा–

[2]संप्रति शिलीमुखाः पश्य महाविपुलोपगीतिरवैः।
सौखप्रसुप्तिकाः[३] पङ्कजिनीः प्रीत्योपतिष्ठन्ते॥ ७.२॥

पथ्यामहाचपलोपगीतिर्यथा–

[3]उपगीतिगन्धरूपादि याति चेतो महाचपलम्।
तेभ्यो निवर्तयैतत् समीहसे चेत् परां सिद्धिम्॥ ७.३॥

महाविपुलामहा[४]चपलोपगीतिर्यथा–

[4]चूताङ्कुराः स्मरास्त्राणि चापलात्कोकिलैर्लीढाः।
विपुलोपगीतयोऽस्त्राणि तेनिरे तेन तैस्तस्य॥ ७.४॥

एवं शेषभेदेषु द्वादशस्वप्युदाहार्यम्॥ ७.४॥

द्वयोर्व्यत्यये उद्गीतिः॥ ८॥

आर्यायाः द्वयोः पूर्वार्धपरार्धयोर्विपर्यये उद्गीतिः। इयमपि पूर्ववत् षोडशधा पथ्यावच्च तदुद्गीतिषु विकल्पा वाच्याः। तत्र पथ्योद्गीतिर्यथा–

वीरवरेण्य रणमुखे श्रुत्वा तव सिंहनादमिह।
सपदि भवन्त्यरिकरिणो मधुव्रतोद्गीतिरिक्तगण्डतटाः॥ ८.१॥

[५]महाविपुलोद्गीतिर्यथा–

[5]विपुलोद्गीतिः कलकोकिलारवैः पल्लवाताम्रा।
मत्तेव पुरस्तरुपङ्क्तिरियं मधुपरिचयादितो भाति॥ ८.२॥

1) उपगीति कुरङ्गेत्यत्र गीतिर्गानं तस्याः समीपं उपगीति। अव्ययीभावसमासः। मा गाः मा गच्छेः। व्याधं लुब्धकं धनुर्न्यस्तबाणम्। 2) संप्रति शिलीत्यादि – शिलीमुखा भ्रमराः। सुखं प्रसुप्तं सुखप्रसुप्तं तद्विद्यते यासां ताः पृच्छती(न्ती)ति भावः। 3) उपगीतिगन्धरूपादीत्यत्र गीत्यादयः पञ्च विषयास्तेषां समीपे। 4) चूताङ्कुरा इत्यत्र आम्राङ्कुरा कन्दर्पबाणाः यद्यास्वादितास्तर्हि तस्यापरे बाणा विलोक्यन्ते इत्याह। तेन कारणेन तैः कोकिलैस्तस्य कन्दर्पस्य अस्त्राणि विपुलोपगीतयः तेनिरे कृता इत्यर्थः। 5) विपुलोद्गीतिरित्यत्र मधुश्चैत्रमासो मद्यं च। इतः पार्श्वे।

१ चतु षष्टिशतानि AP. २ चतुर्विंशतिशतानि ACP. ३ सौखप्रसुप्तिका AB. ४ महा dropped in B. ५ महाविपुलोपगीतिः A.

पथ्यामहाचपलोद्गीतिर्यथा—

[1]चपले प्रयातु मानादयं वराकः किमाह्वयसि ।
प्रतिभूरमुष्य भूयः समागमे भाविनी पिकोद्गीतिः ॥ ८.३ ॥

महाविपुलामहाचपलोद्गीतिर्यथा—

[2]बाला कुतोऽपि सारङ्गिकेव सा विपुलचपलाक्षी ।
श्रुत्वा तवाभिधोद्गीतिमाशु [3]निष्पन्दिनी चिरं भवति ॥ ८.४ ॥

एवं शेषेषु द्वादशसु भेदेष्वप्युदाहार्यम् । तत्रायं संग्रहः—

[4]एकैव भवति पथ्या तिस्रो विपुलास्ततश्चतस्रस्ताः ।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः ॥ ८.५ ॥
गीतीनां त्रयमित्थं प्रत्येकं षोडशप्रकारं स्यात् ।
साकल्येनार्याणामसौ विकल्पाश्चतुःषष्टिः ॥ ८.६ ॥

**गीतिः सप्तमे पे रिपुच्छन्दाः ॥ ९ ॥**

गीतिरेव सप्तमे पे पञ्चमात्रे गणे रिपुच्छन्दाः । अतः परं प्राकृतादौ छन्दसां भूम्ना प्रयोग इति तत्रैवोदाहरिष्यते । यथा—

[5]केलाससेलतुलणामाणं मा वहसु संपयं दसमुह ।
उअ हरिपुच्छंदोलणतोलिज्जंते महोअहिम्मि गिरिणो ॥ ९.१ ॥

अत्र पगणस्याष्टभेदत्वेऽपि 'नौजे जः' इति जगणानुविद्धभेदद्वयवर्जनात् षड् भेदाः । ततस्तेषां शेषगणविकल्पानां चान्योऽन्यताडनायां पूर्वार्धे जाता एकोनविंशतिः सहस्राणि द्वे शते । तावद्भिरेवोत्तरार्धविकल्पैर्घाते जाताः षट्त्रिंशत्कोट्यः षडशीतिर्लक्षाश्चत्वारिंशत्सहस्राणि ॥ ९.१ ॥

**तृतीये ललिता ॥ १० ॥**

गीतिरेव तृतीये पे ललिता । यथा—

[6]अंगुलिआहिं ललिअंगी पवासदिअहे गणंतिआणुदिणम् ।
वल्लहआयड्ढणकए जवइव मंतक्खराइं एक्कमणा ॥ १०.१ ॥

अत्र तृतीयपगणस्य षड्विकल्पत्वे प्राग्वत्तावन्त एव भेदाः ॥ १०.१ ॥

1) चपले प्रयात्वित्यत्र वराकः क्लीबः । एनं व्रजन्तं मा निषेधय । आकारयसि । 2) बाला कुतोऽपीत्यत्र कान्ता हरिणीव भवति । अभिधाया. नाम्न' उद्गीतिः भणनं पक्षे गानम् । 3) निश्चला । 4) एकैव भवतीत्यत्र चतस्र इति—पथ्या १ विपुला ३ । भिन्ना इति प्रत्येकं योज्यम् । 5) कैलाससेलेत्यत्र हे दशमुख कैलासपर्वततोलनात् मानं मा वह साम्प्रतं पश्य हरयो वानरा अथवाञ्जनेयस्तेषां तस्य वा पुच्छान्दोलनेन पर्वताः तोल्यन्ते समुद्रे । 6) अंगुलिआहिंत्ति—वल्लभाकर्षणकृते एकमना इयम् । इवोत्प्रेक्ष्यते । अनुदिनं अङ्गुलिकाभिर्मन्त्राक्षराणि । गणयति(न्ती) वल्लभकथितदिवसगणनव्याजतः । जपतीव ।

१ तवाभिदो॰ N. २ निष्यन्दिनीं N, नि स्पन्दिनी P ३ कैलाससैल N; कैलाससेल KP. ४ घुलणा S. ५ महोअहंमि O. ६ अन्योऽन्यताडने A; अन्योऽन्यहतौ E. ७ अथ प्राय. प्राकृते नृ॰ O ८ आयड्ढणकए ABCE. ९ इक्कमणा E.

**द्वाभ्यां भद्रिका ॥ ११ ॥**

गीतिरेव द्वाभ्यां सप्तमतृतीयपगणाभ्यां भद्रिका। यथा—

[1)]जुवईण नयणलच्छीए सहजसलोणत्तणेण भद्दिआए।
चक्खुभएण[1] व दिण्णयं लक्खिज्जइ कज्जलं वयंसिआहिं ॥ ११.१ ॥

अत्र तृतीयसप्तमपगणयोः षट् षट् भेदास्ततस्तेषामन्यविकल्पानां चान्योऽन्यघाते जाता अष्टाविंशतिः सहस्राणि अष्टौ शतानि पूर्वार्धे। तेषां तावद्भिरेवोत्तरार्धविकल्पैर्घाते जाता द्व्यशीतिः कोट्यश्चतुर्नवतिर्लक्षाश्चत्वारिंशत्सहस्राः ॥ ११.१ ॥

**षष्ठं विनेष्टपैर्विचित्रा ॥ १२ ॥**

गीतिरेव [2)]षष्ठगणं विना यथेष्टं पगणैर्निबद्धा विचित्रा। यथा—

[3)]भासासु विचित्तासु जुगवं सुरनरतिरिआण जीवजाईण[3]।
संवादमणुहवंती जयइ वाणी भयवओ[4] जिणिंदस्स ॥ १२.१ ॥

विचित्रभेदत्वादस्या विकल्पसंख्या नोक्ता। केचित्सर्वैरपि पगणैरिच्छन्ति ॥१२.१॥

**चेऽष्टमे स्कन्धकम् ॥ १३ ॥**

गीतिरेवाष्टमस्य गुरोः स्थाने चगणे कृते स्कन्धकम्। आर्यागीतिरित्यहीन्द्रः। अत्र गीत्यर्धविकल्पानामष्टमचगणविकल्पपञ्चकेन ताडने जाताश्चतुःषष्टिः सहस्राः पूर्वार्धे। तावद्भिरेवोत्तरार्धविकल्पैस्ताडने जातानि चत्वारिंशदर्बुदानि नव कोट्यः षष्टिर्लक्षाणि।

यथा—

[4)]तुह रिउरायपुरेसुं तरुणीजणलालिअम्मि [6]किंकेल्लिवणे।
संपइ अरण्णमहिसाण खंधकंडूअणं पयट्टेइ[7] दढम् ॥ १३.१ ॥

केचित्तु लघुचतुष्टयादारभ्य लघुद्वयद्वयवृद्ध्या ब्रह्मादीनि स्कन्धकान्याहुः। यथा—

बंभो हीरो कण्हो रामो चंदो पुरंदरो मेरू।
धम्मो सेलो भाणू जक्खो वण्ही[8] अ मायंगो ॥ १३.२ ॥
कालो हरी कुवेरो सालो सुवणो सुदंसणो खंदो।
नीरं सिही सुवण्णो मेहो[9] पंको अ कल्हारो ॥ १३.३ ॥

1) जुवईणेत्यत्र नयनलक्ष्म्याः। 'एदौतौ पदान्ते प्राकृते ह्रस्वौ वा' (छं० १ ९) इति ह्रस्वत्वं ज्ञेयम्। सहजसलवणत्वेन प्रशस्याया चक्खुभएण। इवोत्प्रेक्षते—दृष्टिदोषविघाताय वयस्याभिः सखीभिर्दत्तं कज्जलम्। 2) षष्ठगणं विना यथेष्टमिति—यादृशाः पगणाः रोचन्ते तादृशाः क्षेप्याः यत्र तत्र वा। चगणानां मध्ये पुनः षष्ठं चगणं वर्जयित्वा। 3) भासासु विचित्तासुत्ति—भाषासु विचित्रासु युगपत् सुरनरतिरश्चां जीवजातीनां संवदनं संवादस्तं अनुभवन्ती जयति सर्वोत्कृष्टत्वेन प्रवर्त्तते वाणी भगवतो जिनेन्द्रस्य। भा १ वि २ सु ३ पञ्चमात्राः। सु १ ति २ ण ३ चगणाः। ज० पगणः। 4) तुह रिउरायेति—तव रिपुराजपुरेषु तरुणीजनलालिते कंकेल्लिवने। सांप्रतं तत्र वने वनमहिषाणां स्कन्धकण्डूयनं प्रवर्तत इति भावः।

१ चक्खुभएण दिन्नं E. २ प dropped in N ३ जीवजाईणं A. ४ भगवओ E. ५ गीतेरर्वं० P. ६ कंकेल्लिवणे ABEKP, किकिल्लवणे S. ७ पयट्टेइ NS ८ पण्ही N. ९ मोहो S.

हेरंबो मीणो वण्णो लहुभेएहिं सुहय नामाइं ।
एआइं साहिआइं पउणतीसाण खंधाणं ॥ १३.४ ॥
चउलहुएहिं वंभो, हीरो छहिं, अट्ठहिं तहा कण्हो ।
विहिं विहिं वड्ढंतेहिं कमेण सेसाण नामाइं ॥ १३.५ ॥

एतच्च स्कन्धकप्रस्तारेष्वन्तर्भूतमिति न पृथग् लक्ष्यते । एवं भेदपरिकल्पने ह्यतिप्रसङ्गः स्यादिति ॥ १३.५ ॥

[1]तत्षष्ठे ल्युपात् ॥ १४ ॥

तत्स्कन्धकमर्धद्वयेऽपि षष्ठे गणे एकस्मिन्नेव लघौ सति उपात्परं स्कन्धकमुपस्कन्धकमित्यर्थः । यथा –

[2]उअ खंधाहइतुट्टंतवाहुदंडो वि को वि सुहडओ ।
एसो सहि परजोहं पहरइ पाएण दट्ठोहरओ ॥ १४.१ ॥

अत्र षष्ठस्य गणस्य लघुत्वेनैकत्वात्पूर्वार्धे द्वात्रिंशत्सहस्रास्तावद्भिरेवापरार्धविकल्पैस्ताडने जातानि दशार्बुदानि द्वे कोट्यौ चत्वारिंशल्लक्षाः ॥ १४.१ ॥

आद्येऽर्धे उदः ॥ १५ ॥

आद्येऽर्धे षष्ठे लि उदः परं स्कन्धकं उत्स्कन्धकमित्यर्थः । यथा –

[3]जा वलमडप्फरेणं निवाण उक्खंधया आसि पुरा ।
सा तुह सासणभारं ताण वहंताण संपयं कह वि गया ॥ १५.१ ॥

अत्र पूर्वार्धविकल्पानां द्वात्रिंशत्सहस्राणामपरार्धविकल्पैश्चतुःषष्टिसहस्रैर्घाते जातानि विंशतिरर्बुदानि[4] चतस्रः कोट्योऽशीतिर्लक्षाः ॥ १५.१ ॥

अन्त्येऽवात् ॥ १६ ॥

अन्त्येऽर्धे षष्ठे लि अवात्परं स्कन्धकमवस्कन्धकमित्यर्थः । यथा –

[5]पवणपहल्लिरपल्लवधयवडमुल्लसिअकोइलावंदिरयं ।
ओ खंधावारं चिअ पेच्छ वणं रइवइनरिंदस्स ॥ १६.१ ॥

पूर्ववद्विकल्पाः ॥ १६.१ ॥

1) 'तत्षष्ठे ल्युपात्' इति सूत्रे षष्ठचरणस्थाने एकस्मिन्नेव लघुन्यक्षरे सतीति भावार्थः । 2) उअ खंधाहय(इ)त्ति – पश्य स्कन्धाहतित्रुट्यद्बाहुदण्डोऽपि सुभटः एष परयोधं प्रहरति पादेन रोषेण दष्टाधरकः । 3) जा वलेत्यत्र या बलदर्पेण नृपाणां ऊर्ध्वस्कन्धता आसीत् पूर्वं सा तवाज्ञाभार तेषां वहतां सांप्रतं कुत्रापि गता । 4) विंशतिरर्बुदानीत्यादि २०४८०००००० । दशकोटिभिरेकमर्बुदं भवति । 5) पवणपहल्लिरेत्यत्र पहल्लिरेति – कम्पनशीलवाचको देश्यः । धवजपटम् । ओ सूचनायाम् । कटकमिव पश्य वनं कन्दर्पनरेन्द्रस्य ।

१ नीणो AEN, भीणो C २ वण्णे N. ३ एऊण० B, पऊण N ४ विहुलहु० A ५ विहु विहु A. ६ वट्टंतेहि AD, वट्ठंतेहिं N ७ सेसाइं A. ८ भेदविकल्पने P. ९ दढाहरओ N. १० पूर्वार्धद्वात्रिं० N. ११ मप्फुरेणं S. १२ स्कन्धमि० B. १३ यथा dropped in P. १४ उल्लमिय S. १५ पिच्छ ABE, पच्छ DN.

गीतिस्कन्धके संकीर्णम् ॥ १७ ॥

पूर्वार्धे स्कन्धकमपरार्धे गीतिः यद्वा पूर्वार्धे गीतिरपरार्धे स्कन्धकमित्युभयथापि संकीर्णं[२] नाम स्कन्धकम् । यथा –

1)जह जह तुह पहु सेन्नं किज्जइ संकिण्णयं मयगलघडाहिं ।
तह तह रिउरायघरेसु खलइ लच्छि त्ति पेच्छ अच्छरिअं ॥ १७.१ ॥

2)सा वाला तुह विरहे हिअए संकिण्णए अमंताइं ।
नीसासधूमलहरिच्छलेण दुक्खाइं सुहय उव्वमइ फुडं ॥ १७.२ ॥

3)अत्र स्कन्धकार्धविकल्पानां गीत्यर्धविकल्पैर्घाते भङ्गद्वयेऽपि प्रत्येकं जाता एकाशीतिः कोट्यो द्विनवतिर्लक्षाः ॥ १७.२ ॥

गाथाद्यर्धेऽन्त्यगात्प्राक् चो वृद्धौ जातीफलम् ॥ १८ ॥

गाथैव पूर्वार्धेऽन्त्याद् गुरोः प्राक् चगणस्य वृद्धौ 4)जातीफलम् । उत्तरार्धं तु गाथाया एव । यथा –

5)तुह रिउणो निवसंता[११] अविरलजाईहलेसु जलहितडवणेसु ।
वणवासमुहसईण्हा[१२] न रज्जमीहंति सिविणे[१३] वि ॥ १८.१ ॥

चयोगाथः ॥ १९ ॥

गाथैव पूर्वार्धेऽन्त्यगात् प्राक् चगणद्वयस्य वृद्धौ गाथः । यथा –

6)गोरीई[१४] चिहुरभारो जलगाहोत्तिण्णिआइ[१५] निवडंतथोरविंदूहिं[१६] ।
विअलिअपसूणमालाविरहदुहेणं रुएईव्व[१७] ॥ १९.१ ॥

अत्राष्टमश्चगणः पञ्चभेदो नवमो 'नौजे जः' इति चतुर्भेदोऽन्योन्याहतौ विंशतिः[१८] । तथा आर्याविकल्पानां[१९] गुणने जातमब्जमेकं त्रिषष्टिः कोट्यश्चतुरशीतिर्लक्षाः । एवमुद्-

1) जह जहेत्यत्र हे प्रभो यथा यथा हस्तिघटाभिः तव सैन्यं संकीर्णं क्रियते तथा तथा रिपुगृहेषु लक्ष्मीः स्खलति स्खलनं प्राप्नोति अर्थात् भ्रश्यति । अन्यत्र सकीर्णं अन्यत्र स्खलतीति पश्याश्चर्यम् । संकीर्णस्थाने स्खलने किमपि नाश्चर्यं भवति । 2) सा वालेत्यत्र सा स्त्री तव विरहे हृदये संकीर्णके अमान्ति मानाधिका-(क्या)त् निःश्वासधूमलहरीकपटेन दुःखानि उद्वमति सुभग स्फुटम् । 3) अत्र स्कन्धकार्धेत्यत्र ६४००० । गीत्यर्धेति १२८०० । घाते गुणने । ८१९२००००० । 4) जातीफलमित्यत्र अत्राष्टमश्चगणः पञ्चभेदस्तेनार्याभेदानां ८१९२०००० गुणने चत्वारि अर्बुदानि पण्णवतिर्लक्षाः । स्थापना यथा ४०९६००००० । एष जातीफलस्य प्रस्तारः । 5) तुह रिउणो इत्यत्र राजन् जातीफलाकीर्णेषु समुद्रतटेषु निवसन्तस्तथा च वनवाससुखे 'सइण्हा' इति सतृष्णाः सोत्कण्ठा इति यावत् राज्यं स्वप्नेऽपि नेहन्ते इति भावः । 6) गौरी[ए] इति – गौर्याः चिकुरभारः जलगाहोत्तीर्णायाः निपतत्स्थूलबिन्दुभिः विगलितप्रसूनमालाविरहदुःखेन रुदतीव ।

१ स्कन्धमप० B. २ संकीर्णकं B ३ पहु तुह P ४ किव्वइ S ५ मच्छरिअं A. ६ विरहो S. ७ लहरी N. ८ वुक्खाइं S ९ स्कन्धकार्धे वि० P. १० आर्यार्धेऽन्त्या० F. ११ निवसंतो N. १२ सइन्हा AF. १३ सुविणे वि AB. १४ गौरीए KN. १५ गाहोतिन्नि० DP. १६ घोरविंदूहिं CDN. १७ रुयइव्व CS. १८ चतुर्विंशति A १९ मेदाना F.

गाथादिष्वपि। वर्द्धमानचगणद्वयविकल्पैर्विंशत्या[1] पूर्वपूर्वविकल्पानां ताडने विकल्पसंख्या उन्नेयाः॥ १९.१॥

**क्रमवृद्ध्योद्व्यवसमुपात्॥ २०॥**

गाथात्परं क्रमेण चगणद्वयवृद्ध्या उद्-वि-अव-सम्-उप-परो गाथो भवति। उद्गाथ-विगाथ-अवगाथ-संगाथ-उपगाथा इत्यर्थः। [1)]उद्गाथो यथा—

[2)]सिरिवद्धमाणजिणवर उग्गाहंतो[2] सुराहिवो तुज्झ अइसयसिरिं परूढरोमंचो।
अहिलसइ मुहसहस्सं ठाणे दिट्ठीसहस्सस्स॥ २०.१॥

[3)]विगाथो यथा—

[4)]सिरिकुमरवालभूवइ अच्चब्भुअचरिअवण्णगं तुज्झ जो किर
करेउमिच्छइ[3] कुसग्गतिक्खबुद्धी[4] वि।
वाहाहिं[5] सो विगाहिउमिच्छइ रयणायरं सयलं॥ २०.२॥

[5)]अवगाथो यथा—

[6)]सो जयइ अजलठाणं[6] वायागुंफो पुराणसुकईण को वि अन्नो[7]
च्चिअ सरिनाहो[8] अकलिअमज्झो सया वि विबुहेहिं।
जो अवगाहिज्जंतो निरंतरं देइ अमयरसं॥ २०.३॥

[7)]संगाथो यथा—

[8)]नहकोलस्स व दाढा तिक्खखुरुप्पं व[9] जलणउत्तिण्णमणंग-[10]
महाभडस्स किंसुअवतंसउ व्व पुरहूअवल्लहदिसाइ[11] एत्ताहे।
कणयपिसंगी[12] हरिणंकलेहिआ[13] सहइ उअयंती॥ २०.४॥

[9)]उपगाथो यथा—

---

1) उद्गाथो यथेति—अत्र पूर्वविधिना गुणने भेदाः ३२७६८००००००। 2) सिरिवद्धमाणत्ति—उद्गाहमानः स्तुवन्नित्यर्थः। इन्द्रस्तव अतिशयलक्ष्मीं उत्पन्नरोमाञ्चकञ्चुकः। अभिलषते मुखसहस्रं स्थाने दृष्टिसहस्रस्य। 3) विगाथो यथेत्यत्र भेदाः ६५५३६००००००००। 4) सिरिकुमरेत्यत्र अत्यद्भुतचरितवर्णनं तव यः पुमान् किल कर्तुमिच्छति कुशाग्रतीक्ष्णबुद्ध्या वाहाभिः स पुमान् विगाहितुं वाञ्छति रत्नाकरं सकलम्। 5) अवगाथो यथेति—अत्र भेदाः १३१०७२००००००००। 6) सो जयइत्ति—स जयति अजाड्यस्थानं अजलस्थानं [वा]। वाग्गुम्फः पुराणकवीनां कोऽपि अन्य एव सरिन्नाथः समुद्रः। यः अवगाह्यमानः सन्। कैः देवैः सुधीभिश्च। अमृतरसं अमृतं पक्षे शृङ्गारादयो रसा उच्यन्ते। 7) संगाथो यथेति—अत्र भेदाः २६२१४४०००००००००। 8) नहकोलस्स वेत्यत्र आकाशवराहस्य। इवोत्प्रेक्षते। दंष्ट्रा अथवा तीक्ष्णं क्षुरप्रं अर्धचन्द्राकारं लोहमयं बाणं अग्निमध्यान्निर्गतं कन्दर्पमहाभटस्य। अथवा पूर्वदिग्वध्वाः किंशुकप्रकरं इत्युत्प्रेक्षते। कुर्वंती मृगाङ्कलेखा कनकवत्पीता शोभते। पीतरक्तयोरैक्यं कविसमये। उदयन्ती। 9) उपगायो यथेति—अत्र भेदाः ५२४२८८००००००००००।

---

१ भेदै-भेदाना F. २ उग्गाहिंतो AP. ३ करेइमि० A. ४ बुद्धीइ K. ५ वाहाहि B. ६ अजडठाणं P; अजलट्टाणं N. ७ अन्नो व्विअ AS; अन्नु चिय P. ८ सरिणाहो A. ९ खुरप्पं व A; खुरुप्पं च S. १० उत्तिण S. ११. पुरहूअ BE. १२ पिसगी A. १३ हरिणंगले० A.

[1]समरसहोअहिमुव्भडकरिमयरं[1] उच्छलंतरुहिरसलिलमसिवर-
दाढिआइ[2] सहसत्ति मेइणि उद्धरंतओ महिहराण
आकंपणाइं विरइंतो[3]।
ऊअ[4] गाहइ चोलुक्कस्स आइकोलु[5] व्व भुअदंडो ॥ २०.५ ॥

गाथिनी ॥ २१ ॥

उपगाथाच्चगणद्वयवृद्ध्या गाथिनी। यथा—

[2]सिरिमूलरायभूवइकुलगयणमिअंक[6] तिहुँअण[7]ललाम जयसिरि-
निवास जसभरभरिअदिअंत रिउभडकयंत निवकुमरवाल
भणिमो अइगहिराइं कई[8] तुज्झ चरिआइं।
सयलगुणगाहिणी[9] जस्स न किर चउवयणवाणी वि ॥ २१.१ ॥

यथेष्टं मालागाथः ॥ २२ ॥

गाथिन्याः परं यथेष्टं चगणद्वयवृद्ध्या मालागाथः। यथा—

[3]इह माला गाहाण व वयंस पेच्छसु नवंबुवाहाण गयणविउल-
सरवरम्मि विमुक्कघोरघोसाण विज्जुजीहाविहीसणाण
वहलवारिनिचयपमंचिराण[10] अइदीहगत्ताण।
हद्धी गसइ मयंकं[11] खेलंतं रायहंसं व ॥ २२.१ ॥

जातीफलाद्यर्धे गाथवद् दामादयः ॥ २३ ॥

जातीफलस्य प्रथमेऽर्धेऽन्त्यगात्प्राक् क्रमेण चगणद्वयवृद्ध्या दामादयो[12] भवन्ति। गाथवदिति यथा गाथः केवल उद्-वि-अव-सम्-उपात् परो, मत्वर्थीयान्तो, मालायाश्च पर उक्तस्तथायमपि। तत्र दामो यथा—

[4]जूहाउ[13] व वूहाओ कड्ढिअ चोलुकराइणा[14] [15]दरिअवेरिभूव[16]मयगलाण।
कंठे पाएसु तहा ओ दीसइ घल्लिअं दाम ॥ २३.१ ॥

---

1) समरमहोअहित्ति—हे राजन् तव भुजदण्डः आदिवराह इव संग्रामसमुद्रमवगाहते। कथंभूतं समुद्रम्। उद्भटकरिरूपा मकरा यत्र तं, पुनः रुधिरमेव सलिलं यत्र, पुनः खड्गा एव दंष्ट्रा यत्र। किं कुर्वन्। उद्धरन्मेदिनीं सहसा। पुनः किं कुर्वन्। पर्वतानां राज्ञां च आकम्पनानि। 2) सिरिमूलरायत्ति—श्रीमूलराज भूपतिकुलगगनमृगाङ्क हे त्रिभुवनललाम जयश्रीनिवास यशोभरभरितदिगन्त रिपुभटकृतान्त हे नृप कुमारपाल यस्य ब्रह्मणः चतुर्वदनजापि वाणी तव चरित्राणि वक्तुं न समर्थेति वयं [कथं] भणामः। अ[इ]गहिराइत्ति—[अ]प्रकटानि। 3) इह माला गाहाणत्ति—ग्राहाणामिव क्रूरजलचरजीवानामित्यर्थः। हे वयस्य प्रेक्षस्व नूतन-मेघमाला गगनरूपसरसि क्रीडन्तं चन्द्ररूपं राजहंसम्। हद्धीति—हा धिक्। ग्रसते वहलजलनिकरेण मन्दगमन-शीलानाम्। विभक्त्यात्र पक्षद्वये समास. कार्यः मन्थरगतीवि(ना)मिति भावः। 4) जूहाउवेत्यत्र। राज्ञां यूथादिव कटरचनामध्यात् आकृष्य उत्कटवैरिभूपरूपहस्तिनां कण्ठे पादे क्षिप्तं दृश्यते बन्धनम्। ओ सूचनायाम्।

---

१ All mss and N read मयरसुच्छ० against metre, P seems to read मयरमुरुच्छ०. २ दाढ्ढिआइ S ३ विरयंतो ANP ४ ओ S ५ चोलुक्कस्स आइ dropped in A. ६ मियंग A; मयंक P ७ तिहूअण AD ८ कह dropped in C ९ गाहिनी S १० पणच्चिराण NS ११ मयंगं A; portion from मयंकं to the end of २३.५ not photographed in P १२ दामाद्याः स्युः F. १३ जूहालव० N. १४ रायणा A. १५ दरिआ वेरि० S, दलियवेरि AC. १६ भूत N.

उद्दामो यथा—

[1]"चालुक्क[1] तुज्झ नयरी उद्दामसुरालयाण सिहरेसु पवणतरलेहिं दीहरधयवडकरेहिं।
देइ चविलापहारं किल कलिणो ओअरंतस्स ॥ २३.२ ॥

विदामो यथा—

[2]"सिरिकुमरवाल[2] मुञ्चसि सरमालं जत्थ जत्थ सुहडम्मि
तत्थ तत्थ अणुमग्गलग्गो सयंवरकए सहस त्ति।
मेल्लइ[3] सुरकुसुममयं सुरजुअइजणो वि दाम नवं ॥ २३.३ ॥

अवदामो यथा—

[3]"ओ दामाइं रयंतीइ तीइ कामस्स पूअणनिमित्तमिह तुह समागमूसवं
तहिअहमहिलसंतीए नवकुवलयच्छीए।
कुसुमसमिद्धिविरहिअं उज्जाणं निम्मिअं सयलं ॥ २३.४ ॥

संदामो यथा—

[4]"अणुरयणि चंदकिरणप्फंस[4]प्पसरंतचंदकंतसिलानीसंदामयरस-
सिंचिज्जमाणतरुतलनिसण्णरइकेलिखिन्नविज्जाहरमिहुणो[5]।
जिणचरण[6]रयपवित्तो रेहइ सिरिउज्जयंतगिरी ॥ २३.५ ॥

उपदामो यथा—

[5]"सिरिमूलराय भूवइ[7]कुलगयणमिअंक[8] तुह दिसजय[9]म्मि दुद्धरतुरंगखुर-
पुडुक्खाय[10]मेइणीवहलधूलिपडलेण पंकिलिज्जंतसायरसलिलसयणिज्जे।
उअ[11] दामोअरसेण्हिं[12] लच्छी अइदुक्करं[13] रमइ[14] ॥ २३.६ ॥

---

1) चौलुक्येत्यत्र चौलुक्य तव नगरी उद्दामसुरालयानां शिखरेषु पवनतरलैः दीर्घध्वजपटकरैः ददाति चपेटाप्रहारं किल कलेरवतरतः। 2) सिरिकुमरपाल हे राजन् यत्र यत्र त्वं शरमालां मुञ्चसि यस्मिन्सुभटे तत्र तत्र अनुलग्नः सुरीजनोऽपि कुसुमदाम मुञ्चति। 3) ओ दामाइ इति—ओ सूचनायाम्। रच[य]न्त्या तया कामपूजनकृते तव समागमोत्सवं च(मे)लनदिवसानभिलषन्त्या नवकुवलयाक्ष्या कुसुमसमृद्धिवि[र]हितं उद्यानं निर्मितं सकलम्। 4) अणुरयणित्ति—अनुदिनं चन्द्रकिरणस्पर्शात् प्रसरच्चन्द्रकान्तशिलातो निष्यन्दामृतरसेन सिच्यमानतरुतले निषण्णरतिकेलिपि(खि)न्नविद्याधरमिथुनानि यत्र सः। जिनक्रमरजःपवित्र. राजते श्री उज्जयन्तगिरिः। 5) सिरिमूलरायत्ति—हे श्रीमूलराज भूपतिकुलगगनमृगाङ्क तव दिग्जये उत्कटतुषार(तुरंग)खुरपुटोत्खातमेदिनीप्रभूतरज.पटलेन कर्दमीभवत्सागरशयनीये दामोदरसमीपे इदानीं लक्ष्मीः कष्टेन रमते।

---

१ चालुक्व BD, चौलुक्क K; थालुक्क N. २ कुमरपाल AKS ३ मिल्लइ B. ४ प्फुंस A; प्फुस N ५ खिन्न॰ सहरमि॰ S; खिन्नविघाहरमि॰ A ६ चलण S ७ भूअइ B ८ मयंक CDN ९ दिसिज॰B. १० पुडुक्खाइ B; पडुक्खाय D, पुडुक्खाय S; पुडुरकाय N. ११ उव ABP. १२ सेण्हि AB. १३ दुक्खरं A. १४ गमइ A.

दामिनी यथा—

[1]सिरिसिद्धरायनंदण तुमयं आयंतमिक्खिउं[1] झत्ति धाविरीए[2] इमाइ
पज्जाउलत्तवससिढिलवद्धगंठि ल्हसिऊण
रमणत्थलाउ[3] चरणगएसु रईअघणावेढम् ।
मणिकंचिदाम निम्मिअगइखलणं दामिणी होइ ॥ २३.७ ॥

मालादामो यथा—

[2]हंहो जुआणय तुमं मा उज्जाणम्मि भमसु[6] भुल्लो वि अन्नहा इत्थ फुल्लिअ-
नवल्लमल्लिआवचयकोउअपरायणाण मयभिंभलाण
कंदप्पविब्भमुब्भासिआण पोढमहिलिआण ।
दूसहकडक्खमालादामिअहिअओ न नीहरसि ॥ २३.८ ॥

[11]इदानीं मात्राच्छन्दसां गुरुलघुपरिज्ञानार्थमाह—

[3]मात्रा वर्णोना गो[12] वर्णा गूना लः ॥ २४ ॥

यस्य कस्यापि मात्राच्छन्दसो यावत्यो मात्रा भवन्ति[13] ता वर्णोना अक्षरैरूना गुरवो ज्ञातव्याः[14] । तथा[15] वर्णा गुरुभिरूना लघवो ज्ञातव्याः । तत्रायमुपयोगः । यदा[16] कश्चित्पृच्छति अष्टात्रिंशदक्षरायां कति गुरवः कति वा लवव इति—तदा [4]सप्तपञ्चाशति शास्त्रोपदिष्टायामार्यामात्रासंख्यायामष्टात्रिंशतं[17] वर्णसंख्यामपनयेत् अत्र[18] येऽवशिष्यन्ते तान्गुरूनुपदिशेत्[19] । ते चैकोनविंशतिः । वर्णेभ्यश्च गुरूनपातयित्वा शेषैनेकोनविंशतिं[20] लघूनुपदिशेत् । यथा—

1) सिरिसिद्धरायनंदणेत्यत्र हे कुमारपाल त्वां आयान्तं ईक्षितुं शीघ्रं धावमानायाः अस्याः पर्याकुलत्ववशात् शिथिलीभूतबद्धग्रन्थितः स्रंसित्वा ल्हसिऊण ह्लादिवर्जनात् पूर्वोऽत्र गुरुर्न भवति । रमणत्थलाउत्ति—जघनस्थलात् । यदनेकार्थसंग्रहः—'रमणं पुनः । पटोलमूले जघने रमणो रासभे प्रिये' इति । सांप्रतं चरणाग्रतो रचितघनावेष्टं यथा स्यात्तथा रचितगतिस्खलना दामिनी पशुबन्धनरज्जुर्भवतीति । 2) हं हो जुआणयत्ति—भो भो युवन् उद्याने मा भ्रम । भुल्लो देश्योऽज्ञातार्थे । यदि च गमिष्यसि तदात्र पुष्पितनूतनमल्लिकापचयने [स]कुतुकानां मदविह्वलानां कन्दर्पविभ्रमोद्भासितानां प्रौढमहेलिकानां दुःसहकटाक्षश्रेणिबद्धहृदयः सन् न निस्सरसि । न बहिरागमिष्यसीति भावः । 3) मात्रा वर्णोना इति—गो गुरवो [ लो ] लघवः । तथा वर्णा विवक्षिताक्षराणि । 4) सप्तपञ्चाशतीत्यत्र आर्या-पथ्या-विपुला-चपलादेः पूर्वार्द्धे ७ चगणा गुरुश्च तस्य मात्राद्वयं विवक्ष्यते ततो ३० मात्राः । अपरार्द्धे तु षष्ठस्य लघुत्वात् ३ हानौ २७ मात्राः । ततो द्वयोर्मीलने ५७ भवन्ति । जयति विजितेत्यत्र आकस्मिकं भयं त्रासः । पक्षे रत्नान्तर्वर्ती दोषः । यमिते सति यमकसहिते ( इत्यार्याप्रकरणम् ) ।

१ उक्खियं B. २ धाविरीइ AB ३ त्थलाओ D. ४ रईअ० ON. ५ निमियगइ A ६ भवसु S. ७ मल्लिआचय S. ८ कोउअ S ९ विब्भासिआण S, १० उपोढम० N; पोढमहिलाण A. ११ अथ F. १२ गा N. १३ स्यु. F. १४ ज्ञेया. F १५ तथा to ज्ञातव्या dropped in P. १६ यथा P. १७ P adds आर्याया. Portion from आर्यामात्रासं० to तुह विरहे in २५-१ is not photographed in P. १८ तत्र A १९ ते गुरव. F २० शेषा. १९ लघव. F.

जयति विजितान्यतेजाः सुरासुराधीशसेवितः श्रीमान् ।
विमलत्रासविरहितस्त्रिलोकचिन्तामणिर्वीरः ॥ २४.१ ॥ इति ॥

## आर्याप्रकरणम् ।

**पौ चौ तो[१] गलितकं यमितेंऽह्रौ ॥ २५ ॥**

द्वौ पञ्चमात्रौ द्वौ चतुर्मात्रावेकस्त्रिमात्रो गणो गलितकम् । अंह्रौ पादे यमिते सति । तगणो यद्यपि वर्णगणोऽप्यस्ति तथापि मात्रागणसमभिव्याहारादिह मात्रागणो गृह्यते । एवमन्यत्रापि । यथा–

[1)] गलिअंजणधवले वहइ नयणपंकए,
सुहय चयइ कालागुरुचंदणपंकए ।
सहीअणअप्पिअं दलइ[२] च्चिअ निद्दयं[३],
सा तुह विरहे मालइदाम विणिद्दयं ॥ २५.१ ॥

**तृतीये षष्ठे ल्युपात् ॥ २६ ॥**

यमितेंऽह्रौ तृतीये षष्ठे च [2)] लघुन्युपात् । उपगलितकमित्यर्थः । यथा–

[3)] तुह विजयपयाणयभेरीरवडंबरं,
झत्ति निसुणिऊण पडिरवमुहलिअंबरं[४] ।
सज्झसेण[५] पकंपिरस्स हरिणो करओ,
उअ गलिअमिमं खु धणुहं धरए[६] सरओ ॥ २६.१ ॥

**समेऽन्तरात्[७] ॥ २७ ॥**

[4)] समेंऽह्रौ यमितेऽन्तरात् । अन्तरगलितकमित्यर्थः । यथा–

[5)] उअ वयंस वित्थरिअमहूसव[८]लच्छिअं,
रणरणंतभसलावलिअं वणराइअं[९] ।

1) गलिअंजणेत्यत्र । निरन्तराश्रुपाताद्गलिताञ्जने सतां धवले वहति नयनपङ्कजे सुभग त्यजति कृष्णागुरुचन्दनयोः पङ्ककं विलेपनार्हं कर्दमम् । सखीजनार्पितं चूर्णयति निर्दयं सा तव विरहे मालतीदाम । विनिद्रकं विकसितम् । 2) लघुन्युपादिति–प्रतिपादं लघुन्यक्षरे कृते सति । 3) तुह विजयेत्यत्र तव विजयप्रयाणभेरीशब्दाडम्बरं शीघ्रं श्रुत्वा प्रतिरवमुखरिताम्बरसाध्वसेन भयेन प्रकम्पमानस्य इन्द्रस्य करात् पश्य गलितं इदम् । खुशब्दो निश्चये पादपूरणे च । धनुः धरति शरत् । 4) समेंऽह्राविति–गणाः पूर्ववत् । यमिते सयमके । 5) उअ वयंसेत्यत्र पश्य हे वयस्ये विस्तृतवसन्तोत्सवलक्ष्मीकां रणरणद्भ्रमरावलिकां वनराजिकां कवलितचिरोत्पन्नमनस्विनीमानिकां फुल्लवल्लिकुसुमान्तरगलितपरागिकाम् ।

१ तौ DN २ दलइ विंअ S. ३ णिद्दयं BODNP. ४ मुहरियंवरं P. ५ सब्भसेण A. ६ धरइ B. ७ समे पादेऽन्तरात् H. ८ मधूसव E. ९ वणराईअ A

कवलिअचिरपरूढमाणंसिणिमाणिअं[1],

फुल्लवल्लिकुसुमंतरगलिअपराइअं[2] ॥ २७.१ ॥

अन्ये तु प्रथमचतुर्थयोः पादयोर्यमनेऽन्तरगलितकमाहुः[3] । यथा –

[1]पत्तलच्छि सुहयं जणमोहपयासयं,

गलिअनिद्दइंदीवरपत्तसहोअरं[4] ।

सहइ तुज्झ एअं तं लोअणजुअलयं,

पत्तलच्छि सुहयंजणमोहपयासयं[5] ॥ २७.२ ॥

**पौ चौ पो वेः ॥ २८ ॥**

द्वौ पञ्चमात्रौ द्वौ चतुर्मात्रौ एकः पञ्चमात्रश्चेद् यमितेऽहौ [6]वेर्गलितकम्। विगलितकमित्यर्थः। यथा –

[2]उअ महुसमओ मिउफुरिअमलयपवमाणओ,

विगलिअचिरपरूढमाणंसिणिजणमाणओ।

कोइलाहिं कयकलगीईहिं गिज्जमाणओ,

वम्महस्स विजयम्मि सहाओ[7] असमाणओ ॥ २८.१ ॥

**चौ पः समः ॥ २९ ॥**

द्वौ चतुर्मात्रौ पञ्चमात्रश्चैको यमितेऽहौ समः परं गलितकम्। संगलितकमित्यर्थः। यथा –

[3]वणफलभरसं[8] गलिअयं,

जस्स य निव्वुइदाययं[9] ।

तस्स सया वणवासिणो,

किं वण्णामि महेसिणो ॥ २९.१ ॥

**षतीगाः शुभात् ॥ ३० ॥**

एकः षण्मात्रः चत्वारस्त्रिमात्राः गुरुश्च यमितेऽहौ शुभाद् गलितकम्। शुभगलितकमित्यर्थः। यथा –

1) पत्तलच्छि इत्यत्र पत्रलाक्षि सुखदं जनानां मोघपदं निष्फलव्यापारस्तस्यास्पदम्। अथवा जनानां मोहपदं मोहव्यापारस्तस्याश्रयम्। गलितनिद्रेन्दीवरपत्रतुल्यं शोभते तव एतल्लोचनयुगलकम्। प्राप्ता लक्ष्मीर्येन। सश्रीकमित्यर्थः। सुभगाञ्जनमयूखप्रकाशकम्। अथवा सुभगाञ्जनस्य मोघपदे निष्फलपदे आसकं स्थासकम्। विगलितचिरप्ररूढमनस्विनीमानकः कोकि-
2) उअ महुसेत्यत्र पश्य मधुसमयोऽस्ति मृदुस्फुरितमलयपवमानो
लाभिः कृतकलगीतिभिः गीयमानः कन्दर्पस्य विजये सहायः। असमानो निरुपमः। 3) वनफलं नीरसं भूमि-
पतितं यस्य च निर्वृतिदायकं समाधिदातृ। तस्य सदा वनवासिनः किं वर्णयामि महर्षेः।

---

१ माणअं B २ फुल्लविल्ल ··पराईयं A. ३ यमितेऽन्तर० कमित्याहुर्यथा A. ४ गलियनिद्दअंदीवर A; गलिअनिद्दअं इंदी० D. ५ Portion from जणमोह० to समगलित in ३२ com. is not photographed in P. ६ अहौ। गलितकं चेत्यविकार आगलितकप्रकरणसमाप्ते F.। ७ सहाउ S. ८ वणफलभरसग० N. ९ निव्वुदयायं D.

[1] पुणरवि निअरज्जसिरि[1]सुहगलिआसया,
पव्वयकंदरेसु निवसंतया[2] सया ।
पहु तुह रिउणो धरंतया मुणिव्वयं,
पुणो पुणो वि हु उवालहंति दिव्वयं ॥ ३०.१ ॥

**चः पौ चौ त्[3]ः समात् ॥ ३१ ॥**

एकश्चतुर्मात्रो द्वौ पञ्चमात्रौ द्वौ चतुर्मात्रौ एकस्त्रिमात्रोंऽह्रौ यमिति समाद् गलितकम् । समगलितकमित्यर्थः । यथा –

[2] दुद्धरवारि[4]वुट्ठिघोरा चलविज्जुलभीसणा,
सेलगुहंतरालपडिसद्दिअदुगुणिअनीसणा ।
जाव समुत्थरंति मेहा [5]पिहिअंवरदेसया,
पहि[6]आ ताव हुंति जंवूफलसम गलिआस[7]या ॥ ३१.१ ॥

**तदोजे चतौ मुखात् ॥ ३२ ॥**

तदेव समगलितकमोजपादयोः चगणतगणौ चेत्तदा मुखाद् गलितकम् । मुखगलितकमित्यर्थः । यथा –

[3] सयवत्तयं,
मुह[8]गलिअमहुक्करसुरहिअजलमलिसयवत्तयं ।
तमणंग[9]ओ,
चावम्मि ठवेविणु कस्स व न हु हं[10]तं मणं गओ ॥ ३२.१ ॥

**षाच्चनौजे जः समे जो लीर्वा मालायाः ॥ ३३ ॥**

षण्मात्राद् गणात्परे दश चगणा न विषमे जः समे जो [4] लघुचतुष्टयं वा यमितिंऽह्रौ मालाया गलितकम् । मालागलितकमित्यर्थः ॥ यथा –

1) पुणरविन्ति – पुनरपि । निजराज्यश्रीसुखगलिताशयाः पर्वतकन्दरेषु निवसन्त. सदा हे प्रभो तव रिपवो धरन्तः मुनिव्रतं पुनः पुनर्निश्चयेन उपालभन्ते दैवम् । 2) दुद्धरवारित्ति – दुर्द्धरवारिवृष्टिघोराः चलविद्युद्भीषणा. शैलगुहान्तरालप्रतिशब्दितद्विगुणितनि.स्वनाः यावद्विस्तरन्ति मेघाः पिहिताम्बरदेशकाः पथिकास्तावद्भवन्ति जम्बूफलसमगलिताशकाः । जम्बूफलानां समा सन्तः गलिता आशा वाञ्छा येषां पक्षे गलितानि कथितानि आशयानि येषां नष्टमध्यानि । तदा हि तानि कथ्यन्ते । अथवा जम्बूफलसमा अत एव गलिता पतिता आशा येषाम् । वर्षाकालेन जम्बूफलानि पतन्ति । 3) सयवत्तयमित्यत्र शतपत्रकं मुखगलितमकरन्दौघसुरभितजलं अलीनां शतानि तेषां वर्तकं जीवकम् । तदनङ्गः चापे संस्थाप्य कस्य न हु निश्चितं हन्ति मनो गतः । 4) लघुचतुष्टयं वेति – पादचतुष्टयेऽपि विषमस्थाने तृतीयपञ्चमसप्तमनवमैकादशलक्षणे जगणो न स्यात् । तथा समे द्वितीयचतुर्थषष्ठाष्टमदशमलक्षणे जगणो लघुचतुष्टयं वा भवति सर्वेषु पादेषु ।

१ सिरिसुह० N; – सुहगलियआसया A. २ निवसतवा सया S; सया dropped in B. ३ त्रि॰ N. ४ वुट्टि B, वुड्ढि N. ५ पिसिहिअवर A ६ पहिआ० N; पहिअतोव हुंति A. ७ गलिअआसया A; ८ मुहगलिययं महु० A; सुहगलिअमहु० D. ९ तगणं गओ N. १० हंति CK.

[1]खेलिरकामिणीकराहयअविरलविअसिअजल[1]रुहमालागलिअपरायसुरहिअं[2]सलिलयं,
तरलतरंगरंगपरि[3]णंचिरकलहंसमिहुणावलिसर[4]हसकिज्जमाणकलयलकलिलयं ।
अब्भंलिहतडपरिरूढवहल[5]वउलतिलयतमालतालीवणपडिहयखरदिणयर[6]करयं,
पिच्छ सरोवरं इमसणारयं पि विज्जाहरसुरवरकिन्नराण एक्कं[7] विलासहरयं ॥ ३३.१ ॥

## चृर्गन्तो मुग्धात् ॥ ३४ ॥

पगणात्परे अष्टौ चगणा गुर्वन्ताः । नौजे जः समे जो लीर्वा यमितेंऽह्नौ मुग्धाद् गलितकम् । मुग्धगलितकमित्यर्थः । चृः इत्यस्य गन्तत्वेन विशेषणादन्त्यश्च[8]गणो गुर्वन्तो लभ्यते । न तु पृथगेव गुरुः । अन्यथा चृगाविति कुर्यात् । यथा—

[2]नमिरसुरासुरिंदसिर[9]रयणमउडरुइभरकरंबिअचर[10]णकमलनहमणि,
सयलतिलोअलोअलो[11]अणविहुरणमोहंधयारनि[12]अरविहडणनहमणिं ।
न नवसि जइ जुआइजिणइंदं[13]ममलकेवलसिरिकुलहरमिह भवभयह[14]णणं,
ता वयंस तुह रयणं चिअ कराउ मुद्ध गलिअं किर विहलमिदं खु जणणं ॥ ३४.१ ॥

## चूरुग्रात् ॥ ३५ ॥

पात्परे षट् चगणा गन्ताः । नौजे जः समे जो लीर्वा यमितेंऽह्नौ उग्राद् गलित[15]कम् । उग्रगलितकमित्यर्थः ॥ यथा—

[3]निम्म[16]लनाणदिट्ठिअवलोइअभुव[17]णयलं विसुद्धचित्तं,
उग्गगलिअसम[18]ग्गकम्मं निरवहिनाणरइअजगचित्तं ।
वीरं संभरामि तार[19]णतरंडयं समपसन्नसोहं,
[20]पंडिओ दुत्तरस्स भवसायरस्स लहरीभरम्मि सोहं ॥ ३५.१ ॥

1) खेलिरकामिणीत्यत्र क्रीडनशीलकामिनीकराभिहताविरलविकसितजलरुहमालागलितपरागसुरभित-
सलिलकम् । तरलतरङ्गेन परिवर्तनशीलहंसमिथुनावलीनां सरभसं क्रियमाणः कलकलशब्दविशेषस्तेन कलि-
लकम् । अभ्रंलिहतटाभिरूढवहलवकुलतिलकतमालतालीवनेन प्रतिहतकठिनदिनकरकरा यत्र । स्वार्थे के करकम् ।
पश्य सरोवरं इदं अनारतं विद्याधरसुरकिंनराणां एकं विलासगृहम् । 2) नमिरसुरेत्यत्र नम्रसुरासुरेन्द्रशिरो-
रत्नमुकुटरुचिभरकरम्बितमिश्रितक्रमकंजनखमणिं सकलत्रिलोकलोचनानां पीडनशीलमोहान्धकारनिकरविघट्टने
नभोमणिं सूर्यम् । न नमसि । रुद्रनमोर्व इति मस्य वः । यदि युगादिजिनेन्द्रं अमलकेवलश्रीकुलगृहं भवभयहननं
तत् वयस्य तव रत्नं एव करात् हे मुग्ध गलित किल विफलमिदं निश्चितं जननम् । 3) निम्मलनाणेत्यत्र
निर्मलज्ञानदृष्ट्यवलोकितभुवनतलं विशुद्धचित्तम् । उग्रं सत् गलितं समग्रं कर्म यस्मात् । निरवधिज्ञानरचित-
जगच्चित्रं जगच्छब्देन जगत्स्था जना गृह्यन्ते आधाराधेययोरभेदोपचारात् । वीरं चरमजिनं स्मरामि तारणयान-
पात्रम् । सर्वप्राणिषु समा मध्यस्था अत एव प्रसन्ना शोभा यस्य । अथवा शमेन उपशमेन प्रसन्ना । पतितः
दुस्तरस्य भवसागरस्य लहरीभरे सोऽहम् ।

---

१ जलरुहि S. २ सुरदिअ S, सुरुहिअ B. ३ परिणच्चिर A. ४ सयसहस्सकि० S; सरहकि० A.
५ वहलवहुल S ६ दिणरयकयं S. ७ एकं A, एवं N. ८ अन्त्यश्चो गान्तो न तु F. ९ सिरिरयण C.
१० चलण P. ११ लोअ dropped in DKN, तिहुरण N, विहरण B १२ निअर dropped in
D. १३ जिणयंदममल BF, मलकेवल to 38 com dropped in P. १४ हरणं S. १५ गलितमुग्र०
A. १६ निर्मल A. १७ भुवणलयं B. १८ समग्र DP, समगा N. १९ तरंडयसम० A. २० पंडिओ CN.
१९ छन्दो०

**पौ तः सुन्दरा ॥ ३६ ॥**

द्वौ पञ्चमात्रौ त्रिमात्रश्चैको यमितेंऽह्नौ सुन्दरा नाम गलितकम् । नौजे जः समे जो लीर्वेति निवृत्तम् । यथा –

[1]नरवरिंद तुह किंत्तिआ,
कत्थ कत्थ न पहुत्तिआ ।
भरिअगयणमहिकंदरा,
कुंदसंखससिसुंदरा ॥ ३६.१ ॥

**पौ तौ भूपणा ॥ ३७ ॥**

[2]द्वौ पञ्चमात्रौ द्वौ त्रिमात्रौ यमितेंऽह्नौ भूपणा नाम गलितकम् । यथा –

[3]पिच्छ पीवरमहापओहरा,
कस्स कस्स न वयंस मणहरा ।
विप्फुरंतसुरचावकंठिआ,
भूसणा नहसिरी उवट्ठिआ ॥ ३७.१ ॥

**चपचापचाल्गौ मालागलिता ॥ ३८ ॥**

चतुर्मात्रः पञ्चमात्रः चतुर्मात्रद्वयं पञ्चमात्रः चतुर्मात्रद्वयं लघुगुरू चँ मालागलिता । यथा –

[4]न मुणिज्जइ गलाउ रयणमाला गलिइआ न गणिज्जइ भग्गओ,
मणिवलयनिअरो न य जाणिज्जइ अंसुअंचलो वि हु विलग्गओ ।
चौलुक्ककुलंवरदिणमणि तुह अवलोअणनिमित्तधावंतिहिँ,
मयरद्धयवाणघोरणिविद्धहिअइहि नारिहि हरिसिज्जंतिहि ॥ ३८.१ ॥

**षश्चौः समे जो लीर्वा विलम्बिता ॥ ३९ ॥**

एकः षण्मात्रश्चचतुष्टयं च । तथा समे स्थाने जगणो लघुचतुष्टयं वांह्नौ यमिते विलम्बितागलितकम् । यथा –

1) नरवरिंदेत्यत्र हे नरवरेन्द्र तव कीर्तिः कुत्र कुत्र न प्राप्ता भृतगगनमहा(ही?)गुहा कुन्दशङ्खशशि-सुन्दरी । 2) द्वौ त्रिमात्रौ इत्यत्र अत्र तावत् तगणद्वयस्य स्थाने पगणः ऽऽ॥ एवंविध. क्षेप्यते तदा तगण-द्वयव्यवहारो न भवति । अतः पृथग्ग्रहणम् । एवमन्यत्रापि ज्ञेयम् । 3) पिच्छ पीवेत्यत्र पश्य पीवरमहापयो-धरा कस्य कस्य न हे वयस्य मनोहरा विस्फुरत्सुरचापकण्ठिकाभूषणा नभसः श्रावणमासस्य गगनस्य च श्रीः सा उपस्थिता प्रकटिता । 4) न मुणिज्जइ गलाउत्ति – न ज्ञायते गलात् रत्नमाला गलिता न गण्यते भग्नकोऽपि मणिवलयनिकरो न च ज्ञायने अंशुकाञ्चलोऽपि विलग्नकः कण्टकादौ । हे चौलुक्यकुलाम्बरदिनमणे कुमारपाल तवालोकननिमित्तं धावन्तीभिर्मकरध्वजबाणविद्धहृदयाभिर्नारीभिर्हर्षन्तीभिः ।

१ छुन्दरात N; छुन्दरा. D. २ पेच्छ BEP; पीच्छ N. ३ कंचिआ S. ४ चावला FN. ५ F adds यमितेंह्नौ after च. ६ जानिज्जइ A. ७ चालुक BCDP. ८ धावंतहिँ A. ९ चगणचतु० CDP.

[1]मसिसव्वं[1]भयारि घणतिमिरमालिआओ,
उ[2]अह समुल्लसंति दुव्वारमालिआओ ।
[3]वासयपंजरेसु सुत्ताओ सारिआओ,
तह अविलं[4]बिआओ जंति अहिसारिआ[5]ओ ॥ ३९.१ ॥

**गन्तचः पचुपाः खण्डोद्गतम् ॥ ४० ॥**

गुर्वन्तश्चतुर्मात्रः पञ्चमात्रः चतुर्मात्रपञ्चकं पञ्चमात्रश्च । समे जो लीर्वा खण्डोद्गतम् । यथा –

[2]खंडुग्गयं[6]मिंदुबिंबमिणमज्जवि अहिणवकिंसुअकुसुमसरिसयं,
न हु जा चंदिमाइ तिमिरभरं किर परिदलिऊण पयडइ हरिसयं ।
वम्मीसरभडस्स सरनिअरेहिं अइदूसहिहिं पहरिज्जंतओ,
अहिअं ता संपइ अहि[7]सरणे पयट्टइ जुवइजणो तुवरंतओ ॥ ४०.१ ॥

**च[8]पाचीपाः प्रसृता ॥ ४१ ॥**

चतुर्मात्रः पञ्चमात्रद्वयं चतुर्मात्रचतुष्टयं पञ्चमात्रश्च प्रसृता । यथा –

[3]जं किर मुद्धिआइ तीए अहिणवमहुसमयलच्छितुवरिज्जंतओ,
पसरि[9]अमलयमारुओ न हु सुहाइ तुह विरहंमि सुरूवं छिवंतओ ।
तस्स व चिंतिऊण पडिखलणकारणं किरइ रुद्धनहयलवहाओ,
किर उण्हु[10]ण्हिआओ घणनीससिअसमीरलहरीओ अइदूसहाओ ॥ ४१.१ ॥

**चुर्दो नौजे जो लम्बिता ॥ ४२ ॥**

पञ्च चतुर्मात्राः द्विमात्रश्चैको नौजे जगणश्चेल्लम्बितागलितकम् । यथा –

[4]कइलासतुलणपयडिअवहुवाहपएणं,
संजणिअतिअसमंडलवहुवाहपएणं ।

1) मसिसव्वंभयारीत्यत्र मषीसब्रह्मचारिघनतिमिरमालिकाः पश्यथ समुल्लसन्ति दुर्वारं यथा स्यात्तथा। हे मालिकाः सख्यः वासकपञ्जरेषु सुप्ताः शारिकाः । तथा अविलम्बिताः त्वरिताः यान्ति । याः कामाक्रान्ताः स्वयं भर्तारं प्रतिव्रजन्ति ता अभिसारिका उच्यन्ते । 2) खंडुग्गयमित्यत्र । अर्धोद्गतं चन्द्रबिम्बं इदं अद्यापि अभिनवकिंशुककुसुमसदृशं न निश्चितं यावत् चन्द्रिकया तिमिरभर किल परिदाल्य प्रकटयति हर्षम् । वम्मीसरशब्दो देश्यः कामवाचकः । स एव भटस्तस्य बाणनिकरैः । कथंभूतैरतिदुःसहै. । ताड्यमानः अधिकं यथा स्यात्तथा तस्मात्संप्रति अभिसरणे भर्तुर्युवतिजनः प्रवर्तते त्वरमाणः । 3) जं किर मुद्धिआइ इत्यत्र हे सुभग यस्मात्कारणात् । किलेति निश्चये । तस्या मुग्धिकायाः तव विरहे मलयमारुतः छिवन्निति अङ्गे लगन्नपि न सुखायते । कथंभूतः । अभिनववसन्तलक्ष्म्या त्वरमाण. । तस्मात्कारणात् तत्प्रतिस्खलनकारणं ध्यात्वा रुद्धनभस्तलपथाः उष्णोष्णिका अत्युष्णा अतिदु'सहा निश्वासवायुलहरीः करोति ( किराति ? ) । 4) कइलासतुलणेत्यत्र कैलासतोलने प्रकटितं बहुतर वाहापदं वाहाव्यापारो येन संजनितत्रिदशमण्डलवधूबाष्पपयसा आलम्बितक्षयकारणदशाशतेन । वणे इति निश्चये । नीता सीता दशास्येन वने कानने ।

१ सव्वम्भयारि A; सवंभयारि K, सव्वम्भयारि DN. २ ओअह BDN ३ The line is dropped in D. ४ अवलंबिआओ AC. ५ अहिसारिओ C. ६ खंडुग्गय DP ७ अइसरणे B. ८ चपा. चीपा. H. ९ सरुव A. १० उण्हुण्हित्ताआओ B.

आलंविअखयकारणदसासएण वणे,
नीआ सीआ तेणं दमासएण वणे ॥ ४२.१ ॥

**सौजे पैर्विच्छित्तिः ॥ ४३ ॥**

सैव लम्बिता ओजे पगणैः विच्छित्तिर्गलितकमंहौ यमिते । यथा–

[1]रणरणंति जत्थ पमत्ता कुसुमेसु मिलीमुहा,
होंति जत्थ लोअदूसहा कुसुमेसुसिलीमुहा ।
विच्छित्तिपरो तरुणिअणो विणा वि हु महु समओ,
विब्भमइ जत्थ समुत्थरइ एस इह महुसमओ ॥ ४३.१ ॥

**चापचपदा ललिता ॥ ४४ ॥**

चद्वयं पचपदाश्चांहौ यमिते ललितागलितकम् । यथा–

[2]मत्तमयरपुच्छच्छटोहभग्गवणराइअं,
तीरसहंतलवंगलवलिकणइवणराइअं ।
नहमंडलगरुअनिरंतरविविहघणवालयं,
उअहिं पेच्छ ललिअंगत्ति एअं वणवालयं ॥ ४४.१ ॥

**उभे विषमा ॥ ४५ ॥**

उभे विच्छित्तिललिते ललिताविच्छित्ती वा संकीर्णे विषमागलितकमंहौ यमिते । यथा–

[3]तरलं दीहत्तणेणं पाविअकण्णमग्गं,
विसमत्थमोहसायरे करेइ कं ण मग्गं ।
एअं तुह नयणजुअलयं सुंदरि कालसारं,
सोहाविणिज्जिअलोअणं निंदइ कालसारं ॥ ४५.१ ॥

अत्र पूर्वार्द्धे ललिता अपरार्द्धे विच्छित्तिः ॥ ४५.१ ॥

1) रणरणन्ति शब्दं कुर्वन्ति यत्र प्रमत्ताः पुष्पेषु भ्रमरा भवन्ति तत्र लोकदुःसहाः कुसुमेषोः कामस्य बाणाः । विच्छित्तिः पत्रभङ्गादिरचना तस्याः परायणः तरुणीजनो विनापि मद्यं समदः मदसहितः विभ्रमति यत्र विस्तरति एष स इह मधुसमयः । 2) मत्तमयरपुच्छेत्यत्र उदधिं पश्येति सटङ्कः । कथंभूतम् । मत्तमकर-पुच्छच्छटाघेन भग्ना वनराजिका यत्र सः तथा तम् । तीरे राजमाना लवङ्गलवल्यो कणइत्ति वल्लिविशेषश्च तासां वनं गर्जितं तत एतयोर्द्वन्द्वः (?) । नभोमण्डले ये गुरुका निरन्तरा विविधा घना मेघास्तेषां पालकं वर्तकम् । मेघानां हि समुद्रादेव वृत्तिभवनात् । वना व्याला जलचरसर्पा यत्र स तथा तम् । 3) तरलं दीहत्ति – हे सुन्दरि इदं नयनयुगलकं चञ्चलं दीर्घत्वेन प्राप्तकर्णमार्गं विषमास्त्रमोहसागरं करोति कं न मग्नम् । एतत्तव कालगुणेन सारं प्रधानं किं च शोभाविनिर्जितं लोचनं यस्य स तं कृष्णसारं हरिणं निन्दति ।

१ गिलि० AE २ The line is dropped in D. ३ लोहदूसहा N ४ गिलि० E. ५ तुरणि-अणो D. ६ विणा dropped in D ७ समुत्थइ A. ८ च्छटोहभ० DP, च्छडाभ० BE. ९ राइअं A. १० वणराइ dropped in S; वणराइअं A ११ पिच्छ E. १२ ललियगति A. १३ पर्ज N. १४ विषम-ग० B; विषमाललितक० A.

**तीचौ मुक्तावली ॥ ४६ ॥**

चत्वारस्त्रिमात्राश्चतुर्मात्रश्चैको मुक्तावलीगलितकम् । यथा –

[1]चंदणयं पिहु न हु सा सहए,
गंडयलं करकलिअं वहए ।
धरइ न मुत्तावलिअं हिअए,
तुज्झ तणुं चिअ लिहिअं निअए ॥ ४६.१ ॥

**पिचौ रतिवल्लभः ॥ ४७ ॥**

त्रयः पञ्चमात्राः चगणश्चैको रतिवल्लभो गलितकम् । यथा –

[2]दीसए एस तरुणिअणदुल्लहओ,
पच्चक्खतणू[1] चेव रइवल्लहओ ।
जो भणइ मयणो हरेण परिअड्ढो[2],
सो मामि[3] जणो निच्छईण[4] अविअड्ढो ॥ ४७.१ ॥

**पौ चषौ हीरावली ॥ ४८ ॥**

द्वौ पञ्चमात्रौ चतुर्मात्रषण्मात्रौ च हीरावलीगलितकम् । यथा –

[3]कुवलयदलनयणे पयावइणा कयं,
वहुरयणमयं[5] पिव तुह वयणपंकयं ।
जंसि[6] मणहरदसणाहरकुंतलया,
हीरावलिविद्दुम[7]दलइंदनीलया ॥ ४८.१ ॥

दण्डकार्यादिभ्योऽन्यच्च सयमकं गलितकमित्येके[8] ॥ ४८.१ ॥

**गलितकप्रकरणम् ।**

*

**गलितकमेवायमकं सानुप्रासं समांह्रि खञ्जकम् ॥ ४९ ॥**

पूर्वकाण्येव[9] गलितकानि यमकरहितानि सानुप्रासानि यदि भवन्ति[10] तदा खञ्जक-संज्ञानि[11] ॥ ४९ ॥

तथा गण्डतलं कपोलभागं करतलगतं
1) चंदयणं (णयं) पि हुत्ति – चन्दनं सा न सहते अर्थादङ्गे । तथा गण्डतलं कपोलभागं करतलगतं
वहते शोकाकुलत्वात् । धरति न मुक्तावलिकां हृदये तव तनुमेव लिखितां पश्यते । हृदये कीदृशे । निजके ।
2) [दीसइत्ति –] दृश्यत एष तरुणीजनानां दुर्लभ. प्रत्यक्षतनु. निश्चयेन रतिवल्लभः । य एवं वक्ति 'ईश्वरेण
परिदग्धः' स पुमान् मामि मन्ये निश्चयेनाविदग्धकः । मूर्ख इत्यर्थः । 3) कुवलयेत्यत्र हे कुवलयदलनयने
ब्रह्मणा बहुरत्नमयमिव कृतं तव वदनपङ्कजं यस्मिन्मनोहरदशनाधरकुन्तलकाः सन्ति । कीदृशाः । हीरावलिविद्रुम-
दलेन्द्रनीलका इवेत्यर्थः । इति गलितकप्रकरणम् ।

१ तणू चेअ B. २ परिअट्टो D. ३ सामि N. ४ मिच्छइण NS; निच्छएण E. ५ वहुरणमयं D. ६ रंजसि S. ७ विद्दुमदल B, ८ इत्यन्ये A. इति dropped in P. ९ पूर्वाण्येव F. १० स्यु. EF. ११ खञ्जकनामानि A.

खञ्जकविशेषानाह –

**तौ चितगाः खञ्जकम् ॥ ५० ॥**

त्रिमात्रगणद्वयं चतुर्मात्रत्रयं त्रिमात्रो गुरुश्चायमकं सानुप्रासं खञ्जकम् । यथा –

[1)]मत्तमहु[1]अमंडलकोलाहलनिब्भरेसुं,
उच्छलंतपरहुअकुडुं[2]वपंचमसरेसुं ।
मलयवायखंजीकयसिसिरवआ[3] घणेसुं,
विलसइ का वि चित्तसमयंमि सिरी वणेसुं ॥ ५०.१ ॥

**पचपचपा महातोणकः[4] ॥ ५१ ॥**

पञ्चमात्रचतुर्मात्रपञ्चमात्रचतुर्मात्रपञ्चमात्राश्चेन्महातोणकः । यथा –

[2)]तुह पयावेण वि दुव्वदूसहेण महिवलए,
दड्ढदरि[5]अवेरिमंडलेण इह पसाहिए ।
महातूणयदरिविवरमज्झंमि अहोमुहा,
लज्जिअव्व ठिआ[6] नरनाह तुज्झ सिलीमुहा ॥ ५१.१ ॥

**चीगौ सुमङ्गला ॥ ५२ ॥**

चगणचतुष्टयं गुरुश्च सुमङ्गला । यथा –

[3)]चीणं चएसु निवसेसु कंवलं,
चालु[7]क्करायमणुसर महावलं ।
मूढ वहसु मा[8] माणविसवंघलं,
अत्ताणयस्स चिंतेसु मंगलं ॥ ५२.१ ॥

**चौ पः खण्डम् ॥ ५३ ॥**

चतुर्मात्रद्वयं पञ्चमात्रश्च खण्डं नाम खञ्जकम् । यथा –

[4)]नच्चाविअचंदणवणो[9],
मच्चाविअमहु[10]अरगणो ।

1) मत्तमहुअमंडलेत्यत्र उन्मत्तभ्रमरश्रेणिकोलाहलेन व्याप्तेषु, उच्छलत्कोकिलकुटुम्बस्य पञ्चमस्वरो येषु तेषु, मलयवायुखञ्जीकृतशिशिरपदा लक्षणया तिरस्कृतः शिशिरस्य ऋतोः पदं व्यापारो यया सा, निबिडेषु विलसति कापि चैत्रसमये श्रीः शोभा वनेषु । 2) तुह पयावेणेत्यत्र तव प्रतापेनापि दवबदुःसहेन दग्धदस्यवैरिमण्डलेन महीवलये [प्र]साधिते सति । तूणको भस्त्रकः स एव दरी गुहा [ तस्याः ] विवरमध्ये अधोमुखाः लज्जिता इव नरनाथ बाणास्तिष्ठन्ति । 3) चीणं चएसु इत्यत्र चीनांशुकं त्यज परिधेहि कम्बलं कुमारपालमनुसर । हे मूढ मानं मा वह विह्वलं त्वं विशृङ्खलं वा । आत्मनश्चिन्तय मङ्गलम् । 4) नच्चाविअत्ति । अत्र नर्तितचन्दनवनो मदं प्रापितमधुकरगणः खण्डितमनस्विनीमानकः वाति दक्षिणः पवनः ।

१ मत्तमहुअरसं० A २ कुडुंव D, कुटंव CS; कुडंव BE ३ सिसिरपया A; ससिरपया E. ४ महातोणः F. ५ दढदरिय A. ६ ट्ठिया P ७ चोलुक्क AN. ८ मा dropped in S. ९ नंदणवणो A. १० माहुअर० A.

खंडिअमाणिणिमाणओ,
वाअइ दाहि[1]णपवणओ ॥ ५३.१ ॥

**षचता उपात् ॥ ५४ ॥**

षण्मात्रः चतुर्मात्रः त्रिमात्रश्च उपात्खण्[2]डकम्। उपखण्डकमित्यर्थः। यथा–

[1)]साहीणो चित्तण्णुओ,
पणओ खंडिअमन्नुओ।
माए पयर[3]णदुल्लहो,
[4]कत्तो लब्भइ वल्लहो ॥ ५४.१ ॥

**षश्चौ खण्डिता ॥ ५५ ॥**

एकः षण्मात्रो द्वौ [5]चतुर्मात्रौ खण्डिता[6]। यथा–

[2)]उज्जा[7]गरकसायनयणं,
हिअयलग्गजाव[8]यचलणं।
खंडिआइ दट्ठूण पिअं,
मरणयंमि हिअयं निहिअं ॥ ५५.१ ॥

**त्रयोऽप्यवलम्ब[9]कः ॥ ५६ ॥**

त्रयोऽपि खण्ड-उपखण्ड-खण्डि[10]ता-भेदाः प्रत्येकमवलम्बकसंज्ञाः। [3)]संज्ञाप्रयोजनं द्विपदीखण्डे ॥ ५६ ॥

**षश्चीर्युग्जो लीवो हेला ॥ ५७ ॥**

षण्मात्रः चतुर्मात्रचतुष्टयम्। तथा युक् समस्थानगतो जो लीवो हेला। यथा–

[4)]कोअंडं पसूणरइअं गुणो महुअरा,
बाणा कामिणीण नयणा विला[11]संगहिरा।
सयम[12]तणू जडो सहयरो तुसारकिरणो,
हेलाए तहावि भुवणं जिणेइ मयणो ॥ ५७.१ ॥

1) साहीणो चित्तेत्यत्र स्वाधीनः चित्तज्ञः। पणओ स्नेहलः। खण्डितमन्युकः मयि सकोपे सति इति शेषः। हे मातः प्रकरणे उत्सवसमये दुर्लभः परदेशगतत्वात्। कुतो लभ्यते वल्लभः। 2) उज्जागरेत्यत्र निद्राभावेन कषायनयनं हृदयलग्नयावकचरणं परस्त्रीपादप्रहारात् खण्डितया दृष्ट्वा प्रियं मरणे हृदयं निहितम्। निद्रा- कषायमुकुलीकृतताम्रनेत्रो, नारीनखव्रणविशेषविचित्रिताङ्गः। यस्याः कुतोऽपि गृहमेति पतिः प्रभाते, सा खण्डितेति कथिता कविभिः पुराणैः। 3) संज्ञाप्रयोजनमित्यत्र एतेषां त्रयाणामप्युदाहरणानां अवलम्बक इति संज्ञा। अस्याः अवलम्बकसंज्ञायाः प्रस्तावो द्विपदीप्रकरणेऽग्रे। उदाहरणं रत्नावलीसंभवं यथा– कुसुमाउहपिअदूअयं इत्यादि ज्ञेयम्। 4) कोअंडं पसूणेत्यत्र कोदण्डं प्रसूनरचितम्। गुणः प्रत्यञ्चा मधुकराः। बाणाः कामिनीनां नयनानि विलासगभीराणि। स्वयमतनुः जडः सखा तुषारकिरणः। हेलया तथापि भुवनं जयति मदनः।

१ दाणिणपवयणओ S. २ खञ्जकसुप० C, षण्डकसुप० A. ३ पवरण N. ४ कत्ते S ५ चतुर्मात्रद्वयं E. ६ षण्डिता A. ७ उज्जागर ABK; उज्जग्गर DP. ८ जावयं चलणं N. ९ अविलम्बिक G. The Sūtra is dropped in D. १० षण्डिता A. ११ विलासमंगहिरा S. १२ समयतणू N.

**सान्ते दोनावली ॥ ५८ ॥**

सा हेला पादान्ते द्विमात्रोना आवली । यथा —

[1)]नववणमालिअ[1]त्ति कलिडं विहत्थओ,
सजलविलोअणेहिं पहिआण सत्थओ ।
गिम्हे दवहुआसमसि[2]मलिणसामलि,
पे[3]च्छइ हंत विंझसिहराण आवलिं ॥ ५८.१ ॥

**चूपगा विनता ॥ ५९ ॥**

चतुर्मात्रषट्कं पञ्चमात्रो गुरुश्च । समे जो लीर्वा विनता । यथा —

[2)][4]मुहसिरिकलावनिज्जिअदिवायरनिसायरं तइलोक्कवइं,
अक्खलिअसुद्धझाणा[5]णलेण नि[6]द्दड्डसयलकम्मुग्गइं ।
विणयामरिंदमणिमउडकंतिपब्भारपल्लविअचरणयं,
तं अणुसरामि भवजलहितारणं वद्धमाणमिह सरणयं ॥ ५९.१ ॥

**तौ चस्तौ विलासिनी ॥ ६० ॥**

द्वौ त्रिमात्रौ एकश्चतुर्मात्रः पुनर्द्वौ त्रिमात्रौ विलासिनी । यथा —

[3)]मत्तकोइलामहुरभासिणी,
हसइ किं पि सा जइ विलासिणी ।
[7]दोण्हि हुंति सोहग्गलण्हि[8]आ,
मल्लिआ तह य चंदजोण्हि[9]आ ॥ ६०.१ ॥

**तौ चितौ मञ्जरी ॥ ६१ ॥**

द्वौ त्रिमात्रौ त्रयश्चतुर्मात्राः पुनरेकस्त्रिमात्रो मञ्जरी । यथा —

[4)]चूअमंजरिं मंजुकोइलागीअयं,
मलय[10]मारुअं पुण्णविंवयं चंदयं ।

---

1) नववणमालिअत्ति इत्यत्र पथिकानां सार्थः विन्ध्याचलशिखराणामावलिं पश्यति । कीदृशीम् दवहुताशनमषीभिः मलिनाः कृष्णाः शाल्मलयो यत्र ताम् । क । ग्रीष्मे काले । सार्थः कीदृग् । विहस्त व्याकुलः । कथ(कलिड)मिति ज्ञात्वा । इतीति किम् । नववनमालिकां ज्ञात्वा । कैः साश्रुनयनैः । 2) मुह सिरिकलेति अत्र मुखश्रीकलापनिर्जितदिवाकरनिशाकरं त्रिलोकपतिं अस्खलितशुद्धध्यानानलेन निर्दग्धा सकल कर्मणि उद्गतिरुद्भवो येन स तम् । विनतामरेन्द्रमणिमुकुटकान्तिप्राग्भारेण पल्लवितं रक्तीकृतं चरणमेव स्वार्थे चरणकं यस्य स तथा । तं जिनमहं अनुसरामि भवजलधितारणं वर्धमानाभिधं शरणमेव शरणकम् । 3) मत्त कोइलामहुरभासिणीत्यत्र यदि सा मत्तकोकिलावन्मधुरभाषिणी विलासिनी हसति तदा सौभाग्येन श्लक्ष्णे कोमले द्वे भवतः एका मल्लिका द्वितीया चन्द्रज्योत्स्ना । 4) चूअमंजरिं इत्यत्र मधुमासे विषमास्त्रः काम एतानि उपकरणानि प्राप्य शीघ्रं त्रैलोक्यनिर्जयनसमर्थो भवति । तानि कानि । चूतमञ्जरीं मनोज्ञकोकिलागीत मलयाचलमारुतं पूर्णबिम्बं चन्द्रं च ।

---

१ मालइत्ति P. २ मसिमिलण P. ३ पिच्छइ E. ४ मुहसिरि DAS ५ झाणानलेण F ६ निद्दिडसय लकम्मुगाइं A. ७ दोन्ह A; दोन्नि BEP. ८ लाण्हिआ S. ९ जुण्हिआ. १० मलयकदय S.

पाविऊण महुमासि एत्थ विसमत्थओ,
हवइ झत्ति तेलोक्कनिज्जयसमेत्थओ ॥ ६१.१ ॥

**सा तान्ता सालभञ्जिका ॥ ६२ ॥**

सा मञ्जरी त्रिमात्रान्ता सालभञ्जिका। यथा—

1)चरणकमललग्गे वि हु पिअयंमंसि पकोविरी,
सालभंजिअव्व सहि कीस तुमं सि अजंपिरी।
सुणसु समुल्लसंति पिअमाहवीकुलकलयला,
मयणविजयदुंदुहिझुणी इव पूरिअनहयला ॥ ६२.१ ॥

**चादिः कुसुमिता ॥ ६३ ॥**

सैव मञ्जरी पादादौ चतुर्मात्रश्चेत्कुसुमिता। यथा—

2)मयपरिपुट्ठघुट्ठकलयंठीपंचमनिब्भरा,
विहडप्फडभमंतभसलावलिकलयलसुंदरा।
घणघोलंतमलयपवणोद्धुअकुसुमिअकेसरा,
हिअयं निम्महंति न हु कस्स इमे महुवासरा ॥ ६३.१ ॥

**षश्चुगौ द्वितीयषष्ठौ जो लीर्वा द्विपदी ॥ ६४ ॥**

एकः षण्मात्रः पञ्च चतुर्मात्राः गुरुश्च। तथा द्वितीयषष्ठौ चगणौ जो लीर्वा द्विपदी। यथा—

3)मा रे वच्च पहिअ निअदइअं परिहरिऊण सव्वहा,
इह हि समुत्थरंतकुसुमायरमाससमुहंमि अन्नहा।
परहुअजुवइगीअहालाहलविहलंघलिअचित्तओ,
चलसि न दुवइअं पि वम्मीसरसरनिउरंबछित्तओ ॥ ६४.१ ॥

---

1) चरणकमलेत्यत्र सखी प्रति सखी प्राह। चरणकमललग्नेऽपि प्रियजने भर्तरि कथं प्रकोपनशीला हे सखि कथं अजल्पनशीला। केव। पुत्रिकेव। हे सखि शृणु प्रियो माधवो वसन्तो यस्याः सार्थात् कोकिला तस्याः कुलानां कलकलाः शब्दाः समुल्लसन्ति पूरितनभस्तला. । इवोत्प्रेक्षते। कामविजयानकध्वनयः। 2) मयपरिपुट्ठेत्यत्र मदपरिपुष्टेन सघोषा या. कलकण्ठ्य. तासां पञ्चमस्वरास्तैर्निर्भरा व्याप्ताः। विहडप्फडो व्याकुले देश्यः। एवंविधा भसला भ्रमरास्तेषामावल्यस्तासां कलकलेन गुञ्जारवेण सुन्दराः। घनाश्च ते घोलन्तश्च एवंविधा मलयपवनास्तैरुद्धताः कुसुमितकेसरा येषु। एवंविधा वसन्तवासराः कस्य चित्तं न निम-(र्म)थ्नन्ति अपि तु सर्वस्येति भावः। 3) मा रे वच्च पहिय इत्यत्र रे पथिक मा वच्च मा याहि सम्यगुच्छलत्कुसुमाकरमाससमुखे वसन्तस्यादौ इत्यर्थः। निजदयितां परिहृत्य। कथम्। सर्वथा। तां मुक्त्वा चेद् गमिष्यसि तदा परभृतयुवतिगीतहालाहलविह्वलः सन् कन्दर्पशरसमूहताडित. सन् द्विपदिकामपि पदद्वयमितमेदिनीं न चलिष्यसि। ततो मा गच्छेत्यर्थः।

---

१ तेलुक्कनि० A, लोकनि० D, तेल्लोक्कविजय S २ समुत्थओ B ३ पिअयंमि CN, पियआमि A ४ सालिभंजि० D ५ सुण कीस स० A ६ कुलककल० DS ७ दुंदुभिवज्झिणी इव पूअनह० S ८ चतुर्मात्रेऽधिके सति. कु० F. ९ विहडप्फुड N, विहडस्फुड E १० पवणुद्धुअ E, पवणोद्धुअ N. ११ सारे N १२ परहूयजुवई A, परहुअजुवई P. १३ वलसि NS १४ निउरंब B

इहान्या[1] अपि सुमनः-तारा-ज्योत्स्ना-मनोवतीप्रभृतयः सप्तत्रिंशद् गणसमा द्विपद्यो विपुला-चपलादयोऽष्टावर्द्धसमाश्च कैश्चिन्निबद्धाः । ताश्च क्वचित्काश्चिदन्तर्भवन्तीति पृथङ् नोक्ताः ॥ ६४.१ ॥

**साद्ये न्ले छै रचिता ॥ ६५ ॥**

सा द्विपदी आद्ये चगणे न्ले लघुचतुष्टये सति छैः सप्तभिर्मात्राभिर्यतिश्चेद्रचिता । रतिकेत्यन्ये । यथा –

1) नच्चिरकीरमिहुणकोलाहलमुहलिअकलम[2]छेत्तओ,
दिस्मुहमहमहंतगंधुक्कड[3]विअसिअसत्तवण्णओ ।
विरइअमुद्धदुद्धसुंदेरिमॅ[5]अविरलकासहासओ,
पिअसहि मा पिअंसि परिकुप्पसु जं सरओ समागओ ॥ ६५.१ ॥

**गन्तारनालम् ॥ ६६ ॥**

सा द्विपदी गुर्वन्ता एकेन गुरुणा वृद्धा आरनालम् । यथा –

2) अविरलवाहवारिधारावलिविअलणसोणलोअणाए,
दारुणपंचवाणवाणाहॅ[6]यहिअयफुरंतवेअणाए ।
तुह विरॅहंमि[7] चंदमंदानिलचंदणतावजालिआए,
अहिणवमार नालवणयं पि तीइ तं कुणसि वालिआए ॥ ६६.१ ॥

**उपान्त्यलोना कामलेखा ॥ ६७ ॥**

सैव द्विपदी अन्त्यस्य गुरोः समीपमुपान्त्यं तत्र यो लः तेनोना कामलेखा ।

यथा –

3) राई चंदकिरणधवला मणहरणा पुप्फमाला,
नीलुप्पलपसूणपरिवासमहग्घा जुण्णहाला ।
गेहं रयणदीवरुइरं गीअं पंचमेणं,
तेण विणा असारमखिलं खु कामलेहाधरेणं ॥ ६७.१ ॥

1) नच्चिरकीरमिथुने(हुणे)त्यत्र नर्तनशीलशुकमिथुनकोलाहलमुखरितशालिक्षेत्राणि यस्यां सा । दिङ्मुखेषु उल्लसन्तो गन्धोत्कटा विकसिताः सप्तपर्णाः यस्यां सा । विरचिता मुग्धैः ग्रामलोकैः दुग्धानां सुन्द(न्दे)रिमेति सौन्दर्यं यत्र । काशेषु दुग्धगुणारोपः इत्यर्थः । सा चासौ अविरलकाशा एव हासः तौ उभौ यत्र सा । यस्मात्कारणात् एवंविधा शरत् समागता अत एव प्रियसखि प्रिये मा परिकोपं कुरु । 2) अविरलवाहेत्यत्र हे अभिनवमार कामसदृशरूप तस्या आलपनं अपि त्वं न करोषि । तस्याः कथंभूतायाः । अविरलबाष्पवारिधारावली[विगलनशोण] लोचनायाः । पुनः क० दारुणपञ्चबाणाहतहृदये स्फुरद्वेदनायास्तव विरहे सति चन्द्रमन्दानिलचन्दनानां तापैर्ज्वालितायाः । 3) राई चंदकिरणेत्यत्र चन्द्रकिरणैर्धवला रात्रिर्मनोहरा पुष्पमाला नीलोत्पलप्रसूनवाससमहर्घ्या जीर्णहाला मदिरा रत्नप्रदीप[रुचि]रुचिरं गृहं पञ्चमस्वरेण गीतम् । युक्तमित्यध्याहार्यम् । परं तेन भर्त्रा विना सर्वं अपि असारम् । कीदृशेन कामरेखाधरेण ।

१ इहान्यापि N. २ मुहलिअकमल० A, मुहलिअकमल० D ३ गंधक्कड B, गंधकुड C ४ विहसिअ ABDNP. ५ सुंदरिम NS. ६ वाणाहइहि० P. ७ विहरमि P ८ रुइ dropped in AK; रुइर रुइ N.

**षचीदाश्चन्द्रलेखा ॥ ६८ ॥**

एकः षण्मात्रः चत्वारश्चतुर्मात्राः द्विमात्रश्चैकः चन्द्रलेखा । यथा –

[1]मयणविआरसमुद्दलहरिवित्थारकारिणी,
जणिआणंदचंदमणिनिज्झरसारसारणी ।
उच्छलंतलायण्णमऊहावलिपसाहिआ,
मज्झ नयणकुमुआण इमा सा चंदलेहिआ ॥ ६८.१ ॥

**चिर्पताः क्रीडनकं जैः ॥ ६९ ॥**

चतुर्मात्रत्रयमेकः पञ्चमात्रः त्रिमात्रश्च । जैरित्यष्टभिर्यतिश्चेत्क्रीडनकम् । यथा –

[2]कंकणकिंकिणिनेउरकलयलमुहलं,
पवणपहल्लिरसिचयंचिअगयणयलं ।
दीहोच्छल्लणखेल्लणकयलोलणयं,
सहइ इमाए अंदोलणकीलणयं ॥ ६९.१ ॥

**पपचनदा अरविन्दकम् ॥ ७० ॥**

षट्पञ्चचतुस्त्रिद्विमात्राः अरविन्दकम् । यथा –

[3]उअह तुज्झ विरहे इमाइ मुहकमलं,
अविरलवाहधाराविलुलिअकज्जलं ।
अब्भलेहपिहिअं व पुण्णिमचंदयं,
सेवलसंवलिअं व नवारविंदयं ॥ ७०.१ ॥

**पलदलचदगाङ्गौ मागधनर्कुटी ॥ ७१ ॥**

षण्मात्रलघुद्विमात्रलघुचतुर्मात्रद्विमात्रगुरुभ्यः परौ गुरू चेन्मागधनर्कुटी । यथा –

[4]नवमयरंदपाणपायडमयउत्ताला,
भमरा रुणरुणंति कायलिकयसद्दाला ।

1) मयणवियारेत्यत्र मदनविकारसमुद्रलहरीविस्तारकारिणी जनिता निष्पादिता आनन्द एव चन्द्रमणिश्चन्द्रकान्तस्तस्य निर्झरो निष्यन्दः स एव सारसारिणी यया सा । उच्छलल्लावण्यमयूखश्रेणिभिः प्रसाधिता शोभिता । मम नयनकुमुदानां एषा चन्द्रलेखेव चन्द्रलेखिका आह्लादकत्वात् । 2) कंकणकिंकिणीत्यत्र एतस्या आन्दोलनक्रीडनं शोभते । कङ्कणकिङ्किणीनूपुराणां कलकलः शब्दविशेषस्तेन मुखरम् । पुनः कथंभूतम् । पवनेन प्रकम्पमानं यत्सिचयं परिधानवस्त्रं तेनाञ्चितं पूजितं गगनतलं यत्र तत् । दीर्घान्दोलनक्रीडाकृतालोडनकम् । 3) उअ तुज्झेत्यत्र पश्य तव विरहे एतस्या मुखकमलम् । कीदृशम् । अविरलं निरन्तरं बाष्पधाराभिर्विलुलितं कज्जलं यत्र । अभ्रलेखापिहितमिव पौर्णिमचन्द्रं अथवा सेवालपटलैः संवलितं आच्छादितं नवीनारविन्दमिव । 4) नवमयरंदेत्यत्र नूतनमकरन्दपानेन प्रकटो मदस्तेन उत्ताला मदोत्कटा ये भ्रमरास्ते रणरणं(ण)शब्दं कुर्वन्ति । कीदृशाः । काकलीकृतशब्दालाः । विरूपा दृष्टिर्यासां ता विदृष्टयः न विदृष्टयो अविदृष्टयः शोभनदृष्टय इत्यर्थः । चूताङ्कुरैः कषायः कण्ठो यासां ता एवंविधाः कलकण्ठ्यः कोकिलाः पञ्चमस्वरं उद्गिरन्ति शब्दं कुर्वन्तीत्यर्थः ।

१ समद्द S. २ णिब्भर DN; निब्भर CP. ३ नयनकु० N. ४ चिपचा N. ५ तुब्भ N ६ पिहिअव्वं D. ७ The whole line upto यथा is dropped in P. ८ कोइलि A.

पंचममुग्गिरंति एआ अविद्दिठी[1]ओ,
चूअं[2]कुरुकसायकंठा कल[3]यंठीओ ॥ ७१.१ ॥

**सश्चेन्नर्कुटकम् ॥ ७२ ॥**

षलदलचद्गात्सगण[4]श्चेत्तदा नर्कुटकम् । यथा –

[1]परिमललुद्धलोलअलिगीअसणकुडयं,
जाव न जग्गवेइ विसम[5]त्थसहाभडयं ।
माणं मोत्तुआण माणंसिणि सप्पण[6]यं,
पे[7]म्मभरेण ताव अणुसर स[8]हि वल्लहयं ॥ ७२.१ ॥

**षजौ सिः समात् ॥ ७३ ॥**

एकः षण्मात्रो जगणः सगणत्रयं च समान्नर्कुटकं समनर्कुटकमित्यर्थः । यथा –

[2]सयलसुरासुरिंदपरिवंदिअपायतलो,
निरुवमझाणना[9]णवसना[10]सिअकम्ममलो ।
निवसउ मे मणंमि भय[11]वं सिरिवीरजिणो,
विलयं जंति कामपमुहा जह ते अरिणो ॥ ७३.१ ॥

नलगजसाः ससौ यदि तदा समनर्कुटकमिति तु [3]संस्कृतनर्कुटेनैव गतार्थमिति नोक्तम् ॥ ७३.१ ॥

**त्रिष्वप्यन्त्यचस्य ते तरङ्गकम् ॥ ७४ ॥**

त्रिष्वपि मागधनर्कुटी-नर्कुटक-समनर्कुटके[12]ष्वन्त्यस्य चतुर्मात्रस्य स्थाने त्रिमात्र[13]श्चेद् भवति तदा तरङ्गकम् । यथा –

[4]वहुविह[14]भावसुद्धसहुरत्तणमंदिरं,
पवणु[15]द्धूअसामसरसीरुहसुंदरं ।
निम्मलकंतिपुंजपरिलद्धयचंगयं,
सोहइ तीइ दीहनयणाण [16]तरंगिअं ॥ ७४.१ ॥

1) परिमलेत्यत्र परिमलेषु लुब्धलोलभ्रमरगीतेन स्वनत् कुटजं कर्तृत्वेन न्यस्तं कन्दर्पमहाभटं न जागरयति तावत् हे मनस्विनि मानं मुक्त्वा सप्रणयं प्रेमभरेण सखि वल्लभं अनुसर भजेत्यर्थः । 2) सयलसुरेत्यत्र तथेति श्रीभगवान् वीरजिनो निवसतु । कीदृक् । सकलसुरासुरेन्द्रपरिवन्दितपादतलः । निरुपमध्यानज्ञानवशेन नाशितः कर्ममलो येन सः । तथेति किम् । यथा ते प्रसिद्धा अरयः कामक्रोधादयः विलयं यान्ति । 3) संस्कृतनर्कुटेनैवेत्यत्र नर्कुटमिति नाम जयदेवमते । स्वमते तु सप्तदशाक्षराणां जातौ 'न्जभ्जजा लावविततथम्' (२.२९७) । 4) वहुविहभावेत्यत्र वहुविधभावेन मुग्धं मनोहरं सुन्दरत्वं तस्य मन्दिरं गृहम् । पवनोद्धत-सरसीरुहसुन्दरं निर्मलकान्तिपुञ्जेन परिलब्धं चङ्गितं येन । तत् शोभते तस्या दीर्घतयनतरङ्गितम् ।

१ अविहीट्ठीओ S २ चूअंकुर A; चूअकर ES. ३ कलकंठीओ BE. ४ सगणो वर्णगणश्चेत् F. ५ विसमच्छ B. ६ मप्पणयं A ७ पिम्म० E. ८ सिहि B ९ झाणणाण P. १० णासिअ B. ११ भवयं N. १२९ नर्कुटेष्वन्त्यस्य P. १३ त्रिमात्रे सति F. १४ वहुविहु N; विह dropped in A. १५ पवणद्धूअ B; पवणुद्धुअ ADN १६ तरंगयं A.

**गान्तं पवनोद्धुतम् ॥ ७५ ॥**

**तरङ्गकमेव गान्तं अन्ते गुरुणाधिकं पवनोद्धुतम् । यथा–**

[1]भसला दंसयंति महुपाणपरव्वसाण,
उक्कंठातरलिअमणाण निअवल्लहाण ।
निब्भरमहुरगीईरवमुच्चरिउं इमासु,
दोलाकीलणाइं पवणुद्धुअवल्लिआसु ॥ ७५.१ ॥

**चाभ्यां पाभ्यां पाद्वा तिर्निध्यायिका ॥ ७६ ॥**

**द्वाभ्यां चतुर्मात्राभ्यां यद्वा पञ्चमात्राभ्यां एकस्माद्वा पञ्चमात्रात्परं त्रिमात्रत्रयं चेत् त्रिधाप्येषा निध्यायिका ॥ चाभ्यां तिर्यथा–**

[2]हं खामोअरि कुरंगनेत्तिए,
वयणमऊहजिअचंदकंतिए ।
निज्झाइअजीवाविअमणसिए,
दुसहो तुज्झ विरहानलो पिए ॥ ७६.१ ॥

**पाभ्यां तिर्यथा–**

[3]निज्झाइअइ जत्थ मयमयवल्लरी,
ललिअकंतिचंगे कलंकसोअरी ।
सेवंति तं तुह मुहचंदयं सया,
उंव्विववालहरिणच्छि चउ(ओ)रया ॥ ७६.२ ॥

**पात्तिर्यथा–**

[4]हरइ जम्मसयसंचिआइं,
भविआण असेसदुरिआइं ।
तुह मुहं जणिअमयणमाह,
निज्झाइअं पि भुवणनाह ॥ ७६.३ ॥

---

1) भसला दंसयंतीत्यत्र भ्रमराः पवनोद्धतवल्लिकासु सतीषु दोलाक्रीडनानि दर्शयन्ति । किं कृत्वा । निर्भरमधुरगीतिध्वनिमुच्चार्य । कासाम् । निजवल्लभानाम् । कीदृशीनाम् । मधुपानपरवशानां उत्कण्ठातरलित-मनसाम् । 2) हे खामोअरीत्यत्र हे क्षामोदरि तव विरहानलो दुस्सहो वर्तते । तव कथंभूतायाः । कुरङ्ग-नेत्रायाः वदनमयूखजितचन्द्रकान्तेः निध्यानेन अवलोकनेन जीवितो मनसिजः कामो यया तस्याः । 3 ) निज्झाइ-अईत्यत्र यत्र वदनचन्द्रे मृगमदवल्लरी कलङ्कसोदरा निध्यायते दृश्यते । कीदृशि मुखे । ललितकान्तिचंगे सुन्दरे । उत्त्रस्तबालहरिणाक्षि तस्मात्कारणात्तव मुखचन्द्रं सेवते(न्ते) । के । चउरया चतुराः केशाः (पक्षे P) चकोराश्च । 4 ) हरइ जम्मसयसंचियाइं इत्यत्र हे जनितमदनमाथ हे भुवननाथ हे जिनदेव । निज्झाइअत्ति – अवलोकितं सत् जन्मशतसञ्चितानि निःशेषदुरितानि भविकाना प्राणिनां हरति विनाशयति इति भावः ।

---

१ गन्तं C. २ मुहुपाण D ३ गीइरवणसु० B, गीअरवसु० A ४ पवणद्धुय D. ५ हो D; हे K. ६ नित्तिए B. ७ मिज्झाइअ A; निव्वाइय N ८ दूसहो-BN. ९ उव्विं च N, उव्विव ACDP. १० भविआइं A.

केचित्तु पचाभ्यां तिरिति निध्यायिकां वदन्ति । यथा–

[1]"वम्मीसरकंचणतोमरललिआ,
दिट्ठा छुडु सुंदरि चंपयकलिआ ।
घुलिओ छुडु दक्खिणओ गंधवहो,
विअलिओ[1] ता पहिआण मणोरहो ॥ ७६.४ ॥

**चुपौ युग्न जोऽधिकाक्षरा ॥ ७७ ॥**

पञ्च चतुर्मात्रा एकः पञ्चमात्रस्तथा समो न जगणोऽधिकाक्षरा । यथा–

[2]"उज्जागरओ कवोलपंडुत्तणं तणुअत्तं,
दीहुण्हा सासदंडया चित्तए विवसत्तं[2] ।
अहिअक्खरजंपिएण किं वा सुहय तुह विरहे,
सा एत्ताहे वराइआ[3] निअयं मरणं लहे ॥ ७७.१ ॥

**सा तुर्यपा[4] मुग्धिका ॥ ७८ ॥**

सा अधिकाक्षरा तुर्योऽपि चेत्पगणो भवति तदा मुग्धिका । यथा–

[3]"जीए लग्गेइ चंदणं गरलरसं व दूसहं,
अंगंपि अ[5] जीए तावइ ससी अणंगनीसहं ।
कयलीदलमारुओ वि किरइ हुअवहं पिव जीए,
दाहो मुद्धाइ एस कह समइ गुणालय तीए ॥ ७८.१ ॥

**आदौ पंश्चित्रलेखा ॥ ७९ ॥**

सा अधिकाक्षरा आदौ पंश्चेच्चित्रलेखा । यथा–

[4]"नहयलम्मि सयलदिसामुहेसु गहणम्मि गिरिवरे,
सरिपुक्खरिणिआसु[6] देवउलएसु भित्तिसु नयरे[7] ।
दूरम्मि पासे घरम्मि अंगणपएसए तुह
चित्तलिहिअं पिव मयच्छि पेच्छामि सुंदरं मुहं ॥ ७९.१ ॥

---

1) वम्मीसरकंचगेत्यत्र हे सुन्दरि यावत् कन्दर्पस्य काञ्चनतोमरवल्ललिता मनोहरा चम्पककलिका दृष्टा यावच्च दक्षिणतः गन्धवहो वायुः घूर्णति । छुडु देश्य शीघ्रार्थे निश्चये च । निश्चितं तावत्पथिकानां मनोरथो गलितः । 2) उज्जागरओ इत्यत्र कंचित्काचिद्याह । तव विरहे सति तस्या निद्राभावः कपोले पाण्डुत्वं दीर्घोष्णाः श्वासदण्डाः चित्ते विह्वलत्वं इत्यादयो दोषा भवन्ति । अहिअक्खरजंपिएणत्ति – अधिकप्रबन्धकथनेन किं वा । इदानीं सा वराकिका निश्चितं मरणं प्राप्स्यति चेत् त्वं नागमिष्यसीति भावः । 3) जीए लग्गेइ चंदणमित्यत्र यस्या अङ्गे गरलरसमिव चन्दनं दुस्सहं लगति । यस्या अङ्गमपि तापयति । कः । शशी चन्द्रः । कीदृशः । अनङ्गस्य नितरां सखा । कदलीदलमारुतोऽपि किरइत्ति हुताशनवद्दाहं करोति यस्या मुग्धायाः हे गुणालय । त्वया विना कथं एतदुपशाम्यति । 4) नहयलंमि सयलेत्यत्र नभसि सकलदिङ्मुखेषु गहने गिरिवरे नदी महती सरित् तुच्छजला पुष्करिणी वापी तासु । देवकुले भित्तिषु नगरे दूरदेशे पार्श्वे गृहे प्राङ्गणप्रदेशे एषु स्थानेषु हे मृगाक्षि चित्रलिखितमिव सुन्दरं तवाननं पश्यामि ।

---

१ विलिअिओ N; वियलिय A. २ विवसंतं N. ३ वराइया A ४ य A; dropped in P. ५ यः N. ६ सिरिपु० B. ७ भयरे S.

### पौ मल्लिका ॥ ८० ॥

साधिकाक्षरा आदौ पौ चेन्मल्लिका। यथा—

1) उब्भिज्जउ[1] मायंदमंजरी[2] पाडला दलउ[3] चिरं,
सा पायर्ड[4]विआससिरी अ[5] नोमालिआ वि निब्भरं।
विअसउ वसंतंमि फुडं मणहरा असोअवल्लिआ,
एक्क[6] च्चिअ भसलस्स माणसं हरइ हंत मल्लिआ ॥ ८०.१ ॥

### सा तुर्यपा दीपिका ॥ ८१ ॥

सा मल्लिका चतुर्थः पश्चेद्दीपिका। यथा—

2) मत्तवारिहरपंतिरुद्धहरिणंकमऊ[7]हसोहए,
रोअसीकंदरु[8]ल्लसंतघोरअंधयारवूहए।
रमणवासभवणाहिसारिआण रुइ[9]रविज्जुलेहिआ,
कामिणीण अवलोअकारिणी हवइ इह करदीविआ ॥ ८१.१ ॥

### ताभिर्लक्ष्मिका ॥ ८२ ॥

ताभिरधिकाक्षरादिभिः संकीर्णा लक्ष्मिका। यथा—

3) केसरकुरवयमायंदतिलयअसोअकोरया,
विरहाणलडज्झंतनिअंविणिजीविअचोरया[10]।
एदे किर दुप्पि[11]च्छा विलसंति मणोहवसरा,
जेसुं ते कह निग्गसिअव्वा महुल[12]च्छिवासरा ॥ ८२.१ ॥

अत्राद्यपादत्रये अधिकाक्षरा चतुर्थपादे मुग्धिका। एवमन्याभिरप्युदाहार्या केचित्सर्वैरपि खञ्जकभेदैः संकीर्णतायां लक्ष्मिकामिच्छन्ति ॥ ८२.१ ॥

### चतुष्पञ्चषट्सप्ताष्टनवपा मदनावतार-मधुकरी-नवकोकिला-कामलीला-सुतारा-वसन्तोत्सवाः ॥ ८३ ॥

चतुरादिपाः क्रमेण मदनावतारादयो भवन्ति। तत्र चतुर्भिः पञ्चमात्रैर्मदनावतारः।

1) उब्भिहिव्वउत्ति—माकन्दमञ्जरी उद्भिनत्तु। पाटला दलउत्ति—विकसिता भवतु। प्रकटा विकासश्रीर्यस्याः सापि नवमालिका लताभिद्। निर्भरं यथा स्यात्तथा विकसतु। क। वसन्ते। पर केवलं एकैव भ्रमरस्य मल्लिका मानसं हरति नान्येति भाव.। 2) मत्तवारिहरेत्यत्र मत्ता उत्कटा वारिगृहं(घर ?)पङ्क्तिभिः रुद्धा हरिणाङ्कमयूखास्तै. शोभिते [ मयूखाना शोभा यत्र तस्मिन् ed. ] रोदसी दिवस्पृथिवीरूपकन्दरात् उल्लसत्(द्)घोरान्धकारव्यूहे सति रुचिरविद्युल्लेखिका रमणवासभवनाभिसारिकानां कामिनीनां अवलोककारिणी करदीपिकेव इह भवति। 3) केसरकुरवयेत्यत्र। सखीं प्रति सखी प्राह। केसरकुरवकचूततिलकाशोकानां कोरका. पुष्पमुकुला येषु। विरहानलेन दंदह्यमाननितम्बिनीजीविततस्करा हे सखि एते दुःप्रेक्षा मनोभवशरा विलसन्ति येषु। ते मधुमासस्य चैत्रस्य लक्ष्मीर्येषु ते च ते वासराः कथं गमयितव्याः। प्रिय विनेत्यर्थः।

१ उब्भिहिव्वउ K २ मंजरपोला A ३ दलओ NS. ४ पयड P, पायडि० B ५ य A ६ इक्क च्चिअ A. ७ मयूह A ८ कंदरुससंत NS; कंदरुल्लसत K. ९ रुचिर A. १० चोरका A ११ दुप्पेच्छा AB १२ महुमास० B.

यथा –

[1]गिज्जंति गीईओ पिज्जंति मइराओ,
नच्चंति वेसाओ परिल्हसिअकेसाओ।
एवमन्नोन्नपरिरंभणासारए,
कीलंति रामाओ मयणावयारए॥ ८३.१ ॥

पञ्चभिर्मधुकरी। यथा –

[2]चरणेण वि नवफुडिअकुडयमपरिघट्टयंतिआ,
पक्खवाएण वि विहसिअकेअयमच्छिवंतिआ।
उअह झत्ति एसा निम्मलयरगुणाणुरंजिरी,
अहिसरइ विअसंतजाइकुसुमं चेअ महुअरी॥ ८३.२ ॥

षड्भिर्नवकोकिला। यथा –

[3]नवकोइलरवाउलमंजरिअमायंदतरुकंतारए,
सच्छंदमल्लिआमयरंदरसमत्तघोलंतछप्पए।
जिंभंतमलयद्दिसमीरणलोलनोमालिआवल्लिए,
संभरइ पंथिओ पिअयमं ओसहिं हिअयए सल्लिए॥ ८३.३ ॥

सप्तभिः कामलीला। यथा –

[4]मत्तपिअमाहवीपंचमोग्गारगुंजंतचूअहुमत्तंवओ,
मिउमलयमारुउद्धूअवल्लिप्पसूणग्गघोलंतरोलंवओ।
चारुकंकेल्लिसाहंतदोलासमंदोलणासत्तनारीअणो,
कामलीलासहो संपयं विलसए एत्थ एसो वसंतक्खणो॥ ८३.४ ॥

1) गिज्जंति गीईओ इत्यत्र गीयन्ते गीतयः पीयते मदिरा जनैः। परिल्हसितकेशाः स्रस्तकेशाः वेश्याः नृत्यन्ति नृत्यं कुर्वन्ति। तथा अन्योन्यं परिरम्भणं आलिङ्गनं यासां ता रामाः क्रीडन्ति। क्व। शारदे शरत्काले। कीदृशे। मदनावतारके। 2) चरणेण वि इत्यत्र। हे मित्र त्वं पश्य इयं सा मधुकरी अभिसरति। किं कुर्वन्ती। अपरिघट्टयन्ती। कम्। नवस्फुटितकुटजम्। केन। पादेनापि। पुनः किं कुर्वन्ती। अच्छिवंतीएत्ति– अस्पृशन्ती। कम्। विकसितकेतकम्। केन। पक्षपातेनापि। झत्ति शीघ्रम्। कीदृशी। निर्मलगुणेषु अनुरज्यते इति निर्मलगुणानुरञ्जिनी एवंविधा सती विकसितजातिकुसुमं प्रतीत्यर्थः। 3) नवकोइलरवेत्यत्र नूतनश्चासौ कोकिलरवाकुलश्चासौ माञ्जरितश्चासौ माकन्दतरुराम्रवृक्षस्तस्य कान्तारे वने। पुनः कथंभूते। स्वच्छन्दमल्लिकामकरन्दरसेन मत्ता उन्मत्ता घोलन्तः षट्पदा यत्र। जिभंतो दृश्यो लोले। स चासौ मलयाद्रिसमीरणो वायुस्तेन लोला नवमालिकावल्लिर्यत्र। एवंविधे वने पथिकः दयितां प्रियतमां स्मरति। क्व। हृदये। शल्यिते ओषधिं स्मरति तथेति भावः। 4) मत्तपिअमाहवीत्यत्र सांप्रतं अत्र कामलीलासख एष वसन्तक्षणो विलसति प्रवर्तते। मत्ता चासौ प्रियमाधवी कोकिला तस्याः पञ्चमोद्गारेण गुञ्जन् चूतद्रुमस्तम्बो यत्र सः। मृदुमलयमारुतोद्धूतवल्लीप्रसूनाग्रे घोलन् भ्रमरस्तम्बो यत्र सः। चारुकङ्केल्लिशाखान्तेषु या दोलास्तासामसमं यदान्दोलनं तत्रासक्तो नारीजनो यत्र स तथा।

१ केचित्तु सर्व॰ P  २ केअइम P.  ३ अच्छिविंतिआ A  ४ निम्मलगुणाणु K; निम्मलयलरगु॰ A.  ५ चिअ ACDN, चेव P.  ६ रसाउल A.  ७ जंभंत K.  ८ हियए P  ९ पंचमुग्गार E.  १० मारुओद्धुअ A; माओउद्धूअ N.  ११ णामत्त D.  १२ नारीजणो A  १३ एगोत्थए संत॰ A.

अष्टाभिः सुतारा। यथा–

[1]पिअयम कहं जासि एआइणि मं चइत्तूण देसंतरं पेच्छ निल्लज्ज,
सुरहिमासो पयट्टो असेसाणं जणाणं विलासेक्कदिक्खागुरू अज्ज।
एस सुविसट्टकंदोट्ट[1]कंकेल्लिमायंदघोलंतरोलंवगीइस्सणो,
जं सुतारो धणुदंडटंकारओ इह निसामिज्जए सुहडपंचे[2]सुणो॥ ८३.५॥

नवभिर्वसन्तोत्सवः। यथा–

[2]फुल्लिआणे[3]अकंकेल्लिमहुपाणमत्तालिझंकारकलगीइगिज्जंतकुसमाउहो,
मायंदनवमंजरीकसायकंठकलयंठीकोलाहलाउलिज्जंततरुसमूहो।
पिअयमपरिरंभणचुंबणाइप्पसंगसंगलिअरसनीसंदुद्धुसिअरोमकूवओ,
हलहलिअतरु[4]णिअणहिअय[5]ओ पवंचिअपंचमो विलसिओ वणेसुं वसंतयऊसओ॥८३.६॥

## खञ्जकप्रकरणम्।

**खञ्जकं दीर्घीकृतं शीर्षकम्॥ ८४॥**

खञ्जकान्यपि दीर्घीकृतानि शीर्षकसंज्ञानि॥ ८४॥

शीर्षकविशेषानाह–

**गीत्यन्तावबलम्बकौ द्विपदीखण्डम्॥ ८५॥**

[3]अवलम्बकद्व[6]यमन्ते गीतिश्चेत्तदा द्विपदीखण्डम्। यथा रत्नावल्याम्–

[4]कुसुमाउहपिअदूअयं, मउलावंतो चूअयं।
सिढिलिअमाणग्गहणओ, वाअइ दाहिणपवणओ॥

1) पियमम कहमित्यत्र। हे प्रियतम इदानीं मां त्यक्त्वा क्व यास्यसि हे निर्लज्ज प्रेक्षस्व यस्मान्मधुमासः प्रवृत्तः अशेषाणां जनानां विलासाय एकोऽद्वितीयो दीक्षागुरुः। किं च अज्जेति–अद्य। यस्मादेषः सुविकसितः। कन्दोट्टत्ति–देश्यः कमलवाची। विकसितकमलकङ्केल्लिमाकन्देषु घोलन् भ्रमराणां गीतिस्वनः श्रूयते। सुतारो दीप्र.। इवोत्प्रेक्षते। सुभटपञ्चेषोर्धनुर्दण्डटङ्कारव (क?)। इवा(वो)त्राध्याहार्यः। 2) फुल्लिआणेयकंकेल्लीत्यत्र वनेषु वसन्तोत्सवः प्रविलसितः। कीदृग्.। पुष्पितानेककङ्केल्लिमधुपानेन मत्तभ्रमरझङ्कारगीतिभिर्गीयमानकुसुमायुधो यत्र माकन्दनूतनमञ्जरीभि. कषायित. कण्ठो यासां ताः कलकण्ठ्य. तासां कोलाहलै. आकुलीक्रियमाणः तरुसमूहो यत्र। तथा प्रियतमानां पुंस्त्रीणां परिरम्भणचुम्बनादिप्रसङ्गात् संगलितरस. प्रस्वेदलक्षणः तस्य निस्यन्दः सर्वत प्रसरणं तेनोद्धूषिताः सिक्ता रोमकूपा यत्र सः। हलहलिअत्ति–व्याकुलस्तरुणीजनो यत्र सः। प्रपञ्चितः पञ्चमः स्वरो यत्र सः। 3) अवलम्बकद्वयमित्यत्र त्रयोऽपि खण्डोपखण्डखण्डिताभेदाः प्रत्येकमवलम्बकसञ्ज्ञाः। 4) कुसुमाउहपियदूययमित्यत्र कुसुमायुधप्रियदूतकं मुकुलयन् चूतकं सहकारम्। शिथिलितं मानग्रहणं यस्मात्। दक्षिणपवनो वाति विदलितवकुलापीडक.। आपीडकः पुष्पमुकुटः। ईप्सितप्रियतममेलकः सबन्धकृत् यत्र, प्रतीक्षणासमर्थ. युवतिसार्थ. ताम्यति खेदं प्राप्नोति। इतः दक्षिणपवनागमनानन्तर मधुमासो वसन्तः जनस्य हृदयानि मृदूनि करोति पश्चाद्विध्यति कामो लब्धावसरैः। कैः। कुसुमबाणैः।

१ कंकोट्ट NS २ सुहडपंचे repeated in D ३ आणेग A. ४ तरुणीअण N. ५ हियओ AB; हियअयओ P. ६ द्वयं dropped in A.

विअलिअवउलामेलओ, इच्छिअपिअयममेलओ ।
पडिवालणअसमत्थओ, तम्मइ जुअईसत्थओ ॥
इअ पढमं महुमासओ जणस्स हिअयाइं कुणइ मउआइं ।
पच्छा विधइ कामओ लद्धावसरेहि कुसुमवाणेहिं ॥ ८५.१ ॥

**द्विपद्यन्ते गीतिर्द्विभङ्गिका ॥ ८६ ॥**

[1]द्वौ द्विपदीगीतिरूपौ भङ्गावस्यां द्विभङ्गिका । यथा–

[2]दारुणदेहदाहपरिअंभणफुडफुट्टंतहारए,
हिअयत्थलनिहित्तघणचंदणपंकुच्चोडकारए ।
दीहरसासदड्ढसहिकरयलधुअविअणारविंदए,
तिणयणतइअनेत्तपत्तानलजालकरालचंदए ॥
विरहम्मि तुज्झ एरिसे तह झीणा कुवलयच्छ सदुहंगिआ ।
जह सण्हलक्खहणणयं तीए अंगंमि सिक्खइ अणंगओ ॥ ८६.१ ॥

**अन्यथापि ॥ ८७ ॥**

अन्यैरपि छन्दोभिर्द्वन्द्वितैर्द्विभङ्गी अन्यैरुक्ता । तत्र गाथाया [3]भद्रिकाया योगे यथा–

[4]उद्धाइअझंझानिलझडप्पझंपणपडंतविडवोहे,
अविरलवहलझलक्कंतविज्जुलावलयलझक्के ॥
सरहसरडंतदद्दुरे कणंतमोरे पडंतजलनिवहए,
गज्जंतमेहमंडले को जिअइ विणा पिएण पाउसम्मि ॥ ८७.१ ॥

---

1) द्वौ द्विपदीत्यत्र 'पञ्चुगौ द्वितीयपष्ठौ जो लीर्वा द्विपदी' (४.५५)। 2) दारुणदेहदाहेत्यत्र हे सुभग हे कुवलयाक्ष तव ईदृशे विरहे सा सुदुःखान्यङ्गानि यस्याः सा। तथा क्षीणा यथा तस्याः अङ्गे अनङ्गः सूक्ष्मलक्ष्यहननकं शिक्षति । एतावता अतीव कृशा जातेत्यर्थः । कीदृशे विरहानले । दारुणदेहदाहपरिरम्भणतः स्फुटं स्फुटन्तो हारा यत्र स तस्मिन् । हृदयस्थलनिषिक्तघनचन्दनपङ्कस्य । उच्छोडो देश्यः शोषे भ्रंशे च । शोषकारके । दीर्घश्वासैर्दग्धं सखीकरधुतव्यजनारविन्दं यत्र स तस्मिन् । त्रिनयनतृतीयनेत्रपत्रानलज्वालावत्करालो भालचन्द्रो यत्र स तस्मिन् । 3) भद्रिकाया योगे इत्यत्र एषा भद्रिका गीतिः द्वाभ्यां भद्रिकेति सूत्रेण (३.४) पगणद्वयाधिका गीतिः । 4) उव्वाइअझंझानिलेत्यत्र उध्द्मावल्येन वाहितो यो झंझानिलस्तस्य ये झडप्पझंपगे ताभ्यां कृत्वा पतन्तो विटपौघा यत्र । अविरलबहुलझलकंती या विद्युत् तस्याः वलयं तेन लझक्के भीषणे इत्यर्थः । इयं विपुला नाम गाथा । तथा सरभसं रटन्तो दर्दुरा यत्र । क्वणन्तः शब्दायमाना मयूरा यत्र । पतन्तो जलनिवहा यत्र । गर्जन्ति मेघमण्डलानि यत्र । को जीवति प्रियया विना प्रावृषि काले ।

---

१ जुवईस० AB २ कुणति P ३ उच्छोड K. ४ सहिकरयलधुअ A. ५ धुअ N. ६ तईअ A ७ लक्खहणणयं N, लपहुणणयं S ८ द्विभङ्गिका । तत्र E; द्विभङ्गी भवति । तत्र P ९ उव्वाइअ EK; उव्वाइय A. १० झप्पनंपण NS; झडप्पडंपण AK ११ पिअएण E.

1)वस्तुवदनकस्य[1] कर्पूरेण । यथा –

2)निक्कंदल कय कच्छ नलिणिवज्जिअ[2] कय सरसरि[3],
निच्चंदणु[4] किउ मलउ तुहिणवज्जिउ किउ हिमगिरि ।
निप्पल्लव किअ[5] करि पयत्तु कंकेल्लिविडविसय[6],
पत्तचत्त कय वालकयलि अकुसुम कय तरुलय ॥
सिसिरोवयारकिहिं परिअणिहिं निम्मुत्ताहल[7] कय भुवण ।
तो वि हु न तीई[8] तुह विरहभरि खसई[9] दाह दारुणविअण ॥ ८७.२ ॥

3)कुङ्कुमेन । यथा –

4)गयणुप्परि कि न चडहि किंनरि[10] विक्खरहि [11]दिसिहि वसु,
भुवणत्तयसंतावु[12] हरहि कि न किरवि[13] सुहारसु ।
अंधयारु कि न दलहि[14] पयडि उज्जोउ गहिल्लउ[15],
कि न धरिज्जहि देवि सिरेहं[16] सइं हरि सोहिल्लउ ॥
कि न तणउ होहि रयणायरह[17] होहि कि न सिरिभायरु ।
तु वि चंद निअवि मुहु[18] गोरिअहि[19] कु वि न करइ तुह आयरु ॥८७.३॥

रासावलयस्य कर्पूरेण । यथा –

5)परहुअपंचमसवणसभय मन्नउं स किर,
तिभणि भणइ न किं पि मुद्ध कलहंसगिर ।

---

1) वस्तुवदनकस्य कर्पूरेणेत्यत्र । 'पचिपा युज्यजच ओजे जो लीर्वा वस्तुवदनकम् (५.२५)। दाचदालदाचदालि कर्पूरो णैः' (७.२) । 2) निक्कंदल कयेत्यत्र निष्कन्दलाः कृताः कच्छा जलप्रदेशाः । नलिनीवर्जिताः कृता. सरःसरितः निश्चन्दनः कृतो मलयः मलयाचलः तुहिनवर्जित. कृतो हिमगिरिः । तथा प्रयत्नं कृत्वा निष्पल्लवानि कृतानि कङ्केल्लिविटपिगतानि पत्ररहिताः कृताः वालकदल्यः अकुसुमा. कृतास्तरुलताः शिशिरोपचारकृते परिजनैर्निर्मुक्तानि कृतानि भुवनानि । तथापि न तस्यास्तव विरहभरे स्रंसति दाहदारुणवेदना । 3) कुङ्कुमेन यथेत्यत्र 'सोन्त्यलोनः कुङ्कुम.' (७ ३) । 4) गयणुप्परीत्यत्र गगनोपरि किं न चटसि । किनरि इति पादपूरणे । विकिरसि दिक्षु वसूनि । भुवनत्रयसन्तापं हरसि किं न विकीर्य सुधारसम् । अन्धकारं किं न दलसि प्रकटीकृत्य उद्द्योतं ग्रहिलं भास्वरम् । किं न देवेन हरेण शिरसा ध्रियसे स्वयं शोभावान्सन् । कि न तनयो भवसि रत्नाकरस्य । भवसि कि न श्रीभ्राता । एवंविधस्त्व वर्तसे तथापि गौर्याः स्त्रिया मुखं दृष्ट्वा हे चन्द्र कोऽपि तवादर न करोति । 5) परहुअपंचमेत्यत्र । तेन कारणेन कलहंसवद्गीर्यस्या एवंविधा सती किमपि न वक्ति मां वदन्ती । अपरपरभृतपञ्चमश्रवणात् सापि वदिष्यति तस्याश्चैवंभूत. स्वभाव इत्यर्थः । तथा तेन कारणेन सा दर्पणे मुखं न प्रलोकयति यस्मात्सा शशिवदना । दर्पणे हि चन्द्रवन्मुखं भाति । यस्मात्सा साक्षात् चन्द्रं द्रष्टुं अशक्ता । तथा सा मृगनयना मनसि वैरिणं कुसुमशर मत्वा क्षणे क्षणे उत्त्रस्यति । रूपनिधित्वात् कुसुमशरस्तस्य सम्बोधनम् । तव दर्शनं अभिलपते ।

---

१ वस्तुवदनस्य DN २ नलिण B ३ मरवरि E ४ निच्चंदण E ५ किय AE. ६ विडवमय BEP. ७ णिम्मुत्तावलि N. ८ तीए B. ९ खिसइ A १० किनर वि० B, किनरि विक्खिरिहि P ११ दिसहि ABEP. १२ सताव E १३ विरचि S १४ दलिहि P १५ गहिउल्लओ DN. १६ सिरिहि P, १७ रयणारहु ON, रयणायरहु D. १८ मुह P. १९ गोरीअहि A; गोरिअहि N

चंदु न दिक्खण[1] सक्कइ जं सा ससिवयणि,
दप्पणि मुहु न पलोअइ तिंभणि मयनयणि ॥
वइरिउ[2] मणि मन्नवि[3] कुसुमसरु खणिखणि सा वहु उत्तसइ ।
अच्छरिउ[4] रूवनिहि कुसमसरु[5] तुह दंसणु[6] जं अहिलसइ ॥ ८७.४ ॥

कुङ्कमेन । यथा—

[1])जइ अ झलक्कहिं[7] नयण[8] दीहनयणिअहि[9] खणु,
केअइकुसुमदलम्मि[10] भसलु विलसइ त जणु ।
जइ तीए मुहि[11] [12] हावि मंढु हासउ[13] चडइ,
ता जणु हीरयपउमरायसंचउ झडइ ॥
जइ तीए[14] महुरमिउभासिणिहि वयणगुंफु[15] निसुणिज्जइ[16] ।
तांवह[17] करेप्पि[18] जणु अमयरसु कण्णपण्णपुडि पिज्जइ ॥ ८७.५ ॥

वस्तुवदनकरासावलयसंकीर्णस्य कर्पूरेण । यथा—

[2])अविहडअवरुप्परपरूढ[19]गुणगंठिनिवद्धउ,
एआरिण[20] हलि गलइ पिम्मु सरलिमवसलद्धउ ।
माणमडप्फरु तुह न जुत्तु उत्तिमरमणि,
तिंभणि वारउं वारवार वारणगमणि[21] ॥
अह करिहि[22] कलहु वल्लहिण सहुं इच्छि मयच्छि[23] इ पणयमुहुं[24] ।
माणिक्किमणंसिणि करिव[25] वलु हेल्लि खेल्लिता जूउ[26] तुहुं ॥ ८७.६ ॥

---

1) जइ अ झलक्कहिं इत्यत्र यदि दीर्घनयनायाः स्त्रिया नयनं अभीक्ष्णं दीप्यते तदा केतकीकुसुमदले भ्रमरो विलसतीति 'जणु' उत्प्रेक्षार्थः । उत्प्रेक्ष्यते । यदि तस्या मुखे हावेन हास्यं चटति तदा हीरकपद्मरागसंचयः झटति पततीत्यर्थः । जणु इवार्थे । तथा यदि तस्या मृदुमधुरभाषिण्या वचनगुम्फो नितरां श्रूयते तदा कर्णपर्णपुटं कृत्वा जनैरमृतरसः पीयते । 2) अविहडअवरुप्परेत्यादि अविघटपरस्परप्ररूढगुणग्रन्थिनिबद्धः अतिचारेण प्रस्तावादहंकारेण सरलिमवशलब्धं प्रेम हे सखि गलति । तेन कारणेन मानप्राग्भारः तव न युक्तो हे उत्तमरमणि । त्वां वारंवारं वारयामि । अथवा करिष्यसि कलहं यदा तदा हे हस्तिगमने प्रणतमुखं भर्तृमुखं इच्छ दृष्ट्वा हे मानैकमनस्विनि हे सखि वलं अपि कृत्वा क्रीडितुं युक्तं तव ।

---

१ दक्खिण D. २ वयरिउ A ३ मन्निवि P. ४ अच्छरिय A. ५ कुसुमसर BP ६ दंसण A ७ झलक्कदि S ८ नयणु P ९ दीणन० A १० दलग्गि Kd. ११ जइ य तीइ Kd; जइ तीइ A. १२ मुहहावि Kd. १३ हासु A १४ तीइ AKdP. १५ वयणगुंफु BPS १६ निसुनिज्जइ NS. १७ ता थुउ Kd. १८ करिप्पि BP १९ रुप्परप्प DN, रोप्परप्प B २० अइयारिण P. २१ वारणगामणि S. २२ अद करहि S. अह करहि P; अह किरिहि D. २३ मयच्छिए S २४ पणयमुहु EKd, पणयमुहं A २५ करि ठवलु हेल्लि खिल्लि BE. २६ ताजुउ तुहं C, ताजूओ तुहं D, ताजओ तुहं N; ता जूउ तुहं B.

**कुङ्कमेन । यथा –**

[1)]पंडिगंडयलपुलयपयरपयडणवद्धायरु,
कंचि[१]वालवालाविलासवहलिमगुणनायरु ।
द[२]विडिदिव्वचंपयचयपरिमलल्हसडउ,
कुंतलिकुंतलदप्पझड[३]प्पणलंपडउ ॥
मरहट्ठिमाणनि[४]ट्ठाहवयवि[५]हवविहंसणसक्कउ ।
कसु करइ न मणि हल्लोहल[६]उ मलयानिलहु झुलक्कउ ॥ ८७.७ ॥

**रासावलयवस्तुवदनकसंकीर्णस्य कर्पूरेण । यथा –**

[2)]तरुणिहूणिगंडप्पहु[७]पुंछिअतिमिरमसि,
उक्कझुलु[८]क्कावडणु दुसहु मा कर[९]उ ससि ।
मलयानिलु मयनयणि धुणि[१०]अंकप्पूरकयलिवणु,
संधुक्किअमयणग्गि [११]सहि इ मा तुज्झ तवउ तणु ॥
तणुअंगि म खडहडि पडहि तुह मयणवाणवेअण कल[१२]हि ।
चय माणु माणि वल्लहिण सहुं चडि म जीव[१३]संसयतुलह ॥ ८७.८ ॥

**कुङ्कमेन । यथा –**

[3)]सवणनिहिअहीरयहसंतकुंडलजुअल,
थूलामलमुत्तावलिसंडिअथणकमल ।

---

1 ) पंडु(डि)गंडलये(यले)त्यत्र । पाण्डुदेशोद्भवानां स्त्रीणां गण्डतले यत्पुलकप्रकरप्रकटनं तत्र बद्धादरः । काञ्चीपालानां काञ्चीदेशस्वामिनां या बालास्तासां विलासवहलिमगुणे नागर इव नागर । नागरा हि विलासभाजो भवन्ति । दविडित्ति द्रविडीदिव्यचम्पकपरिमललुण्ठाकश्चौरः । कुन्तलदेशोत्पन्नस्त्रीकेशदर्पदलने भ्रंशने लम्पटः । महाराष्ट्रीमानप्रतिज्ञाव्रतविभवविध्वंसनसक्तः आसक्तः । एवंविधो मलयानिलः कस्य मनसि करोति[न] हल्लोहलं आनन्दम् । सप्रसर( सर्वस्य )इति यावत् । 2 ) तरुणिहूणि इत्यत्र तरुण्यो हूण्यो हूणदेशजा नार्यः तासां गण्डात्प्रमार्जिततिमिरमपीक. । तासां मुखात् श्यामतापनीतेति भावः । उल्कावयवापातनं दुस्सहं मा करोतु भवत्याः शशी । हे मृगनयने कम्पितकर्पूरोपलक्षितकदलीवन. । कर्पूरं कदल्युद्भवमिति श्रुति. । संधुक्षितमदनाग्निः मलयानिलः ते तव तनुं तनु स्तोकमपि मा तापयतु । इ. पादपूरणे । हे सुभगे तव अङ्गे । मा निषेधे । खडहडेति अनुकरणे । मदनवाणवेदना पततु अत एव मानं त्यज । माने सति मा चट जीवसंशयतुलनम् । मरणावस्थामित्यर्थः । 3 ) सवणनिहिअहीरयेत्यत्र श्रवणे निहित हीरकै. शोभमान कुण्डलयुगलं यया सा । स्थूलामलमुक्ताफलावलीमण्डितं स्तनकमलं यया सा । श्वेतांशुकमेव प्रावरणं यस्याः सा । बहुलं श्रीखण्डेनोज्वला गौरेत्यर्थः । बहुप्रफुल्लविचकिलपुष्पैः पुष्पिता केशा यस्या सा । ततोऽनन्तर प्रकटीभूय । प्रियतमं पद्धत्ति – प्रति । अभिसारिका अभिसरति दर्शनजनितं खलजनानां डरो भयं तेन भारिता उत्कटा । अत्युत्कटवेपे सति खलानां दुरासहेति । चन्द्रेण सुन्दरायां निशायाम् ।

---

१ किचिवाल B  २ द्रविडि Kd, दविड D, दवडि BC  ३ कडप्पण Kd.  ४ निद्धाहवय N, निट्ठावय BK.  ५ विविह Kd  ६ हल्लाहलउ S  ७ प्पह A, D repeats हंसण to रासा after पुंछिअ.  ८ उक्कझलु० CDN उक्कचुलु० Kd, उक्कुझुलु० ABP  ९ करहु A  १० धूणिअ C, घुणिअ N  ११ दुसहु मा दहउ तुज्झ Kd.  १२ कलहु A, कलहइ D  १३ जीयसं० K

सेअंसुअपंगुरण वहलसिरिहंडरसुज्जल,
वहुपहुल्लवि[1]अइल्लफुल्लफुल्लाविअकुंतल ॥
तो पयड[2] धाइ दंसणजणिअखलयणडरभरसारिअ ।
अहिसरइ चंदसुंदरनिसिहिं पइं पिअयम अहिसारिअ ॥ ८७.९ ॥

वदनकस्य कर्पूरेण । यथा –

[1)] किं न फुल्लइ पाडल परपरिमल,
महमहेइ किं न माहवि अविरल ।
नव[3]मालिअ किं न दलइ पहिल्लिअ[4],
किं न उत्थरइ कुसुमभरि मल्लिअ ॥
दीहिअतलायसरतल्लडिंहिं[5] किं न पसाहि पउनिणि फुडइ ।
तु वि जाइ जायगुणसंभरणु झाणु कि भसलहु[6] मणि खुडइ ॥ ८७.१० ॥

कुङ्कुमेन । यथा –

[2)] जइ तुहुं महु[7] करयलु उम्मोडवि,
चल्लिअ चीरंचलु अच्छोडवि ।
माणिणि तु वि पसाउ करि सुम्मउ,
पइं पिइ उत्तावलिअ म गम्मउ ॥
जइ किंवइ वि संचवहं[8] पयजुयलु इहु विहिवसिण विहट्टइ[9] ।
ता तुज्झ मज्झु खीणउं[10] खरउ किं न खामोअरि तुट्टइ ॥ ८७.११ ॥

एतांश्च[11] वस्तुवदनककर्पूराद्या द्विभङ्गिकाः षट्पदा इति, सार्धच्छन्दांसीति च, सामान्याभिधानेन मागधानां प्रसिद्धाः । यदाह –

जइ वत्थुआण हेट्ठे[12] उल्लाला छंदयंमि किज्जंति ।
दिवड्ढच्छंदय[13]छप्पयकव्वाइं ताइं वुचंति ॥ ८७.१२ ॥ इत्यादि ।

1) किं न फुल्लइ पाडल इत्यत्र परः परिमलो यस्य सः पाटलः किं न पुष्पति । अविरला माधवी किं न महमहेइत्ति – गन्धं करोति । प्रहृष्टा सती नवमालिका किं न विकसति । कुसुमभरेण मल्लिका वृद्धिं न प्राप्नोति । तथा च दीर्घिकातडाकसर.पल्वलेषु । तटाकं खातं महत्सर. तदेव लघु सर. । 'सरदहतलायसोसं' इत्यत्र विशेष० तयो. । तल्लडं पल्वलं अखातं सरः तेषु प्रशाखाभिः पद्मिनी स्फुटति । परं तदपि जातेर्जातं गुणस्मरण यत्र एवंविधं ध्यानं भ्रमरस्य [ मनसि ] खुडइ खाद करोति ? अपि तु न । एतेषु पदार्थेषु सत्स्वपि जातावेव भ्रमरस्य ध्यानं नान्यत्रेति भाव. । 2) जइ तुह महु करयलेत्यत्र यदि त्वं मम करतलं उम्मोडविति-आमोट्य चलिता चीराञ्चलं अपि अच्छोडिअ(डवि)त्ति आकृष्य च । तथापि हे मनस्विनि प्रसादं कृत्वा शृणु हे प्रिये पइं त्वया औत्सुक्येन मा गम्यताम् । यदि कथमपि संचयात्सचाराद् वा इह पदयुगलं विधिवशेन विघटते स्खलतीत्यर्थः । तदा तव मध्यं उदर अतीव क्षीणं सत् किं न क्षामोदरि त्रुट्यति । कोऽर्थः । औत्सुक्यतः प्रयान्त्यास्तव यदि विसंष्ठुलतया पाद. पतिष्यति तदातीव क्षामोदर मध्यं त्रुटिष्यतीति शनैर्गच्छेति भावः ।

१ विअइफुल्ल D. २ पयडत्थय Kd; पयट पाइ S. ३ नवमल्लिअ N. ४ पहल्लिय N. ५ तल्लडहिं BP ६ भसलु हु CN ७ तुह मुह D, तुह मुहु N ८ सवहु A; सवह DN. ९ विसहइ A; विहइ N १० क्षीणउ A, खीणतु N ११ अत्र च F. १२ हिट्ठे F. १३ दिवड्ढच्छंदय AODN.

एवं मात्राया अप्युपरि द्विपद्युल्लालका वस्तुकादीनामप्युपरि दोहकादयो द्विभङ्ग्या-मेव द्रष्टव्याः। वृद्धानुरोधात्तु [1] रड्डा[१] पृथगभिधास्यत इति सर्वमवदातम्॥ ८७.१२॥

**द्विपद्यवलम्बकान्ते गीतिस्त्रिभङ्गिका॥ ८८॥**

पूर्वं द्विपदी पश्चादवलम्बकस्तदन्ते गीतिरिति त्रिभङ्गिका[२]। यथा—

[2] निब्भरदलिअसत्तदलपायवसंकडतडिणिपुलिणिआ,
सेहालिअपसूणपरपरिमलपुण्णपहायपवणया[३]।
कुवलयगंधलुद्धफुल्लंधुअपत्थुअगीतिभंगिआ,
पंकयवणकणंतकलहंसीकुलहुंकारसंगिआ[४]॥
ओहट्टिअचिक्खिल्लया[५], निम्मलजलसोहिल्लया,
रायरणूसवदूअया[६], कलमासोअपसूअया॥
तिहुअणलच्छीभवणया जोण्हाजलभरिअनहयलाभोअया,
कस्स न हरंति चित्तयं एए लोअंमि सारया दिअहया[७]॥ ८८.१॥

**त्रिभिरन्यैरपि॥ ८९॥**[८]

अन्यैरपि त्रिभिश्छन्दोभिः श्रुतिसुखैस्त्रिभङ्गिका। तत्र[९] मञ्जरीखण्डितान्ते भद्रिकागीतिः। यथा—

[3] उच्छलंतछप्पयकलंगीतिभंगिधरे[१०],
विप्फुरंतकलयंठिकंठपंचमसरे[११]।
गिज्जमाणहिंदोलालवणपसाहिए[१२],
चच्चरिपडहोद्दामसद्दसंखोहिए[१३][१४]॥

1) रड्डा पृथगभिधास्यत इत्यत्र 'आसां तृतीयस्य पञ्चमेनानुप्रासेऽन्ते दोहकादि चेद्वस्तु रड्डा वा' (५.२३) इति। 2) निब्भरदलिअ इत्यत्र एते लोके वसन्तवासरा. (?) कस्य चित्तं न हरन्ति अपि तु सर्वेषां हरन्तीत्यर्थः। कीदृशाः। निर्भर दलिता विकसिता ये सप्तपर्णपादपास्तैः संकुलं तटिनीपुलिनं येषु। तथा सेफालिकाप्रसूनप्रकृष्टपरिमलैः पूर्णाः प्रभातवायवो येषु। तथा कुवलयगन्धेषु लुब्धा ये पुष्पंधया भृङ्गास्तैः प्रस्तुताः प्रारब्धाः गीतीनां भङ्ग्यो येषु ते। तथा कमलवनेषु क्वणन्त्यः शब्दं कुर्वन्त्यो याः कलहंस्यस्तासां ये हुंकाराः शब्दाः तेषां सङ्गः सम्बन्धो येषु ते सङ्गिनः। तथा ओहट्टिअत्ति – निवृत्तः चिक्खिल्ल कर्दमो येषु ते स्वार्थे कः। निर्मलजलशोभनशीलाः। राजग(र)णोत्सवदूतकाः कथयितारः। कलमामोदान् प्रकर्षेण सूचयन्तीति कलमामोदप्रसूचकाः। त्रिभुवनलक्ष्मीगृहाः। ज्योत्स्नाजलभृतनभस्तलाभोगाः। 3) उच्छलंतछप्पयेत्यत्र ईदृशे चैत्रमासे यस्य पार्श्वे प्रियमानुषो न भवति अर्थात् कामिनी स कथं जीवति। कीदृशे चैत्रे। उच्छलत्षट्पदकलगीतिभङ्गिधरे, विस्फुरन्तः कलकण्ठीकण्ठात् पञ्चमस्वरा यस्मिन्सः तस्मिन्, गीयमानान्दोलारागालपनालंकृते चच्चरी-पटह-उद्दामशब्दवान् शब्दः एते त्रयोऽपि सख्याधिका यत्र स तस्मिन्, विकसितरक्ताशोकलते केसरकुसुमामोदमये विकसितमाकन्दवने वनः घोलन् दक्षिणपवनो यत्र हे सखि हे वयस्ये स कथं जीवति। कीदृशः। विद्धो मकरध्वजभल्लिकाभिः।

१ रड्डो A  २ त्रिभङ्गी A  ३ पवाहप० A, पदायप० N  portion from वणया to पंकय repeated in A  ४ संगीआ A.  ५ चिक्खिल्लिया KP  ६ गणूसव K.  ७ दीहया A  ८ This Sutra is dropped in G  ९ यथा तत्र A  १० कमलगीति० B, कलगीतिभंगधरे AKd  ११ कलयंठिकंठिप० B; कलयंठिपं० C  १२ सज्जमाणहिंडोला Kd.  १३ पडहुद्दाम Kd  १४ सखोहिए AKd.

विअसिअरत्तासोअलए, केसरकुसुमामोअमए ।
पप्फुल्लिअसायंदवणे, घणघोलिरदक्खिणपवणे ॥
इअ एरिसंमि चेत्तए जस्स न पासंमि अत्थि पिअमाणुसं ।
सो कह जिअइ वयंसिए विद्धो मयरद्धयस्स भल्लिआहिं ॥ ८९.१ ॥

**गाथस्याद्यार्द्धं समैर्ङ्गात् प्राग्वृद्धं गस्य ते पादः समशीर्षकम् ॥९०॥**

[1]गाथस्य प्रथमार्द्धमन्त्याद्गुरोरर्वाक् समैश्चगणैर्वृद्धमन्त्यस्य च गुरोः स्थाने ते त्रिमात्रे सति पादश्चेद्भवति तदा तादृशैश्चतुर्भिः पादैः समशीर्षकम् । यथा—

[2]सरसंयरसुरहिमुरसायतरुणमायंदमउलमंजरिदलोहकवलणकसायसंसुद्धकंठकलयंठिनि-
अरकंठोच्छलंतपंचमपलावबोल्लालियंमि रुंदारविंदमयरंदविंदुसंदोहपाणसाणंदभमर-
निउरंबबहलझंकारमुहलिउज्जाणचारुलच्छीए तिहुअणमणहरे,
दक्खिणसमुद्दकल्लोलमालिआतरुणसंगनिव्वविअसलयमारुअझडप्पहल्लंतविविहबहुवेल्लि-
गहणवणकुसुमगोच्छउच्छलिअपउरपिंजरपरायपडिहत्थदहदिसीचक्कदंसणुप्पण्णपि-
पिअयमाभरणमिलिअमुच्छापहारनिवडंतपहिअसंघायरुद्धमग्गंतरदूसंचरधरे ।
पप्फुडिअसघणकिंसुअसमूहकणिआरकुंजवरकंचणारकेसरलवंगचंपयपिअंगुमल्ली-
महल्लमाहविविआणकंकेल्लितिलयकुरुवयपिआलपुन्नागनागकेसरसुवण्णकेअइकुडंग-
पाडलतमालनोमालिउल्लपसरंतपरसपरिमलथवक्कसहमहिअसमत्तवणंतरे,

1) गाथस्य प्रथमार्द्धमित्यत्र चयोर्गाथः । गाथैव पूर्वार्द्धेऽन्त्यगात्प्राक् चगणद्वयस्य वृद्धौ गाथः (४.११)। समैरष्ट-दशादिभिर्न सप्त-नवादिभिः । 2) सरसयरसुरहीत्यत्र । एवंविधे वसन्ते सा वर्त्तेऽति मा याहीति क्रिया-सम्बन्धः । सरसतरा सुस्वादुः सा चासौ तरुणमाकन्दमुकुलितमञ्जरी तस्या दलौघ तस्य कवलनं तेन कषायितः संशुद्धः कण्ठो यासां कलकण्ठ्यस्तासां निकरः तस्य कण्ठात् उच्छलत्पञ्चमस्वराणां बोल्लालमिति बोल्लाः शब्दा-स्तद्वति, रुन्दानि विपुलानि यान्यरविन्दानि तेषां मकरन्दास्तेषां बिन्दवस्तेषां संदोहस्तस्य पानेन सानन्दं यत् भ्रमरनिकुरम्बं तस्य बहला झंकारास्तैर्मुखरिता उद्यानस्य चार्वी लक्ष्मीर्यत्र, त्रिभुवनजनमनोहरे, दक्षिणसमुद्रः कल्लोलमालिकया सह तरुणो नवो यः सगमेन निर्वापितः शीतीकृत. स चासौ मलयवायु [तेन] शीघ्रं हल्लन्त-कम्पायमाना. विविधा नानाप्रकारा बह्व्यो भूयस्यो या वल्लयस्तासां वनं गहनं तस्य वनकुसुमगुच्छात् उच्छलित-प्रचुरपिञ्जरपीतपरागस्तेन व्याप्तं यद्दशदिक्चक्रं तद्दर्शनादुत्पन्नं प्रियतमकान्तास्मरणं तेन मिलितः प्राप्तो यो मूर्च्छाप्रहारस्तेन निपतन्तो ये पथिकास्तेषां सार्थः तेन रुद्धमार्गान्तरेण दु.संचर. संकीर्णभाव. तस्य धरे धारके। प्रकर्षेण पुष्पिता. सघना निबिडा ये किंशुकवनमालिकान्ता वृक्षास्तेषा उल्ल आर्द्रः प्रसरन् परिमलो येषु ते एवंविधाः स्तबका गुच्छकास्तै महमहिअन्ति सुगन्धीभूतं समस्तवनान्तरं यत्र। मा वच्च हे कान्त इमां मां त्यक्त्वा । मां कीदृशीं मदनपीडिताम् । कीदृशे वसन्ते । तरुणीसार्थे चर्चरीविनोदेन सह स्पर्धया नाट्यो यो दण्डाभिघात-शब्दस्तदन्तराले तालानुलग्नघूर्णन्मृदङ्गोद्दामपाठेन प्रपन्ना या मञ्जुवसन्तरागभङ्गी आलपनरेखा तया संबद्धानि वेणुविवरोल्लसत्स्वरभेदसाधनस्थानानि तैः सहे समर्थे ।

१ मोयए A २ पप्फल्लिय C ३ दक्खण DNS. ४ चित्तए AKD ५ पिअमणुस्स B ६ अन्त्यस्य N. ७ अन्तस्य P ८ स्यात् F ९ सरसयसुरहि० N. १० वोलालयंमि P. ११ निउरंब BDS १२ तिहूअणमण० A; तिहुअणजणमण० CK. १३ दक्खिणकस० S १४ तरणसग ADNPS, तरलणसंग B १५ हलंत NS १६ दिहाचक्क P. १७ दंसणुप्पण्णुपि० CNS; दंसणुप्पन्नपि० A १८ दूसचधरे P. १९ पप्फुल्लिअसघण ACDNS. २० कुरवय BP, २१ घचक्क NS.

मा वच्च कंत चत्तूण मं इमं मयणपीडिअं तरुणिसत्थचच्चरिविणोअ-
समसीसनट्टदंडाहिघायसहंतरालताल[1]णुलग्गधुम्[2]मंतमद्दलोद्दाम-
पाडपडियन्नमंजुहिंदोलभंगिआलवणरेहसंवद्धवेणुविवरो-
ज्झसंतसरभेअसाहणट्ठाणसहंमि वसंतए ॥ ९०.१ ॥

अत्र समस्थाने जो लीर्वा तथान्त्या[3]च्चगणात्प्रागेकश्चगणो जो लीश्च न कर्तव्यः इत्याम्नायः ॥ ९०.१ ॥

मालागलितकपादान्ते विषमचावृद्धौ[4] वेः ॥ ९१ ॥

मालागलितकपादस्यान्ते विषमसंख्यस्य चगणद्वयस्य वृद्धौ सत्यां वेः परं समशीर्षकम् । विषमशीर्षकमित्यर्थः । [1]मालागलितकवच्चात्रापि समस्थाने जो लीर्वा । विषमे तु जगणो न कर्तव्यः । यथा –

[2]हयवरखुरखणिज्जमाणमहिरेणुपडलवहलिज्जमाणगयणं-
गणुत्थरिद[5]अविरलंधारपुंजसंवलणरुद्धलोअणविलोअणपवंच-
मच्छरिअपरवसो अवयर[6]इ समंतदो तुरिदसमरनिअरो,
निब्भरसंचरंतचउरंगसेन्नपब्भारचलिरं[7]नीसेसभूव[8]लयखडहडंत-
मंदरसुमेरुकइलासविंझ[9]गिरिनारपमुदिगिरिसिहरनिव-
डणाइभरभंगुरिदकंधराइं[10] तम्मइ वराहपवरो ।
धाणुक्का[11]वमुक्कनाराय[12]विद्धकरडिघडकुंभतडनिवडिदा[13]विरलरंध-
निज्झर[14]झरंतसोणिदतरंगिणीरइअवहलपंकखुप्पंतचक्करह-
संचराओ[15] एआओ भीसणाओ समरवसुहाओ,

1) मालागलितकवदित्यत्र । षाच्चृर्नोजे जः समे जो लीर्वा मालायाः (४.२४) । 2) हयवरखुरेत्यत्र अत्र संग्रामभूमौ अमरनिकरो अवतरति । कथम् । अच्छरियत्ति–आश्चर्यपरवशः यथा भवति । हयवराणां खुराः तैः खन्यमाना या मही तस्या रेणुपटलेन व्याप्यमानं यद् गगनाङ्गणं तद्योगादुल्लसिताविरलान्धकारपुञ्जस्य प्रसरणं तेन रुद्धनयनविलोकनप्रपञ्चो यत्रेति क्रियाविशेषणम् । त्वरितं यथा स्यात्तथेति । समंतदा(दो) सर्वत्र संग्रामे सति । वराहः प्रवरः तम्मइत्ति–खेदं प्राप्नोति । कथंभूत. । निर्भरं संचरच्चतुरङ्गसैन्यप्राग्भारेण चलितं यन्निःशेषभूवलयं तेन खडहडन्तो ये मन्दरकैलासविन्ध्याचलगिरिनारप्रमुखगिरीणां शिखरास्तेषां निपतनादिभिर्भारेण भङ्गुराः कन्धरादयो यस्य स तथा । कथंभूतायाम् । धानुष्का धनुर्धरास्तैरवमुक्ता नाराचास्तैर्विद्धकरटिघटाकुम्भतटात् आपतदविरलरन्ध्रनिर्झराः तेभ्यो झरत्-शोणितानि तान्येव नद्य. तासु रचितो यो बहुल पङ्कः तत्र चक्रस्खलनात् स्थितरथेन दुःसंचरायां एतस्यां समरवसुधाया सुविषमशीर्षकाणि हुंकारं कुर्वन्ति निपतन्ति इति त्वं पश्य । निशितकरवालधारयाभिघातः तेन घूर्णयन्त्य इमाः बहुविधसुभटकबन्धपङ्क्तयो नृत्यन्ति । कथंभूतायाम् । सुरवधूभिर्निर्मुक्तानि पारिजातानां कुसुमानि यस्यां तस्याम् ।

इत्याचार्यहेमचन्द्रविरचितछन्दोऽनुशासने चतुर्थस्याध्यायस्य पर्यायाः ॥

१ तालणुलग्ग A. २ घूमंत D. ३ तथा to लीश्च dropped in A ४ चवृद्धौ G ५ णुत्थदरि-अविलंवधा० A. ६ अवयरदि BP ७ वलिर N. ८ भूवलयनउहडंत B ९ विंध N. १० कंधराउ B ११ धणुक्का० NS. १२ ताराग N १३ निविडिदावि० D. १४ निब्भर ABN. १५ संवराओ N, संचराउ BCDF, सवराउ A, संचराए ( Loc also in the next 3 words ) K.

सुविसमसीसयाइं[1] निवडंति हुंकरंताइं पिच्छे[2] निसिदकरवालधारा[3]-
हियायघुम्मंतयाइं संपइ इमाओ नच्चंति वहुविहसुहड-
कवंधपंतीओ सुरवहूमुक्कपारिजायविडविकुसुमाओ[4] ॥ ९१.१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ
आर्यागलितकखञ्जकशीर्षकव्यावर्णनो नाम
चतुर्थोऽध्यायः ॥ ४ ॥
ग्रन्थाग्रं ५५१; उभयं २०९७ ।

*
* *
*

१ सुविसमसयाइं D, सुविसमसिसयाइं N. २ पेच्छ F ३ धराहियाय N ४ परिजायपविडवि D.

## अथ पञ्चमोऽध्यायः ।

### अथ प्रायोऽपभ्रंशे ॥ १ ॥

संस्कृतप्राकृतच्छन्दोऽनन्तरमपभ्रंशगतानि छन्दांस्यधिक्रियन्ते । प्रायोग्रहणाद्भाषान्तरेऽपि भवन्ति ॥ १ ॥

### अजश्च[१]स्तृतीयपञ्चमौ जो लीर्वोत्साहः ॥ २ ॥

[२]जगणरहिताः षट् चगणा उत्साहः । अत्रापवादः । तृतीयः पञ्चमश्च जगणो लघुचतुष्टयं वा । यथा—

[1]अवमन्निअदुट्ठचित्तसंगमयचक्कवाय,
जे ते सो[३]च्छाह नाह झायंति तुज्झ पाय ।
ते ते संसारि वीर कह वि न लहंति दुक्खु,
जं किर वचंति झत्ति पहु निच्छएण मो[४]क्खु ॥ २.१ ॥

इ[५]दानीं रासकानाह—

### दामात्रा नो रासको ढैः ॥ ३ ॥

दा इत्यष्टादशमात्रा नगणश्च रासकः । ढैरिति चतुर्दशभिर्मात्राभिर्यतिः । यथा—

[2]सुररमणीअणकयवहुविहरासयथुणिअ,
जोइविंदविंदारयसयअमुणिअचरिअ ।
सिरिसिद्धत्थनरेसरकुलचू[६]लारयण,
जयहि जिणेसर वीर सयलभु[७]वणाभरण ॥ ३.१ ॥

[3]सर्वा अपि जातयो रासका भवन्तीति केचित् । यदाह—

[4]सयलाओ जाईओ प[८]त्थावव[९]सेण एत्थ वज्झंति ।
रासावंधो नूणं रसायणं वे[१०]ड्ढगोट्ठीसु ॥ ३.२ ॥

### चुल्गा वा ॥ ४ ॥

चतुर्मात्रपञ्चकं लघुगुरू च यदि वा रा[११]सकः । पृथग् योगात् ढैरिति [१२]न वर्त्तते ।

---

1 ) अवमन्निय इत्यत्र अवगणित. दुष्टचित्तसुराधमसंगमकस्य चक्राभिघातो येन तत्सबोधनम्। हे नाथ ये पुरुषास्तव पादं ध्यायन्ति सोत्साहाः सन्त' ते पुरुषा हे वीर ससारदु'खं न लभन्ते कथमपि। यस्मात् ते। किलेति सत्ये। शीघ्रं प्रभो मोक्षं निश्चयेन यान्ति। 2 ) सुररमणीत्यत्र हे सुररमणीकृतवहुविधरासकेन स्तुत। योगिवृन्दधृन्दारकाः प्रधानास्तेषां शतैरज्ञातचरित इत्यर्थघटना तस्य सबोधनं हे श्रीसिद्धार्थकुलचूलारत्न हे जिनेश्वर हे सकलभुवनाभरण त्वं जयेति संटंक.। 3 ) सर्वा अपि जातयो रासका इत्यत्र तावच्छन्दसां द्वौ भेदौ वृत्तानि जातयश्च। 4 ) सयलाओ जाईओ इत्यत्र पत्थारवसेणेति ( पत्थार० घटते P )सम्यक्पाठान्तर गुरूपदिष्टम्।

---

१ स्यु EF २ जगण to उत्साह dropped in A ३ सुच्छाह BE, सुत्साह P, सोतसाह ON. ४ माक्खु A, मुक्खु BE ५ इदानी to रासको repeated in A ६ चूडार० N. ७ भवणा० E ८ पत्थारव० N(KP) ९ इत्थ A. १० वेदगोट्टीसु N, विद्धगो० P, वेड्ढगुट्ठीसु A. ११ रास E. १२ निर्वततते B.

यथा –

[1]गोवीअणदिज्जंतयरासय निसुणंतहं,
वासारत्ति पहुच्चइ पहिअहं पवसंतहं।
निअवल्लह तिव केम्वइ[1] हिअयंतरि निवडिअ,
जिंव जंतह[2] न वहंति चलण नावइ निअडिअ[3] ॥ ४.१ ॥

**चपञ्जाया[4] अवतंसकः ॥ ५ ॥**

**चतुर्मात्रः पञ्चमात्रो जगणद्वयं यगणश्च अवतंसकः। यथा –**

[2]सायरु रयणायरु वोल्लहिं जं वुहसत्थ,
तं सच्चु[5] जि जाय निसायरकुच्छुह जत्थ।
जह एक्कु[6] हूउ सिरिकंठसिरे[7] अवयंसु,
अवरु सिरिनाहउरि[8] भूसणु उल्लसिअंसु ॥ ५.१ ॥

**चः[9] पौ जो गौ कुन्दः ॥ ६ ॥**

**चतुर्मात्रः पञ्चमात्रद्वयं जगणो गुरुद्वयं च कुन्दः। यथा –**

[3]अहरुट्ठ दलइ जवापसूण दन्त कुंद,
पाणिचरणनयणवयण विअसिआरविंद।
कुसुमपुरु[10] पच्चक्खु वि सुंदरि तुज्झ[11] देहु,
तुह[12] वरु मज्झदेसु वहसि विवरीउ एहु ॥ ६.१ ॥

**पाचाजगाः करभकः ॥ ७ ॥**

**पञ्चमात्रद्वयं चतुर्मात्रद्वयं जगणो गुरुश्च करभकः। यथा –**

[4]करहयथणहरगलिअलोलमणोहर[13]हारय,
गंडत्थलतुलिअमइलजडिलकुंतलभारय।

1) गोवीअणेत्यत्र गोपीजनदीयमानरासकं शृण्वतः वर्षारात्रिः पर्याप्यते। भुवः पर्याप्तौ हुच्चः (सि० हे० ८.४.३९०) इत्यादेशः। पुंसः प्रवासं गच्छतः हृदयान्तरे तथा किमपि निष्पतति निजवल्लभा यथा निगडितमिव चलनम्। न वहति गन्तुमित्यर्थः। नावइत्ति – इवार्थे। 2) सायरु रयणायरु इत्यत्र सागरो रत्नाकर इति यत् बुधसार्थः कथयति तत्सत्यमेव। तत्कथमिति। यत्र उभौ निशाकरकौस्तुभौ जातौ यथा एकः श्रीकण्ठशिरसि अवतंसः समभूदपरः श्रीनाथोरसि भूषणं समभूदिति। कीदृशः। उल्लसिता अंशवो यस्य। 3) अहरुट्ठ दलइत्ति अधरोष्ठौ जपाप्रसूनं दन्ताः कुन्दान् कुन्दपुष्पाणि, पाणिचरणनयनवदनानि विकसितारविन्दं विदलयन्ति। प्रत्येकं क्रिया एकत्वादिना योज्या। विदलयति तिरस्करोति। अत एव हे सुन्दरि तव वपुः प्रत्यक्षं कुसुमपुरं वर्तते कुसुमसमूहः पक्षे कुसुमपुरं पाटलिपुत्रं प्रत्यक्षम्। ततः कथं मध्यदेशोऽयोध्यादिस्तत्र संभवति। एतद्वैपरीत्यम्। पक्षे मध्यदेशः कटीप्रदेशः। पाटलिपुत्रनगरं गङ्गातट एवास्ति प्रयागः इति प्रसिद्धम्। 4) करहयथणहरेत्यत्र करहतस्तनभरात् हृदयात् गलिता मनोरथवद्धारा यस्य सः। गण्डस्थले विलुलितो मलिनो जटिलो जटावान् कुन्तलानां भारो यस्य सः। अनवरतं बाष्पनिपतनेन सुप्तं सशोफं तथा शोणं विलोचनं यस्य सः। हे नरपते तव वैरिवधूजनः ईदृशः संप्रति समभूत्।

१ किम्वइ ABCDN. २ जनह N, जतह AE, जे तह D ३ निअहिअ NS; निघडिअ B ४ चपया G. ५ सत्थु B. ६ एक हूउ A, इक्कु हूउ F एक्कु हूओ N. ७ सिरे to अवरु dropped iu C. ८ सिरिनाहुउरि B. ९ चपौजो० G १० कुसुमपुर B; कुसुमपरु C ११ तुम्ह CN १२ तुहु वरु BP, तुह वर A; तउ वरु K (?). १३ मणोरहहारय KB

अणवरयवाहणिवडण[1]सूण्णसोण[2]विलोअण,

तुह हुअ[3] नरवइतिलय संपइ[4] वेरिविहूअण ॥ ७.१ ॥

**चपाचागा इन्द्रगोपः ॥ ८ ॥**

**चतुर्मात्रः पञ्चमात्रद्वयं चतुर्मात्रद्वयं गुरुश्च इन्द्रगोपः। यथा—**

1)"रेहहिं अरुणकंति धरणीअलि इंदगोवया,

पाउससिरिहि[5] नाइ पइं[6] जावयबिंदु लग्गया।

एह वि विज्जुलेह झलकंतिअ वहलकंतिआ,

लक्खिज्जइ जायरूवनिम्मविअ व्व कंठिआ ॥ ८.१ ॥

**चपाचाल्गाः[7] कोकिलः ॥ ९ ॥**

**चतुर्मात्रः पञ्चमात्रद्वयं चतुर्मात्रद्वयं लघुगुरू[8] च कोकिलः। यथा—**

2)"हंसि तहारउ[9] गइविलासु[10] पडिहासइ रित्तओ,

कोइलरमणि[11] इ तुह वि कंठु कुंठत्तणु पत्तओ।

विरहय कंकेल्लिहिं[12] दोहल संपइ पूरंतिअ,

जं किर कुवलयनयण एह हिंडइ गायंतिअ ॥ ९.१ ॥

**चपाचल्गा दर्दुरः ॥ १० ॥**

**चतुर्मात्रः पञ्चमात्रद्वयं चतुर्मात्रो लघुगुरू[13] च दर्दुरः। यथा—**

3)"मत्तंवुवाह वरसंतिण पइं[14] समहिउ[15],

आयण्णसु[16] संपइ[17] महिअलि[18] जं विरइउ[19]।

हंसहं कलसद्दिण जं आसि मणोहरु,

दद्दुर[20]रडिआउलु[21] निम्मिउ[22] तं सरवरु ॥ १०.१ ॥

---

1) रेहहि अरुणेत्यत्र इन्द्रगोपकाः कीटविशेषाः धरणीतले राजन्ते। कीदृशाः। अरुणा कान्तिर्येषां ते। तथा इवोत्प्रेक्षते। प्रावृट्श्रियः पादाः। कीदृशाः। अलक्तानां बिन्दवो लग्ना येषु ते। तथा एता विद्युल्लेखा झलकंती शोभमाना बहुलकान्तिः लक्ष्यते जायते। केव। जातरूपनिर्मिता कण्ठिकेव। नाइ उत्प्रेक्षार्थः। 2) हंसि तहार उ इत्यत्र हे हंसिके त्वदीयगतिविलासः प्रतिभासते रिक्तः शून्य इति यावत्। हिण्डते गच्छतीति हेतोः। हे कोकिलरमणि तवापि कण्ठः कुण्ठत्वं प्राप्त इति प्रतिभासते गायन्तीति हेतोः। विरहस्य गानेन अशोकस्य च पादघातेन दोहदं पूरयतीति। कोऽर्थः। यस्मात्कारणादिह वने गानं कुर्वती हिण्डते तस्माद्युवयोः कार्यं नास्तीति भावः। 3) मत्तंवुवाहेत्यत्र मेघ त्वया वर्षता समकृत (साम्प्रतं) कृतं तत्त्वं समाकर्णय शृणु। क। महीतले। तत्किं तदाह—हंसानां कलशब्देन यत्सरो मनोहरमासीत् तत् दर्दुररटिताकुलं निर्मितं एतदेव भवता कृतं नान्यदेवेति मेघस्य निन्दा।

---

१ णिवडण CD, णिवडय N २ सुत्तसोण K ३ हूअ A ४ सपइ वेरि० P, सपय वेरिविहूअण D ५ पाउससिरि नाइ AODN ६ पइ P ७ चपाचालगा DN ८ लगौ च A ९ तहारु A १० गइविलास पडिहसइ A ११ कोइलरमणिअ P. १२ ककेल्लिहि P १३ लगौ च A १४ पइ AODN १५ समहिओ NP १६ आयस्सु A, आइण्णसु B १७ सपइ P. १८ महीअलि A १९ विरइओ NP, विरउव A २० दुद्दुर A, दद्दूर N २१ रडिआउल S. २२ निम्मिओ N

**चरजमगा आमोदः ॥ ११ ॥**

चतुर्मात्रो रगणजगणमगणाः गुरुश्च आमोदः। यथा–

[1]असोअमंजरीफुरंतआमोएसुं,
कलरोलवंद्र[1]कायलीसद्देसुं।
अणवरयं वहंतसार[2]णीतोएसुं,
धन्ना के वि जे रमंति उज्जाणेसुं ॥ ११.१ ॥

**म्रल्गपा[3]सा विद्रुमः ॥ १२ ॥**

मगणरगणौ लघुगुरू पगणद्वयं सगणश्च विद्रुमः। यथा–

[2]भ्रूव[4]ल्लिं चावयं मणोहवस्स ससितुल्लं वयणं,
अंगं चामीअरप्पहं अहिणवकमलदलं नयणं।
तीए हीरावलि व दंतपंति विद्रु[5]मं अहरं,
पेच्छंताणं पुणो पुणो काण न हवइ मणं विहुरं ॥ १२.१ ॥

**रो मौ मेघः ॥ १३ ॥**

रगणो मगणचतुष्टयं च मेघः। यथा–

[3]मेहयं मच्चंतं ग[6]ज्जंतं संनद्धं पेच्छंता,
उब्भडेहिं विज्जुज्जोएहिं घोरेहिं मुच्छंता।
केअईगंधेणोद्दामेसुं सग्गेसुं गच्छंता,
ते कहं जीअंते कंताणं दूरेणं अच्छंता ॥ १३.१ ॥

**त्रयल्गा विभ्रमः ॥ १४ ॥**

तगणरगणयगणा लघुगु[7]रू च विभ्रमः। यथा–

[4]लायण्णविब्भमं तरंगंतिहिं,
निद्दड्ढवम्महं जिआवंतिहिं।

---

1) असोअमंजरीत्यत्र त एव केऽपि पुरुषा धन्या ये उद्यानेषु रमन्ते। अशोकमञ्जरीणां स्फुरन्तः आमोदाः येषु ते[षु]। पुन कलरोलस्ववृन्दानां काकलीशब्दो येषु तेषु। अनवरतं वहन्त्यः सारण्यस्तासां तोयं येषु तथा अथवा वहत्सारणीनां तोयं येषु तेषु। 2 भ्रूवल्लिं चावयमित्यत्र भ्रूवल्लरिं चापमिव चापकं मनोभवस्य शशितुल्यं वदनं चामीकरप्रभं शरीरं अभिनवकमलदलमिव नयनं हीरावलिमिव दन्तपङ्क्तिं विद्रुममिवाधरं तस्या. प्रेक्षताम्। [केषां]। पुंसा पुन पुनः न भवति मनः। कीदृक्। विधुरं विक्लवम्। 3) मेहयं मच्चंतमित्यत्र। ते पुरुषाः दूरेण महत्कान्तारं (the com. seems to read कंतारं for कंताणं) गच्छन्त सन्त. कथं जीवन्ति। किं कुर्वन्तः। पश्यन्त। कम्। मदोन्मत्तं गर्जन्तं सन्नद्धं मेघकं मूर्च्छयन्तः। कैः। उत्कटैः घोरैः विद्युद्द्योतैः केतकीगन्धेनोत्कटेषु मार्गेषु सत्सु। 4) लायण्णविब्भमं इत्यत्र लावण्यविभ्रमं तरङ्गन्तीभिः निर्दग्धकन्दर्पं जीवयन्तीभिः एवंविधाभिः प्रियाभि. प्रेम्णा विलोक्यते तथा मर्त्यलोके एव स्वर्गः प्राप्यते।

---

१ चंद्र DNS. २ मारुती S ३ म्रलापासा DN ४ भ्रवलि N ५ विद्रुमं CS. ६ गज्जंतं C. ७ लगौ च A.

प्रेमिं प्रियाहिं जे पुलोइज्जइ,
ता मत्तलोइ सग्गु पाविज्जइ ॥ १४.१ ॥

मेघविभ्रमौ वृद्धैरपभ्रंशे एव निबद्धाविति[1] वर्णवृत्तेषु नोक्तौ ॥ १४.१ ॥

**चपजगगाः कुसुमः ॥ १५ ॥**

चतुर्मात्रः पञ्चमात्रो जगणो गुरुद्वयं च कुसुमः । यथा –

[2]निच्छिउ करिवि चंदु [1]दोण्णि खंडे,
तहि निम्मि[3]अ मयनय[4]णाइ गंड ।
वरकुसुम घडेविणु गंधचंगु,
कोमलु[5] तह[6] विरइउँ[7] एहु अंगु ॥ १५.१ ॥

इहान्येऽपि चन्द्रक-खञ्जकान्त-चञ्चल-चलतनु-वीरप्रिय-कुपित-रुष्ट-कृष्ण-सित-घनद-कुरर-शिवादयो रासकभेदा वृद्धैरुपनिबद्धास्ते तु कचित्केचिदन्तर्भवन्तीत्यस्माभिर्नोक्ताः ॥ १५.१ ॥

**ओजयुजोश्छडा रासः ॥ १६ ॥**

विषमसमयोः पादयोः यथासंख्यं छाः इति सप्त, डाः इति त्रयोदश मात्राः यत्र स रासः । यथा –

[3]सुणिवि[8] वसंति,
पुरपोढपुरंधि[9]हं रासु ।
सु[10]मरिवि लडह,
हु[11]अँ तक्खणि पहिउ निरासु ॥ १६.१ ॥

**पाचदाश्चिस्तृतीये पञ्चमे चो जो लीर्वा**
**पञ्चांह्रिस्त्रिपात्पूर्वार्धा[4] मात्रा ॥ १७ ॥**

ओजे पादे प्रथमे तृतीये पञ्चमे च द्वौ पञ्चमात्रावेकश्चतुर्मात्रो द्विमात्रश्चैकः । युजि पादे द्वितीये चतुर्थे च चिश्चगणत्रयम् । तथा तृतीये पञ्चमे च पादे चतुर्मात्रो जो लीर्वा । एवं पञ्चपदी पादत्रयेण कृतपूर्वार्धा मात्रानाम च्छन्दः । यथा –

1) वर्णवृत्तेषु नोक्तावित्यत्र अन्यथा पञ्चदशाक्षरायामुक्तमभविष्यत् । 2) निच्छिउ करिवीत्यत्र अयं निश्चय. । कः । एतस्या मृगनयनायाः गण्डौ चन्द्रस्य खण्डद्वयं कृत्वा निर्मितौ । तथा एतस्या गन्धचंगं कुसुमं घटित्वा एतत्कोमलमङ्गं वटितम् । अर्थाद्धात्रेति भावः । अत्यद्भुतदर्शनात् । 3) सुणिवि वसंति इत्यत्र वसन्ते पौरप्रौढपुरन्ध्रीणां रास [श्रुत्वा] तथा लटभान् स्मृत्वा तत्क्षणं पथिको निराशो जातः । 4) पूर्वार्धा मात्रेत्यत्र चतुष्पद्यर्थं तृतीयपादेऽर्धविधानम् ।

१ दोन्नि BEP. २ खंडु BE ३ निमिअ B ४ मयणयणाइ C ५ कोमल ACP ६ तुह AP. ७ विरइय A; विरइओ N, विरईओ S ८ सुणवि AE ९ पुरंधिहि A; पुरध्रिहि BE, पुरंधिहि P. १० सुमरवि P. ११ हुय B, हूओ N, अ dropped in D

[1]मत्तकोइलनायणंदीइ, सिंगाररसोग्गमिण,
नच्चमाणमायंदपत्तिहिं ।
अहिणिज्जइ मयणजय-, नाडउव्व संपइ वसंतिण ॥ १७.१ ॥

प्रायोग्रहणात्संस्कृतेऽपि । यथा –

[2]शुष्कशिखरिणि कल्पशाखीव, निधिरधनग्राम इव,
कमलखण्ड इव मारवेऽध्वनि ।
भवभीष्मारण्य इह, वीक्षितोऽसि मुनिनाथ कथमपि ॥ १७.२ ॥

**द्वितीये तुर्ये तयोर्वाद्यस्य चः स्थाने पो मत्तवालिका ॥ १८ ॥**

मात्रैव द्वितीये तुर्ये वा पादे क्रमेण युगपद्वा तयोराद्यस्य चगणस्य स्थाने पगणश्चेत्तदा मत्तवालिका । तत्र द्वितीये पादे प्रथमस्य चस्य स्थाने पः । यथा –

[3]कुमुअकमलहं एक्क उप्पत्ति, मउलेइ तु वि कमलवणु,
कुमुअसंडु निच्चु वि विआसइ ।
सच्छंद विआरिणिअं, चंदजोण्ह किं मत्तवालिअं ॥ १८.१ ॥

चतुर्थे यथा –

[4]गहिरु गज्जइ धरइ मयवारि, विहलंवलु नहु कमइ,
दुन्निवारु दिसिदिसि पलोट्टइ ।
ओ मत्तवालिअसरिसु, विसमचेट्ठु पाउसु पयट्टइ ॥ १८.२ ॥

1) मत्तकोइलेत्यत्र वसन्तेन अभिनीयते मदनजयनाटकं मत्तकोकिलनाद एव द्वादशतूर्यनिर्घोषो नान्दी यत्र । शृङ्गाररसेन उग्गमिणं प्रधानम् । 2) शुष्कशिखरिणीत्यत्र तिलकमञ्जर्या अदृष्टपारसरस्तीरे वनषण्डे स्फाटिकचैत्ये श्रीयुगादिजिनं दृष्ट्वा कुमारसमरकेतुना नमस्कारोऽयमुक्त. । शुष्कशिखरीति – शुष्कगिरौ कल्पशाखीव कल्पवृक्ष इव निर्धनग्रामे निधिरिव निधानमिव मारवे मरुमण्डलसंबन्धीयाध्वनि कमलखण्डमिव हे भगवन् तथा भवभीष्मारण्ये नाथ त्वं दृष्टोऽसि हे मुनिनाथ इह संसारे कथमपि महता कष्टेनेत्यर्थः । 3) कुमुअकमलहमित्यत्र कुमुदकमलानामेकमेवोत्पत्तिस्थानं तथापि चन्द्रज्योत्स्ना निच्चुवि निशास्वपि कमलवनं मुकुलयति संकोचं प्रापयति कुमुदवनं विकाशयति । तदा स्वच्छन्दं चरतीति स्वच्छन्दचारिणी मत्ता चासौ वालिका च पीतामद्य (पीतमद्या) वालिकेव । सापि ईदृशी भवति । 4) गहिरु गज्जइ इत्यत्र प्रावृट् प्रवर्तते । कीदृशी । उन्मत्तवालिकासदृशी । विषमा चेष्टा यस्याः सा गम्भीरं यथा भवति तथा गर्जति । सापि पीतमद्या शब्दं करोति । प्रावृट् अमृतं वारि धरति प्रावृट् विह्वला सती नभ आक्रमति । विह्वलेति – प्रसरणशीलापि विह्वला सती न क्रामति । हु निश्चितं दुर्निवारं यथा स्यात्तथा प्रलुठ्यति क्षोभं प्राप्नोति । क । दिशि ।

१ णायनं० BP. २ रसोग्गंमिण N ३ पत्तहि AN ४ कमलषण्ड इव BE ५ चस्थाने ABC. ६ उप्पंनि N. ७ कुमुअखड A; कुमुणसदु N ८ सेच्छद S ९ विआरणिअ AD १० मत्तवालिया A, मत्तवालिआ N. ११ गहिर A. १२ दुन्निवार A १३ मत्तवालय BP. १४ विसमचिट्ठु पाउस A.

द्वितीयचतुर्थयोर्यथा–

[1]पेच्छ पाउसलच्छि उच्छलइ, मउलंति सव्वाउ[1] दिस,
घडहडंति घणमत्त वालिअ।
फुट्टंति केअइकुसुम, पिइ पउत्थि कह जिअइ[2] वालिअ[3] ॥ १८.३ ॥

**तृतीयस्य नो मत्तमधुकरी ॥ १९ ॥**

मात्रैव द्वितीयतुर्ययोः पादयोः क्रमेण युगपद्वा तृतीयस्य चगणस्य स्थाने तगण श्चेत्तदा मत्तमधुकरी। तत्र द्वितीयपादे तृतीयचगणस्य ते मत्तमधुकरी। तद्यथा–

[2]मत्तमहुअरितारझंकार, कलयंठिकलयलिहिं,
मयणधणुह टंकारसरिसिहिं[4]।
कह जीवहुं विरहिणिउ[5], दूरदेसपवसतरमणिउ ॥ १९.१ ॥

तुर्ये पादे यथा–

[3]फुडिअकेसरतिलयमायंदि, पप्फुल्लिअकमलवणि,
सुरहिमासि संपइ पयट्टइ।
मत्तमहुअरि[6]रविण, मयणचरिउ वणल[7]च्छि गायइ ॥ १९ २ ॥

उभयोर्यथा–

[4]गुणविवर्ज्जिइ[8] पुरिसि रचेइ, गुणवंति परंमुही,
तह य पंकउप्पन्नि[9] निवसइ।
मत्तमहुअरि[10] कमलि, अहह लच्छि अविआरि[11] विलसइ ॥ १९.३ ॥

**तृतीये पञ्चमे तयोर्वा पोश्चौ मत्तविलासिनी ॥ २० ॥**

[12]मात्रैव तृतीये पञ्चमे च पादे तयोर्वा युगपद्वाद्ययोः पगणयोः स्थाने चगणौ चेत्तदा मत्तविलासिनी। तत्र तृतीये पादे पोः स्थाने चौ। यथा–

1) पेच्छ पाउसलच्छीत्यत्र प्रिये प्रोषिते सति बालिका कथं जीवति। यतः सुभग पश्य। किम्। प्रावृट्लक्ष्मीः उच्छलति विकाशं गच्छति मुकुलीभवन्ति सर्वा दिशो घन बहु मत्ता वालिआ वारिदाः घडहडन्ति गर्जारवं कुर्वन्ति केतकीकुसुमानि विकचीभवन्ति। 2) मत्तमहुअरि इत्यत्र मत्तमधुकरीतारझंकार-कलकण्ठीकलकलैः विरहिण्य' कथ जीवन्ति। कीदृश्यः। दूर देशं प्रवसन्तो रमणा भर्तारो यासां ता.। कीदृशैः। मत्त० मदनधनुष्टंकारसदृशैः। 3) फुडिअकेसरेत्यत्र चैत्रमासे पयट्टइ प्रकटिते सति। कीदृशे। स्फुटितकेसरतिलकमाकन्दे। विकसिते कमलवने नृति वनलक्ष्मीर्मदनचरित गायति। केन मधुकरीरवेण। 4) गुणविवज्ज(ज्जि)इ इत्यत्र गुणविवर्जिते पुरुषे रज्जति रागभाग् भवति गुणवति पराङ्मुखी तथा कमले निवसति। कीदृशे। पङ्कोत्पन्ने। पु० का (कीदृशे)। मत्तमधुकरे। अहह खेदे। लक्ष्म्याः अविचारो विलसति।

१ सव्वाओ N. २ जिअउ CDKP ३ वालिआ DN ४ टंकारससिहिं N, टंकारसरिसिहि D ५ विरहिरिणिउ N. ६ महूअरि S ७ वणच्छणच्छि S ८ विवज्जिय A ९ उपन्ति N, उप्पनि B १० मधुअरि A. ११ अविआरि A १२ The sentence is dropped in P
२३ छन्दो०

1)समयमयगलगमणरमणिज्जु[1], मयभिभलनयणजुउ,
आरत्तकवोलसोहिरु ।
मत्तविलासिणिनिअरु, हरइ चित्तु लल्लुरु[2]पयंपिरु ॥ २०.१ ॥

पञ्चमे यथा –

2)मत्तजलहर गहिरु[3] गज्जंति, केक्कारहिं[4] मत्तसिहिं[5],
मत्तु मयणु पहरेइ दुज्जउ ।
विणु मत्तविलासिणिहिं, भणि सपइ[6] काइं किज्जइ[7] ॥ २०.२ ॥

उभयोर्यथा –

3)ते ज्जि[8] पंडिअ ते ज्जि गुणवंत, ते तिहुअणसिर उवरि[9] ।
ताहं चिअ जम्मु जाणहु[10] ।
जे मत्तविलासिणिहिं, न वि खोहिअ[11] सुद्धझाणहु[12] ॥ २०.३ ॥

**चस्य पो मत्तकरिणी ॥ २१ ॥**

**मात्रैव तृतीये पञ्चमे च पादे[13] उभयोर्वा पादयोश्चगणस्य[14] स्थाने पगणश्चेत्तदा मत्तकरिणी । तत्र तृतीये पादे चस्य स्थाने पः । यथा –**

4)जासु अंगहिं[15] वणु[16] नसाजालु, जसु[17] पिंगल नयणजुउ,
जासु[18] दंत पविरलविअडुन्नय ।
न धरिज्जइ दुहकरिणी[19], मत्तकरिणि जिम्व घरिणि[20] दुन्नय ॥ २१.१ ॥

1) समयमयगलेत्यत्र विलासिनीनिकरश्चित्तं हरति समदो यः मदकलो हस्ती तस्य यद्गमनं तद्वद्गमनेन राजमान. मदेन भिंभल मन्थरं नयनयुगलं यस्य स. आरक्तकपोलेन शोभनशील: लल्लुरं अव्यक्तं प्रजल्पतीति । 2) मत्तजलहरेत्यत्र मत्तजलधरे गभीर गर्जति तथा मत्तशिखिनि केकारवेण [ युक्ते ] सति मत्तमदनः प्रहरति । हे सुभग मत्तविलासिनीभिर्विना किं क्रियते सांप्रतम् । 3) तेज्जिअ पंडिअ इत्यत्र ये पुरुषा मत्तविलासिनीभिः नापि क्षुभितशुद्धध्यानास्त एव पण्डितास्त एव गुणवन्तः त एव त्रिभुवनशिरसि उपरीति ऊर्ध्वस्थानीया शेखरायमाणा इत्यर्थः । तेषामेव जन्म निश्चयेन नान्येषामित्यर्थः । क्लीबप्रायास्ते हि ज्ञेया । 4) जासु अंगहिमित्यत्र यस्या अङ्गे वन नसाजालं भवति यस्या नयनयुगलं पिङ्गलं भवति यस्याश्च दन्ताः प्रविरलाः । पुनः कीदृशाः । विकटोन्नता वक्रा इति यावत् । एवंविधा दुर्नया गृहिणी गृहे न ध्रियते दुःखकारिणी । केव । मत्तकरिणीव हस्तिनीव । एवंविधकुलक्षणा स्त्री न पाणौ क्रियते इति भाव. ।

१ रमणिज्ज ABCDN. २ लल्हर K, लल्लुर S ३ गुहिर A ४ केक्कीरहिं S. ५ मत्तसिहि B. ६ सपय B ७ किज्जइ B ८ तेजि E. ९ सिरि उवरि A १० जाणह E ११ खोइअ N. १२ झाणओ BN; झाणहो A. १३ पादे dropped in A १४ चगणस्थाने AB १५ अंगिहिं AP. १६ अणु- नयाजालु A १७ जम पिं० A, जसु पिंगलु नयणजुऊ B. १८ जास A १९ दुहकारिणि D, दुहकरणि P, दुहकरणी S. २० घरिणि BP.

पञ्चमे यथा—

[1)]दिव्व कहिं ते मत्तकरि णीअ[2], कहिं घल्लिअ भिच्चभडा[3],
कहिं निहित्त हयवर वहिल्लय ।
ढुंढोल्लिरँ[4] गिरिगहणि, इअ तुज्झ रिउ रोअहिं गहिल्लय[5] ॥ २१.२ ॥

उभयोर्यथा—

[2)]जेत्थु[6] गज्जहिं[7] मत्तकरिणिवह, रंखोलहिं जत्थु हय,
जेत्थु[8] भिउडिभीसण[9] भमंति भड ।
तहिं तेहइ रणि वरइ, विजयलच्छि पइं पर समरोब्भड ॥ २१.३ ॥

**आभिर्बहुरूपा ॥ २२ ॥**

आभिर्मात्रादिभिः संकीर्णाः बहुरूपा । यथा—

[3)]गाम्वि पट्टणि हट्टि चउहट्टि, राउलि देउलि पुरि,
जं दीसइ लडहंअंगिअ[10] ।
विरहिंदजालिएंण[11] तं, सा एक्क वि कय बहुरूवकलिअँ[12] ॥ २२.१ ॥

अत्र प्रथमः पादो मात्राया द्वितीयो मत्तमधुकर्यास्तृतीयो मत्तविलासिन्याश्चतुर्थो मात्रायाः पञ्चमो मत्तकारिण्याः ॥ २२.१ ॥

**आसां तृतीयस्य पञ्चमेनानुप्रासेऽन्ते**
**दोहकादि चेद्रड्डस्तु रड्डा वा ॥ २३ ॥**

आसां मात्रादीनां तृतीयपादस्य पञ्चमेन पादेनाऽन्तेऽनुप्रासेऽन्ते दोहकापदोहकावदोहकाश्चेत्तदा रड्डा वस्तु वा । यथा—

[4)]लुढिदुं[13] चंदणवल्लिपल्लंकि, समिलिदु लवंगवणि,
खलिदु वत्थुरमणीयकयलिहिं ।
उच्छलिदुं[14] फणिलेयहिं[15], घुलिदु सरलकक्कोललवलिहिं ॥

1) दिव्व कहिं ते मत्तेत्यत्र । हे दे(दै)व ते मत्तकरिणः कहि क्व नीताः तथा ते भृत्यभटाः क्व क्षिप्ताः तथा हयवररथाः क्व निहिताः । वहिल्लयेति वहिलीति प्रसिद्धिः । एप ढुण्ढोल्लिरः भ्रमणशील सन् । क्व । गिरिगहने ग्रथि(हि)लः सन् नव रिपुः रोदितिति । 2) जेत्थु गज्जहि इत्यत्र यत्र संग्रामे मत्तकरिनिवहा गर्जन्ति यत्र हयाः रे(र)खोलहित्ति पतन्ति यत्र भृकुटीभीपणा भ्रमन्ति भटाः तस्मिंस्तादृशे रणे पर केवलं समरोद्भटं त्वामेव विजयलक्ष्मीः वृणुते नान्यमिति रणोद्भटता । 3) गाम्वि पट्टणि इत्यत्र ग्रामे पत्तने हट्टश्रेण्या देवकुले पुरे लडहअंगीति विलासांगी यद्दृश्यते सा एकापि विरहेन्द्रजालिकेन कृतबहुलरूपा दृश्यते । कोऽर्थः । विरहवशात्सैव सर्वत्र दृश्यते इत्यर्थः । 4) लुठिदु चंदणवल्लि इत्यत्र मलयसमीरः चन्दनवल्लिपल्यङ्के लुलितलवङ्गवने समिलितः परमार्थरमणीयकदलीभि. स्खलितः नागवल्लीपु उत्सलितः सरलकक्कोललवलीभि. घूर्णितः चुम्बितो माधवीवल्लरीभिः पुलकितं कामिनां शरीर यस्मात् । स पुन. कीदृक् । रड्डो पुष्टः । कीदृशः । भ्रमरसदृशः । भ्रमरस्यापि यथायोगं विशेपणानि वाच्यानि एवंविध. सचरति प्रसर्पतीत्यर्थ. ।

१ N wrongly puts कहि also before दिव्व, but drops it before निहित्त in the 3rd line २ णीओ A, नीअ P ३ भिच्चभड BEP, भिचतड A ४ ढुंढुल्लुर BE ५ गहेल्लअ B ६ जत्थु S. ७ गज्जिहि F ८ जेत्थु BFP ९ भासण A १० लडहिअगिय A ११ जालएण AODN, १२ कलिआ AODN १३ लुटितु B, लुट्टिदु N. १४ उच्छिलिदु A १५ फणियलहि A.

चुंविदु माहविवल्लरिहिं, पुलइ[1]द कामि[2]सरीरु ।
भमरसरिच्छउ संचरइ[3], रइउ[4] मलयसमीरु ॥ २३.१ ॥

## मात्राप्रकरणम् ।

### चौ लान्ततौ चौ नो वस्तुकम् ॥ २४ ॥

चगणद्वयं द्वौ च लघ्वन्तौ तगणौ चगणद्वयं तगणश्च पादे चेत्तदा वस्तुकं चतुर्भिः पादैः । यथा –

1)सुरवहुमहुअरिपंतिपीअगुणपरिसलजालहं,
नहमणिकिरणकलावचारुकेसरनिअरालहं ।
पत्थुअवत्थुअ[5]गीति[6]चारुमुणिनिवहमरालहं,
तिहुअ[7]णसिरिकुलहरहं नमँहु[8] जिणपँहु[9]पयकमलहं ॥ २४.१ ॥

### षच्चिपा युज्यँ[10]ज ओजे जो लीर्वा वस्तुवदनकम् ॥ २५

एकः षण्मात्रश्चगणत्रयं षण्मात्रश्च वस्तुवदनकम् । अत्रापवादः समे जगणरहितश्चगण ओजे जो लीर्वा । यथा –

2)मायाविअहं विरुद्धवायवसवंचिअलोअहं,
परतित्थिअहं असारसत्थसंपाइअमोहहं ।
को पत्तिज्जइ सम्मदिट्ठि[11]जहवत्थुँ[12]अवयणहं,
जिणहं मग्गिँ[13] निच्चँल[14]निहित्तमणु करुणाभवणहं ॥ २५.१ ॥

वस्तुकमित्यँन्ये[15] । 3)अत्र केचित्षोडशभ्यो लघुभ्य आरभ्य लघुद्वय[16]वृद्ध्या वंशादीन् वस्तुकविशेषानाहुः । यथा –

वंसो वित्तो वालो वाहो वामो वलाहओ विंदो ।
विद्धो विसो विसालो विसारँओ[17] वासरो वेसो ॥ २५.२ ॥

---

1) सुरवहुमहुयरीत्यत्र सुरवधूमधुकरीपङ्क्तिपीतगुणपरिमलजालं समोहं(?) नभोमणिः सूर्यः तस्य किरणास्तद्वत् केसरनिकरसंयुक्तं प्रस्तुतवस्तुकगीतिषु चारवो ये मुनयस्त एव मराला यत्र त्रिभुवनश्रीकुलगृहं एवंविधं जिनप्रभुपदकमलं नमत । 2) मायाविअहं इत्यत्र कः सम्यग्दृष्टिः परतीर्थिकं प्रत्येति प्रत्ययविषयं करोति अपि तु न कोऽपि । कथंभूतम् । मायया वितथं अलीकवादिनं पुनः विरुद्धवादवञ्चितलोकं असारशास्त्रसंपादितमोहम् । क. कीदृक् । निश्चलं यथा स्यात्तथा भवति निहितं स्थापितं मनो येन । क । जिनानां मार्गे । कीदृशे । करुणाभवने । 3) अत्र केचित् षोडशभ्यो लघुभ्य इत्यत्र १६ मात्रात्मके वस्तुवदनके वस्तुकापरनाम्नि षोडश लघवो यत्र स वंशाह्व अष्टादशभिर्वित्त इत्यादि यथाक्रमं ज्ञेयम् । तत्तोत्ति तत्त्वः । मयमउत्ति मृगमदः । मउत्ति मृग । [ मउलत्ति ] मुकुल. । मुहोत्ति मुखः । चउवीसकलेत्यत्र चतुर्विंशतिकलात्मकपदम् ।

---

१ पुलइदु AE, पुलइद S २ कामिसरीर AC; कामिसरीरुह S. ३ सचरदु A. ४ रइउ dropped in A, रहुउ N. ५ वत्थय S ६ गीइ F, गीय B, गीती A. ७ तिहूअण॰A, तिहुयणि॰ B ८ नमह P. ९ जिणपहुपय॰ DN, जिणपहुपयकमहल A. १० युज्यजच ओजे N. ११ समदिट्ठि P, सम्मदिट्ठि D, गमदिट्ठि S १२ नहवत्थुअवयणीहं S १३ मग्ग F १४ निच्चलुनि॰ मण A, निश्चलनि॰ मणु N; निच्चनि॰ मणु E १५ त्यन्ये AF १६ लघुद्वय २ वृद्ध्या F. १७ विस्सारओ S

तुंगो रंगो भिंगो भिंगारो भीसणो भवो भालो ।
भद्दो भग्गो भट्टो भीरू तत्तो भडो भसलो ॥ २५.३ ॥
अलओ वलओ मलओ मंजीरो मयमओ मओ माणी ।
महणो मसिणो मडलो महो मुंहो मईहरो मुहलो ॥ २५.४ ॥
एए नामनिबद्धा चउवीसकला हवंति वत्थुवया ।
सोलहलहुआउ लहूहिं वड्ढमाणेहिं दोदोहिं ॥ २५.५ ॥

एते च वस्तुवदनकप्रस्तारान्तर्भूतत्वात् पृथङ् न लक्षिताः । तत्प्रस्तारे हि अष्टौ कोटीकोट्यः समधिकास्ततः कियन्तो भेदाः परिगणयिष्यन्ते इत्यास्तां तावत् ॥ २५.५ ॥

षोऽजचः षपौ रासावलयम् ॥ २६ ॥

आदौ षण्मात्रस्ततः जगणरहितः चतुर्मात्रस्ततः षण्मात्रपञ्चमात्रौ यत्र तद्रासावलयम् । यथा –

[1]माणु म मेल्हिँ गहिल्लिएँ निहुईहोहि खणु,
उअयँउ चंदु पयट्टउ रासावलयखणु ।
दिक्खिसु एहि वि नयणिहिं पइं हलि मयणहय,
वल्लह पयँहिं पडंति भणंति अ वयणसय ॥ २६.१ ॥

इदं चतुष्पदी वस्तुकं चेत्येके ॥ २६.१ ॥

द्वयोरर्धसङ्करे सङ्कीर्णम् ॥ २७ ॥

द्वयोर्वस्तुवदनकरासावलययोरर्धयोः सङ्करे यदि वस्तुवदनकस्य पूर्वार्धं रासावलयस्योत्तरार्धं रासावलयस्य वा पूर्वार्धं वस्तुवदनकस्योत्तरार्धं तदा सङ्कीर्णम् । क्रमेण यथा –

अविहडअवरुप्परपरूढगुणगंठिनिबद्धउ,
अइआरिण हलि गलइ पेम्मु सरलिमसयलद्धउ ।
माणमडप्फरु तुह न जुत्तु उत्तिमरमणि,
तिमणि वारउं वारवार वारणगमणि ॥ २७.१ ॥
सवणनिहिअहीरयहसंतकुंडलजुअलँ,
थूलामलमुत्तावलिमंडिअथणकमल ।
सेअंसुअपंगुरणवहलसिरिहंडरसुज्जल,
वहुपहुल्लविअइल्लफुल्लफुल्लाविअकुंतल ॥ २७.२ ॥

1) माणु म मेल्हि इत्यत्र मानं मा मुञ्च हे ग्रहिले निभृतीभव क्षणम् । उदयतु चन्द्र. प्रवर्ततां रासावलयोत्सव द्रक्ष्यामि आभ्यामेव नयनाभ्यां सखि मदनहतवल्लभस्य पदयो. पतत.(?) सत. सन्मुख भणन्ती वचनशतानि । मा त्वमुत्सुका भवेति भाव. ।

१ सुहो B २ मइहवो KN ३ वत्थवया B ४ सोहह B ५ लहुहिं NS ६ प्रस्तारान्तर्गतत्वात पृथङ् नोक्ता A ७ मोल्हि गहिलिय A, मेहि ग० S ८ उअओ A ९ दिक्खसु एहवि A, दिक्खिसु एह वि P; १० हलिय D ११ पयहि B १२ अविहडु अ० B cf ४८७६ above. १३ रप्परुपरूढु P. रुप्परपरुढु CDN १४ गण CN १५ भिमणि CN १६ cf ४८७९ above १७ जुयलु CNS

पचचाद्दो वदनकम् ॥ २८ ॥

पचचेभ्यः परो द्विमात्रश्चेत्तदा वदनकम् । यथा–

[1]अज्ज वि नयणं न गेण्हइ तरलिम, अज्ज वि वयणुं न मेल्लइ भोलिम ।
अज्ज वि थणहरु भरु न पडिच्छइ, तुवि मुद्धहें दंसणि जगु मुज्झइ ॥ २८.१ ॥

केचित्समचतुष्पदीषु पचचदाः संकुलकमिति पठन्ति । तदत्रैवान्तर्भूतम् ॥ २८.१ ॥

न उपवदनकम् ॥ २९ ॥

पचचेभ्यः परस्त्रिमात्रश्चेत्तदोपवदनकम् ॥ यथा–

[2]आमूलु वि बहुपंकिण संवलिअ, सव्ववारपडिवोहसोहरहिअ ।
कंटयसयसंसेविअ जलसयण, जिणउववयणु न सोहहि कमलवण ॥ २९.१ ॥

ते यमितेऽन्तेऽडिला ॥ ३० ॥

ते वदनकोपवदनके चतुर्णां पादानां द्वयोर्द्वयोर्वान्ते यमकिते सत्यडिला । तत्र चतुर्णां यथा–

[3]नववणभंसभमंतसारंगह, कुंजकुसुमगुंजिरसारंगह ।
सुंहविलसंतअडिलसारंगह, लीलावणहं तरुणि सारं गह ॥ ३०.१ ॥

द्वयोर्द्वयोर्यथा–

[4]जहिं छिज्जहिं नरसीस भुअग्गल, तेंहु नरयहु जा दारभुअग्गल ।
सा मइं सुअणहं कह पारद्धिअ, जं निसुणंत वुद्ध पारद्धिअ ॥ ३०.२ ॥

चतुर्णां यमके मडिलेत्यन्ये ॥ ३०.२ ॥

पिदावुत्थक्कः ॥ ३१ ॥

पगणत्रयं द्विमात्रश्चान्ते यमिते उत्थक्कः । अवस्थितक इत्यन्ये । यथा–

1) अज्ज वि नयणेत्यत्र । अद्यापि नयनं चञ्चलत्वं न गृह्णाति । अद्यापि वदनं मुञ्चति न मुग्धत्वम् । स्तनभरो भारं न प्रतीक्षते नाङ्गीकरोति । स्तनभर इत्यत्र भरशब्दः शोभार्थोऽन्यथा पौनरुक्त्यं स्यात् । पीनौ न भवत इति भावः । तथापि मुग्धाया दर्शनेन जगन्मुह्यति । 2) आमूलु वि इत्यत्र । आमूलादपि बहुपङ्केन संवलितं सर्ववारं प्रतिबोधो विकासस्तच्छोभारहितं कण्टकशतेन सेवितं जलशयन जिनस्य उपवदनं मुखसमीपे कमलवनं न शोभते । तद्धि निष्पङ्कं लोकानां सर्वदा प्रतिबोधकं निःकण्टक अजडशयनं च । 3) नववणभसभमंतेत्यत्र नवघनस्य नवीनमेघस्य भ्रमेण भ्रमन्तः सारङ्गा यत्र । सारंगशब्देन मयूराश्चातका वा । कविसमये श्यामनीलयोरैक्यम् । कुञ्जेषु वृक्षावृतस्थानेषु यानि कुसुमानि तेषु शब्दायमानाः सारङ्गा भ्रमरा यत्र तेषां सुखेन विलसन्तो अटं लान्तीत्यटिला भ्रमणशीलास्सारंगा हस्तिनो यत्र मृगा वा येषु । तेषां लीलावनानां हे तरुणि सारं गृहाणेति भाव. । 4) जहिं छिज्जहि नरसीसेत्यत्र यत्र छिद्यन्ते नराणां शीर्षाणि भुजार्गलाः तस्य नरकस्य या द्वारभुअग्गला भोगल इति प्रसिद्धा सा मया सुजनानां अग्रे प्रारब्धा कथा । यां शृण्वन्तः पापर्द्धिका अपि बुद्धाः यत्र परमाधार्मिकैर्मस्तकादीनि छिद्यन्ते(?) तन्नरककथा प्रारब्धेति भावः ।

१ नयणु E २ गिण्हइ E. ३ वयण A. ४ मिल्लइ E ५ मुद्धिहिं L, मुद्धाहं ACDN. ६ मुच्छइ A. ७ सकुलमिति A. ८ आमुलुवि N. ९ नवघणभमतसंत० A १० सुह० NS ११ तेहु N. १२ निसुणंतं NS १३ त्येके A. १४ अवस्थक D.

[1]निद्दड्ढ दड्ढविरहानलेण, संतावतुलिअवडवाणलेण।
मुच्छाविअ नवघणमंडलेण, उअ थक्क पहिअ कयचंवलेण॥ ३१.१॥

**धवलमष्टषट्चतुष्पात्॥ ३२॥**

अष्टपात्पट्पाच्चतुष्पाच्च धवलं नाम छन्दः। यदाह–

धवलनिहेण सुपुरिसो वण्णिज्जइ जेण तेण सो धवलो।
धवलो वि होइ तिविहो अट्ठपओ छप्पओ चउप्पाओ॥ ३२.१॥

धवलानि च सातवाहनोक्तिषु द्रष्टव्यानि। दिग्मात्रं तूदाहरिष्यते॥ ३२.१॥

**तत्राष्टांह्रावोजे चिदौ समे चौ श्रीधवलम्॥ ३३॥**

तत्र धवलेषु मध्येऽष्टांह्रौ धवले विषमेषु पादेषु चत्रयं द्विमात्रश्चैकः, समेषु पादेषु चद्वयं यत्र तच्छ्रीधवलम्। वसन्तलेखेत्यन्ये। यथा–

[2]खीरसमुद्दिण लवणजलहि, कुवलय कुमुइहिं।
कालिंदी सुरसिंधुजलिण, महुमहणु हरिण॥
कइलासिण सरिसउ हू किरि, सो अंजणगिरि।
इह तुह जससिरिधवलिउ पहु, किं पंडुरु न हु॥ ३३.१॥

**आद्ये तृतीये चिदौ द्वितीये तुर्ये चिः शेषे**
**त्वोजे चातौ समे चादौ चिर्वा यशोधवलम्॥ ३४॥**

अष्टांह्रौ धवले आद्यतृतीययोः पादयोश्चगणत्रयं द्विमात्रश्च। द्वितीयचतुर्थयोश्च-गणत्रयम्। शेषेषु चतुर्षु पादेष्वोजयोः पञ्चमसप्तमयोर्द्वौ चगणौ त्रिमात्रश्चैकः, समयोः षष्ठाष्टमयोः चगणद्वयं द्विमात्रश्चैकः, मतान्तरे चगणत्रयं वा, यत्र तद्यशोधवलम्। यथा–

[3]जे तुह पिच्छहिं वयणकमलु, ससहरमंडलनिम्मलु।
जे वि हु पालहिं भिच्चकम्मु, थुणहिं जि निरुवमु विक्कमु॥

---

1) निद्दड्ढइत्यत्र निर्दग्धा ज्वलिताः। दग्धः पापीयान् विरहानलस्तेन संतापतुलितवडवानलेन मूर्च्छां ग्राहिताः। नववनमण्डलेन कर्तृभूतेन उग्रावलयेन स्थिताः पथिका. कृतदुःखेन। 2) खीरसमुद्दिणे-त्यत्र हे प्रभो तव यशःश्रिया धवलिते सति के के पाण्डुरत्वं न प्रापु। क्षीरसमुद्रस्य सदृशो लवणजलनिधिः हू इति जातः। कुवलयानि श्यामकमलानि कुमुदसदृशानि जातानि। कालिन्दी यमुना सुरसिन्धुजलसदृशी जाता। मधुमथनो हरिः रुद्रस्य सदृशो जातः। किरि इति किलार्थम्। सोऽञ्जनगिरिः कैलाससदृशो जातः। 3) जे तुह पिच्छहि इत्यत्र ये पुरुषाः तव पश्यन्ति वदनकमलम्। कीदृक्। शशधरमण्डलवन्निर्मलम्। ये पुरुषास्ते तव भृत्यकर्म पालयन्ति। ये नरा निरुपमविक्रमं स्तुवन्ति। ये पुरुषा शासनमाज्ञां धरन्ति। ये पादकमलं प्रणमन्ति। तेषां विमुही पराङ्मुखी लक्ष्मीर्न भवति। हे यशोधवलितदिङ्मुख।

---

१ निद्दद० N, निद्दद० AB, निद्दद्दड्ढ CDK २ विरहाणलेग P ३ वडवानलेन A ४ मुत्थाविअ N. ५ ओ थक्क B, उत्थक PK ६ अष्टपात्-षट्पात्-चतुष्पात् N ७ सुउरिसो F ८ वन्निज्जइ AF, वज्जण्णिइ C ९ कुसुयहिं CDN. १० महुमहण D ११ हरिणु F १२ कइलासण C १३ कि पडरु A, किं पंडरु E १४ चगणत्रयं A १५ तद्योगो० C १६ पिच्छहि NS, पेच्छहि BF १७ मडलुनिम्मल A १८ थुणिहि A १९ निरुवमवि० AF.

जे वि हु सासणु[1] धरहिं, पायकमलु जे पणमहिं ।

ताहं न[2] लच्छी विमुह, पहु जसधवलिअदिसिमुह[3] ॥ ३४.१ ॥

**पडंह्नावाद्ये तुर्ये पादौ द्वितीये पञ्चमे**

**चौ शेषे पाभ्यां चः पो वा कीर्तिधवलम् ॥ ३५ ॥**

तत्र पडंह्नौ धवले प्रथमे चतुर्थे च पादे द्वौ पण्मात्रावेको द्विमात्रः । द्वितीये पञ्चमे च पादे द्वौ चतुर्मात्रौ । शेषे तृतीये षष्ठे च पगणद्वयात्परश्चतुर्मात्रः पञ्चमात्रो वा चेत् तदा कीर्तिधवलम् । यथा –

[1)]उक्करडा खवलेउ[4] गज्जउ, चिरु जुज्झुमणु[5],

उन्नामउ सिरु कसरु म लज्जउ[6] ।

थक्क महव्भर तुहुं[7] कड्टहिं[8], अन्नु[9] न तिहुअणि[10],

क्विति धवल विसाउ[11] तुह वट्टइं[12] ॥ ३५.१ ॥

**चतुरंह्नावोजे षश्चौ समे पचचाद्न्तो वा गुणधवलम् ॥ ३६ ॥**

तत्र चतुरंह्नौ धवले विषमपादयोरेकः षण्मात्रो द्वौ चतुर्मात्रौ । समयोः पचचेभ्यः परो द्विमात्रस्त्रिमात्रो वा चेत् तदा गुणधवलम् । यथा –

[2)]कद्दमभग्गा मग्गुलया, वहुं[13] पिहुला दुत्तरजलुल्लया ।

तिम्व भरु वहेसु[14] गुणधवलया, जिम्व केम्वइ न हसंति पिसुणया ॥ ३६.१ ॥

**पचताः पचौ भ्रमरः ॥ ३७ ॥**

ओजपादयोः पण्मात्रचतुर्मात्रत्रिमात्राः समयोः पण्मात्रचतुर्मात्रौ चेत्तदा भ्रमरो धवलम् । यथा –

[3)]किति तहारी वण्णविणु[15], कइ अन्नु[16] न वण्णहिं[17] ।

मालइ माणिवि किं भमर, धत्तूरइं[18] लग्गहि[19] ॥ ३७.१ ॥

---

1) उक्करडा खवलउ इत्यत्र मयि धुरंधरे भार समुद्वहति सति साहंकृतिन्वं सूचयत्येप मदग्रे वल्स इत्युत्पन्नखेदं वृषभं प्रति कश्चिदाह । हे धवल त्वत्सदृशस्त्रिभुवने कोऽपि नास्ति । यस्मान्मार्गस्थितभार त्वमेव कृष्यसि नान्य इत्यतस्तव विषादः किं वर्तते । स च वलोऽवक्रं उत्खलतु गर्जारवं करोतु । चिरं चोद्धुमनाः स च शिर उन्नामयतु । मा लजतां व्रीडां मा करोत्विति शब्दार्थ. । 2) कर्दमभग्गा मग्ग(ग्गु)लयेत्यत्र हे सुराणां वृषभ धवलशब्देन वृषभः । कर्दमभग्ना मार्गा दुस्तरजलवन्तः । पृथुला वहा नद्यः सन्ति । तेन तथा भार वह यथा तेन ते पिशुना न हसन्ति हास्यं न कुर्वन्ति कथमपि । अन्यया करिष्यन्ति । 3) किति तहारी इत्यत्र त्वदीयां कीर्तिं वर्णयित्वा कवि· किं वर्णयति । अपि तु न । कथम् । यथा मालतीं माणवि अङ्गीकृत्य भ्रमरः कनकद्रुमे किं लगति । अपि तु न तथायम् ।

---

१ सासण AC. २ ता हंत लच्छी N ३ दिसमुह A, दिसिमुहु B. ४ खलचउ N; खचलउ S; खलवउ O ५ जुज्झमणु AO ६ मलयजउ B ७ तुहं B ८ कड्डउ B, कट्टहिं DN. ९ अनुन्न N. १० तिहूअणि A ११ विसाओ N. १२ वट्टहिं A Portion from ३२-१ to ३५-१ end is not photographed in P. १३ वह P १४ वहुसु B. १५ विग्गविणु D. १६ अनुन्न N. १७ वणहिं N, वण्णिहि AP. १८ वत्तुरइ NS, १९ लग्गइं P.

**पचताः षचचा अमरम् ॥ ३८ ॥**

ओजे षण्मात्रचतुर्मात्रत्रिमात्राः समे षण्मात्र एकश्चतुर्मात्रौ द्वौ चेत्तदा अमरं धवलम् । यथा—

[1]इंदहु तुहुं गुणि अहिअउ, सग्गु वि[3] पहु मइं चाहिअउं[4] ।
अमरविलासिणिगीअए, तुह पर कित्ति निसामिअए[5] ॥ ३८.१ ॥

**आद्ययोः षची अन्त्ययोश्चुः सर्वत्रान्ते तो दो वा मङ्गलम् ॥ ३९ ॥**

आद्ययोः प्रथमद्वितीययोः पादयोः प्रत्येकं षगणश्चगणत्रयं च, अन्त्ययोस्तृतीय-चतुर्थयोः प्रत्येकं चगणपञ्चकं सर्वपादेषु चान्ते त्रिमात्रो द्विमात्रो वा चेत्तदा मङ्गलार्थ-संबद्धत्वात् मङ्गलम् । यथा—

[2]तुह असिलट्ठिहिं नरवइ मंगलकारणि[6],
वित्थारिअ निम्मलयर सत्थिअधोरणि ।
संगररंगि विवाहमहूसवि जयलच्छिहिं,
दारिअमयगलकुंभत्थलमोत्तिअगुच्छिहिं[7] ॥ ३९.१ ॥

**उत्साहादिना येनैव धवलमङ्गलभाषागाने[8]**
**तन्नामाद्ये धवलमङ्गले ॥ ४० ॥**

उत्साहादीत्यादिग्रहणात् प्रक्रान्तानां रासावलयादीनां, पूर्वोक्तानां हेलादीनां, वक्ष्यमाणानां दोहकादीनां[9] च ग्रहणम् । [3]तन्नामाद्ये इति उत्साहादिनामपूर्वके । यथा—उत्साहधवलं वदनधवलं हेलाधवलं दोहकधवलं चेति । एवं मङ्गलेऽपि उत्साहमङ्गलादि वाच्यम् । यदाहुः—

उत्साहहेलावदनाडिलाद्यैर्, यद् गीयते मङ्गलवाचि किञ्चित् ।
[4]तद्रूपकाणामभिधानपूर्वं[10], छन्दोविदो मङ्गलमामनन्ति ॥ ४०.१ ॥

तैरेव धवलैर्व्याजात्[11] पुरुषः स्तूयते यदा ॥
तद्वदेव तदानेको धवलोऽप्यभिधीयते ॥ ४०. २ ॥

---

1) इंदहु तुहुं इत्यत्र इन्द्रात्त्वं गुणैरधिकः स्वर्गस्यापि प्रभुस्त्वं मया दृष्टः यस्मादमरविलासिनीगीतके तव परा प्रकृष्टा कीर्तिः श्रूयते । एतावता राज्ञोऽतिशयो द्योतितोऽमरविलासिनीभिस्त्वं गीयसे । 2) तुह असिलट्ठिहिं इत्यत्र हे नरपते तव खड्गयष्ट्या मङ्गलनिमित्तं निर्मलस्वस्तिकधोरणी विस्तारिता सगरमण्डपे । कैः । दारितमदकलकुम्भस्थलमौक्तिकगुच्छैः । समूहैरित्यर्थः । कस्मिन्सति । विजयलक्ष्म्या विवाहमहोत्सवे सति । 3) तन्नामाद्ये इत्यत्र धवलमङ्गलेति नामद्वयम् । 4) तद्रूपकाणामित्यत्र उत्साहादिरूपकाणामभिधानपूर्वकं एव । तैरेवेति अत्र उत्साहादिभिरेव । तद्वदेवेत्यत्र तद्रूपकाणामभिधानपूर्वकं एव ।

---

१ अमरधवलं A. २ इंदह P ३ सग्गहु K (?) ४ चाहिअउ BCD ५ निसामिइए P ६ संगल-कारिणि ABS. ७ मोत्तियगोच्छिहिं P. ८ भाषागीते A ९ दोहदीनाम् A. १० तद्रूपकनामभि० A ११ मङ्गल्व्या० B

**देवगानं फुल्लडकम् ॥ ४१ ॥**

उत्साहादिना येनैव देवो गीयते तत्फुल्लडकम् ॥ ४१ ॥

**गाने चिदौ झम्बटकम्[1] ॥ ४२ ॥**

यस्य कस्यचिद्गाने चगणत्रयं द्विमात्रश्च पादे चेत्तदा झम्बटकम् । यथा–

[1]"पहु तुह वेरि[2] अरण्णि गय, निच्चु वि निवसहिं जिम्व ससय ।
घणकंटयदूसंचरणि[3], तहिं झंबडइ करीरवणि ॥ ४२.१ ॥

वक्ष्यमाणा गन्धोदकधारैवेयं गानवशाज्झम्बटकसंज्ञां लभते ॥ ४२.१ ॥

उत्साहादिप्रकरणम् ।

*

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ
उत्साहादिप्रतिपादनः पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥
ग्रन्थाग्रं १८८; उभयं २२८४ ।



1) पहु तुह इत्यत्र हे प्रभो तव वैरी अरण्यगतः सन् नित्यं यथा शशको निवसति तथायम् । क । करीरवने । कीदृशे । अनुच्चसंहते निम्नमिलिते घनकण्टकदुःसंचरे ।

इत्याचार्येति पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

१ झम्बडकं B. २ वेरिय रन्नि A; वेरि अरन्नि P. ३ दुसंचरणि N.

# अथ षष्ठोऽध्यायः ।

सन्ध्यादौ कडवकान्ते च ध्रुवं स्यादिति ध्रुवा ध्रुवकं घत्ता वा ॥ १ ॥

कडवकसमूहात्मकः सन्धिस्तस्यादौ । चतुर्भिः पद्धडिकाद्यैश्छन्दोभिः कडवकम् । तस्यान्ते ध्रुवं निश्चितं स्यादिति ध्रुवा, ध्रुवकं, घत्ता चेति[2] संज्ञान्तरम् ॥ १ ॥

सा त्रेधा षट्पदी चतुष्पदी द्विपदी च ॥ २ ॥

सेति ध्रुवा ॥ २ ॥

कडवकान्ते प्रारब्धार्थोपसंहारे आद्ये छड्डणिका च[1] ॥ ३ ॥

प्रारब्धस्य प्रकरणायातस्यार्थस्य कडवकान्ते भङ्ग्यन्तरेणाभिधाने षट्पदीचतुष्पद्यावेव छड्डणिकासंज्ञे । न केवलं ध्रुवादिसंज्ञे छड्डणिकासंज्ञे चेति चार्थः ॥ ३ ॥

षट्पदीचतुष्पदीध्रुवयोश्च सप्तकलादयः सप्तदशकलान्ताः पादा भवन्तीति[3] तेषु गणनियममाह –

ध्रुवायां छैः कलाभिः पादे चतौ पदौ वा ॥ ४ ॥

ध्रुवायां छैरिति सप्तभिः कलाभिः पादे चतुर्मात्रत्रिमात्रौ पञ्चमात्रद्विमात्रौ वा गणौ भवतः ॥ ४ ॥

जैः पतौ पदौ चौ वा ॥ ५ ॥

जैरित्यष्टभिः कलाभिः पादे पञ्चमात्रत्रिमात्रौ षण्मात्रद्विमात्रौ द्वौ वा चतुर्मात्रौ गणौ भवतः ॥ ५ ॥

झैः षतौ तिः पचौ वा ॥ ६ ॥

झैरिति नवभिः कलाभिः पादे षण्मात्रत्रिमात्रौ त्रिमात्रत्रयं पञ्चमात्रचतुर्मात्रौ वा गणौ भवतः ॥ ६ ॥

ञैश्चादौ षचौ पौ वा ॥ ७ ॥

ञैरिति दशभिः कलाभिः पादे चतुर्मात्रद्वयद्विमात्रौ षण्मात्रचतुर्मात्रौ द्वौ वा पञ्चमात्रौ गणौ भवतः ॥ ७ ॥

---

अथ षष्ठाध्यायस्य पर्याया आरभ्यन्ते ।

1) आद्ये छड्डणिका चेत्यत्र प्रथमे षट्पदीचतुष्पद्यौ [छड्डणिका]संज्ञे ।

---

१ पद्धटिकाद्यै P. २ चेति BCN. ३ भवन्ति तेषु P ४ पञ्चमात्रौ वा गणौ॰ A

**टैश्चपदं पचदं पदनं चातौ वा ॥ ८ ॥**

टैरित्येकादशभिः कलाभिः पादे चतुर्मात्रपञ्चमात्रद्विमात्राः पञ्चमात्रचतुर्मात्रद्विमात्राः षण्मात्रद्विमात्रत्रिमात्राश्चतुर्मात्रद्वयत्रिमात्रौ वा गणा भवन्ति ॥ ८ ॥

**ठैश्चपनं पचदं पादौ चिर्वा ॥ ९ ॥**

ठैरिति द्वादशभिः कलाभिः पादे चतुर्मात्रपञ्चमात्रत्रिमात्राः षण्मात्रचतुर्मात्रद्विमात्राः षगणद्वयद्विमात्रौ चतुर्मात्रत्रयं वा गणा भवन्ति ॥ ९ ॥

**डैः पातौ चापौ षचतं वा ॥ १० ॥**

डैरिति त्रयोदशभिः कलाभिः पादे पञ्चमात्रद्वयत्रिमात्रौ चतुर्मात्रद्वयपञ्चमात्रौ षण्मात्रचतुर्मात्रत्रिमात्रा वा गणा भवन्ति ॥ १० ॥

**ढैश्चिदौ षचचं वा ॥ ११ ॥**

ढैरिति चतुर्दशभिः कलाभिः पादे चतुर्मात्रत्रयद्विमात्रौ षचचा वा गणा भवन्ति ॥ ११ ॥

**णैश्चितौ पिर्वा ॥ १२ ॥**

णैरिति पञ्चदशभिः कलाभिः पादे चतुर्मात्रत्रयत्रिमात्रौ त्रयो वा पञ्चमात्रा गणा भवन्ति ॥ १२ ॥

**तैः षचादं चीर्वा ॥ १३ ॥**

तैरिति षोडशभिः कलाभिः पादे षण्मात्रचतुर्मात्रद्वयद्विमात्राश्चत्वारो वा चतुर्मात्रा गणा भवन्ति ॥ १३ ॥

**थैः षचातं चिपौ वा ॥ १४ ॥**

थैरिति सप्तदशभिः कलाभिः पादे षण्मात्रचतुर्मात्रद्वयत्रिमात्राश्चतुर्मात्रत्रयपञ्चमात्रौ वा गणा भवन्ति ॥ १४ ॥

एवं च सप्तादिसप्तदशान्तकलौघैस्त्रिभिरतुल्यैः[1] तुल्यातुल्यैः तुल्यैर्वार्धे पादा यत्र भवन्ति सा विदग्धगोष्ठीगरिष्ठा षट्पदी ध्रुवा। षट्पदीषु चाद्यस्य पादस्य द्वितीयेन तृतीयस्य षष्ठेन चतुर्थस्य पञ्चमेनानुप्रासः कर्तव्यः[1]। चतुष्पदीष्वाद्यस्य द्वितीयेन तृतीयस्य चतुर्थेन। अन्तरसमासु सङ्कीर्णासु च प्रायेण द्वितीयस्य चतुर्थेनानुप्रासः कार्यः[2]। तत्र षट्पदीभेदानाह—

**तृतीयषष्ठयोर्दशादिसप्तदशान्ताः कलाः शेषेषु**
**सप्त षट्पदी षट्पदजातिरष्टधा ॥ १५ ॥**

1) त्रिभिरतुल्यैरिति-तुल्यकलालक्षणं वा अर्धसमं एकः पादोऽपरं द्वयं चान्यत्। अथवा सर्वैरप्यन्यैः।

१ कार्य. A. २ कर्तव्य A.

तृतीयषष्ठयोः पादयोः दशादयो मात्राः एकैकवृद्ध्या यावत् सप्तदश, अन्येषु चतुर्षु पादेषु सप्तैव यत्र भवन्ति, सा षट्पदजातिर्नाम षट्पदी भवति । सा च दशादीनां सप्तदशान्तानामष्टविधत्वादष्टधा । तत्राद्या यथा—

[1]इअ नारिहिं, रससारिहिं, मुहपरि[1]मललुद्धउ ।
[2]ढुरु ढोल्लइ, न हु मे[3]ल्लइ, छप्पय[4]गणु मुद्धउ ॥ १५.१ ॥

एवं शेषभेदेषूदाहार्यम् ॥ १५.१ ॥

अष्टो[5]पजातिः ॥ १६ ॥

तृतीयषष्ठयोः पादयोर्दशादिसप्तदशान्ताः कलाः शेषेष्वष्टौ चेत्तदोपजातिर्नाम षट्पदी । पूर्ववदष्टधा । तत्राद्या यथा—

[2]इअ उवजाइहिं, सुरहिअवाइहिं, गुंजिरघणछप्पउ ।
उव वण सारउ, केअइफारउ, क[6]स्सु नवि रइ अप्पउ ॥ १६.१ ॥

एवं शेषभेदेषूदाहार्यम् ॥ १६.१ ॥

नवावजातिः ॥ १७ ॥

तृतीयषष्ठयोः पादयोर्दशादिसप्तदशान्ताः कलाः शेषेषु नव चेत्तदा अवजातिर्नाम षट्पदी । पूर्ववदष्टधा । तत्राद्या यथा—

[3]इअ वणराइहिं, अहिणवजाइहिं, छप्पउ परिभमइ ।
मालइरत्तउ, महुरसमत्तउ, जलयागमसमइ ॥ १७.१ ॥

एवं शेषभेदेषूदाहार्यम् । एवं षट्पदजात्युपजात्यवजातीनां प्रत्येकमष्टविधत्वाच्चतुर्विंशतिधा षट्पदी ॥ १७.१ ॥

चतुष्पदी वस्तुकं वान्तरसमार्धसमा संकीर्णा सर्वसमा च ॥ १८ ॥

वस्तुकमिति चतुष्पद्या एव नामान्तरम् । [4]तुल्यसमपादा तुल्यविषमपादा च अन्तरेण व्यवधानेन समान्तरसमा । तुल्यप्रथमद्वितीयपादा तुल्यतृतीयचतुर्थपादा चार्धसमस्या अर्धसमा । व्यामिश्रा सङ्कीर्णा । तुल्यचतुष्पादा सर्वसमा ॥ १८ ॥

---

1) इअ नारिहिं इत्यत्र एष रससारायाः नार्याः मुखपरिमललुब्धः सन् मुग्धः षट्पदगणः पार्श्वं न मुञ्चति । हु निश्चितम् । 2) इअ उवजाइहि इत्यत्र गुञ्जद्बहुषट्पदं सारं प्रधानं केतकीस्फारं एतद्वनं कस्य रइं रतिं नार्पयति । काभिः । उपजातिभिः समीपस्थजातिभिः । कथंभूताभिः । सुरभितवाताभिः । 3) इअ वणराइहिमित्यत्र एष षट्पदोऽभिनवजातिषु वनराजिषु परिभ्रमति । क । जलदागमसमये मेघसमये । कीदृशः । मालत्यां रक्तः । पुनः कीदृग् । मधुरसमत्तः । 4) तुल्यसमपादेति – तुल्यौ सदृशौ समौ द्वितीयतुर्यौ पादौ यस्याः अथवा तुल्यौ विषमौ प्रथमतृतीयौ यस्याः इति लक्षणेनान्तरं व्यवधानं भवति ।

---

१ परिमलु०S २ ढुर B, ढुरु DN ३ मिल्लइ E ४ गण E, गुण A ५ अष्टौ पजाति A, अष्टौ उपजाति N, ६ कुसु D,

तत्रान्तरसमाः प्राह –

[1]चतुष्पदी कला ओजे सप्ताद्याः षोडशान्ताः समे प्रत्येकं सैकाः सप्तदशान्ताः 'चम्पककुसुम-सामुद्रक-मल्हणक-सुभगविलास-केसर-रावणहस्तक-सिंहविजृम्भित-मकरन्दिका-मधुकरविलसित-चम्पककुसुमावर्त्ताः (१०)। मणिरत्नप्रभा-कुङ्कुमतिलक-चम्पकशेखर-क्रीडनक-वकुलामोद-मन्मथतिलक-मालाविलसित-पुण्यामलक-नवकुसुमितपल्लवाः (९)। मलयमारुत-मदनावास-माङ्गलिका-अभिसारिका-कुसुमनिरन्तर-मदनोदक-चन्द्रोद्द्योत-रत्नावल्यः (८)। भ्रवणक-मुक्ताफलमाला-कोकिलावली-मधुकरवृन्द-केतकीकुसुम-नवविद्युन्माला-त्रिवलीतरङ्गकाणि (७)। अरविन्दक-विभ्रमविलसितवदन-नवपुष्पन्धय-किन्नरमिथुनविलास-विद्याधरलीला-सारङ्गाः (६)। कामिनीहास-अपदोहक-प्रेमविलास-काञ्चनमाला-जलधरविलसिताः (५)। अभिनवमृगाङ्कलेखा-सहकारकुसुममञ्जरी-कामिनीक्रीडनक-कामिनीकङ्कणहस्तकाः (४)। मुखपालनतिलक-वसन्तलेखा-मधुरालापिनीहस्ताः (३)। मुखपङ्क्ति-कुसुमलतागृहे (२)। रत्न[3]माला' (१)। इति पञ्चपञ्चाशद्भेदा[4] ॥ १९ ॥

ओजयोः सप्ताद्याः षोडशान्ताः कलाः समयोस्ता एवैकाधिकाद्याः सप्तदशान्ताः प्रत्येकं यत्र भवन्ति सा चतुष्पदी चम्पककुसुमादिसंज्ञा। अयमर्थः – ओजे सप्त कलाः समे सैकाद्या अष्टाद्याः सप्तदशान्ता यत्र भवन्ति सा चम्पककुसुमादिभेदेन दशविधा। एवमोजेऽष्टकलाः समे सैकाद्या नवाद्याः सप्तदशान्ता यत्र भवन्ति सा मणिरत्नप्रभादिभेदेन नवविधा। तथा ओजे नव समे सैकाद्याः दशाद्याः सप्तदशान्ता यत्र भवन्ति सा चतुष्पदी मलयमारुतादिभेदेनाष्ट[6]विधा। यावदोजे षोडश समे सप्तदश यत्र भवन्ति सा रत्नमालासंज्ञा चतुष्पदी। एवं पञ्चपञ्चाशच्चतुष्पदीभेदाः। तत्रौजे सप्त समेऽष्टौ चम्पककुसुमम्। यथा –

[1)]अंगचंगिम, जइ गोरंगिहिं।
चंपयकुसुम, ता कह अग्घहिं[7] ॥ १९.१ ॥

ओजे सप्त समे नव सामुद्रकम्। यथा –

[2)]जइ बोल्लइ, धण[8] उक्कंठिअ।
सा मुद्दउ, मुहु कलयंठिअ ॥ १९.२ ॥

1) अंगचंगिमेत्यत्र यदि गौराङ्ग्या अङ्गचङ्गिमा स्यात्तदा चम्पककुसुमानि कथं अर्घ्यन्ते। 2) जइ बोल्लइ इत्यत्र यदि सा उत्कण्ठिता सती धन्या जल्पति तदा कलकण्ठी मुखं मुद्रयतु।

१ चतुष्पदी dropped in BEFP. २ नव dropped in H. ३ रत्नमाला चेति पञ्च० BFGH. ४ भेदा. ABONP ५ ना अन्तरसमा च० P. ६ अष्टधा A. ७ अघिहिं E अग्घहि P. ८ घण NS.

ओजे सप्त समे दश मल्हणकम् । यथा –

[1]कहिं हंसिहिं, तल्लोव्वेल्लणउं ।
जेउ[1] दीसइ, गउ तहिं मल्हणउं ॥ १९.३ ॥

ओजे सप्त समे एकादश सुभगविलासः । यथा –

[2]पइं विणु तहिं, सुहय विलासु कवणु ।
विणु चंदइ[2], मुहु जामिणिहिं कृवणु[3] ॥ १९.४ ॥

ओजे सप्त समे द्वादश केसरम् । यथा –

[3]मेल्हि[4] माणु, वल्लहिं करि अणुराउ ।
ओ उँड्डिउ[5], केसरकुसुमपराउ[6] ॥ १९.५ ॥

ओजे सप्त समे त्रयोदश रावणहस्तकः । यथा –

[4]लेहि वीण, करि धरि रावणहत्थँउ[7] ।
जिणमज्जणि, सुरहिं दिण्णु सम्वहत्थउ ॥ १९.६ ॥

ओजे सप्त समे चतुर्दश सिंहविजृम्भितम् । यथा –

[5]छुहखामु वि, जं मयजूहु न तिणु चरइ ।
तं अज्ज वि, सीहविअंभिउँ[8] विप्फुरइ[9] ॥ १९.७ ॥

ओजे सप्त समे पञ्चदश मकरन्दिका । यथा –

[6]कुसुमंतरि, नवि लग्गइ अलि अवनिद्दिअइ ।
आसत्तउ, मालइहि वहलमयरंदिअहि ॥ १९.८ ॥

ओजे सप्त समे षोडश मधुकरविलसितम् । यथा –

---

1) कहि हंसिहि इत्यत्र क हंस्याः तल्लं सरसी तत्रोद्वेल्लनकं क्रीडनकम् । क्वापि नेत्यर्थः । यदि तस्या गतगमनं मल्हणकं सविलासं दृश्यते तदेत्यर्थः । 2) पइं विणु तहिमित्यत्र हे सुभग त्वया विना कलाविलासः कवणु कीदृशः । न किमपीत्यर्थः । चन्द्रेण विना यथा यामिन्याः मुखं कृपणं दीनं भवतीत्यर्थः । 3) मेल्हि माणु इत्यत्र हे सखि मानं मुञ्च वल्लभेऽनुरागं कुरु । ओत्ति – पश्य । केसरो वृक्षविशेषस्तस्य परागः । उड्डिओत्ति – प्रसृतः । व्याप्त इत्यर्थः । वसन्तागमसूचनमिति । वसन्ते मदनातुरा भविष्यसि अतएव भर्तारं मानयेत्यर्थः । 4) लेहि वीण करीत्यत्र रावणहस्तकः आतोद्यं यत् पुरा दशास्येनाष्टापदे जिनेन्द्राणामग्रे स्वहस्तनसामुत्पाद्य वादितं त्रितन्त्रीरूपं वृद्धपंकं (?) वाद्यम् । वीणां लात्वा करे धृत्वा रावणहस्तकं जिनमज्जनसमये सुरैर्गानं कृतमित्यध्याहारः । कथम् । दत्तसम्मुखहस्तकं यथा भवति तथा । 5) छुहखामु वि इत्यत्र क्षुत्क्षाममपि यन्मृगयूथं तृणं न चरति तत्सिंहविजृम्भितमद्यापि स्फुरति । 6) कुसुमंतरीत्यत्र अलिरपनिद्रे विकसिते कुसुमान्तरे न लगति वहलमकरन्दिकायां माल्त्यामासक्तः सन् ।

---

१ जइ P  २ चंदय P  ३ कवणु CNS  ४ मेल्हि K  ५ उद्दिओ N.  ६ पराओ N  ७ हत्थओ BOD  ८ सीह विअभिय A  सीसीहवि० N.  ९ विफुरइ BD.

[1]जं जाइहि, किंत्ति दिअंतरु[1] धवलइ सयलु ।
तं जाणेसु[2], माणिणि महुअरविलसिउँ[3] पवलुँ[4] ॥ १९.९ ॥

**ओजे सप्त समे सप्तदश चम्पककुसुमावर्तः । यथा –**

[2]निअइ झुणइँ[5], परिरंभइ चुंवइ महुसुंडउ ।
अलि मुज्झइ, चंपयकुसुमावट्टि निवुड्डुउ[6] ॥ १९.१० ॥

एवं दश ॥ १९.१० ॥

**तथा । ओजे अष्टौ समे नव मणिरत्नप्रभा । यथा –**

[3]मणिरयणपहा-, पयडिअगिरिगुँहु[7] ।
साहइ भरँहु[8], सयलु वि दिसिमुहु ॥ १९.११ ॥

**ओजे अष्टौ समे दश कुङ्कुमतिलकम् । यथा –**

[4]रेहइ चंदो, नवपयडिअकलओ ।
पुव्वदिसाए, किर कुंकुमतिलओ ॥ १९.१२ ॥

**ओजे अष्टौ समे एकादश चम्पकशेखरः । यथा –**

[5]अलिरवगीईं, कयचंपयसेहरँ[9] ।
महुसमयसिरी, उँअ[10] जणहु मणोहर ॥ १९.१३ ॥

**ओजे अष्टौ समे द्वादश क्रीडनकम् । यथा –**

[6]सहि वट्टुलँउ[11], चंदुल्लउ पडिहाइ ।
रयणिवहूए, कीलणगंडुँउ[12] नाँइँ[13] ॥ १९.१४ ॥

**ओजे अष्टौ समे त्रयोदश वकुलामोदः । यथा –**

[7]मन्नावि प्रिउ, जइ वि हु सो कयदुन्नँउ[14] ।
जं महमहइ, दुसहउ वउलामोअँउँ[15] ॥ १९.१५ ॥

---

1 ) जं जाइहिमित्यत्र । यत् जातिः कीर्त्यां ( जातेः कीर्तिः ? ) धवलीकरोति । किम् । दिगन्तरम् । तत् हे मानिनि मानय भ्रमरविलसितम् । अत्र अन्योक्तिः स्वप्रथा तस्या गौणकथनम् । 2 ) निअइ झुणइ इत्यत्र हे मित्र पश्य । शौण्ड इव शौण्डो मद्यप. । मत्तश्चासौ शौण्डश्च मत्तशौण्डोऽलिर्निरीक्षते ध्वनति परिरम्भति उपगूहति चुम्बति चम्पककुसुमावर्ते निमग्नः सन्मुह्यति मोहं भजति । 3 ) मणिरयणेत्यत्र मणिरत्नप्रभाभिः प्रकटिता गिरिगुम्फा यस्मात् स तथा । एवंविधो भरत. साधयति सकलमपि दिङ्मुखम् । 4 ) रेहइ चंदो इत्यत्र राजते चन्द्रः नूतना प्रकटिता कला येन स. । किलेति उत्प्रेक्षते । पूर्वदिशः कुङ्कुमतिलकः । 5 ) अलिरवेत्यत्र अलिरव एव गीतिर्गानं यस्याः सा कृतश्चम्पक एव शेखरो यया सा । अयं स्त्रीधर्मः । एवंविधां जनानां मनोहरां मधुसमयश्रीं(श्रियं) पश्य विलोकयेत्यर्थः । 6 ) सहि वट्टुलउ इत्यत्र हे सखि वृत्तश्चन्द्रः प्रतिभाति । नाइ इति उत्प्रेक्षते । रजनीवध्वाः क्रीडागेन्दुकः । 7 ) मन्नावि इत्यत्र हे सखि यद्यपि कृतदुर्नयः प्रियो वर्तते तथापि । मन्नावीति – आत्मसात्कुरु । यस्मान्महमहेति इति गन्धं भजते । कः । दु.सहो वकुलामोदः । वसन्तागमसूचनमिति ।

---

१ दिअनरु N; दिगंतरु A. २ जाणिसु B, माणसु K, ३ विलसिअ A. ४ पचलु A. ५ ज्झुणइ A; सुणइ N; झणइ S. ६ निवुहुओ N ७ गिरिगुह BF ८ भरहो F. ९ सिहर N. १० ओअ N. ११ वट्टुलओ N. १२ गेंडुउ P, गंडुओ N. १३ ताइ N. १४ प्रिओ–दुन्नओ N. १५ मोअओ N.

ओजे अष्टौ समे चतुर्दश मन्मथतिलकम्। यथा–

[1)]निम्मलि[1] गयणि, समुग्गउ[2] चंदु विहावइ।
रइए[3] रइउ, वम्महतिलउ[4] नवु नावइ॥ १९.१६॥

ओजे अष्टौ समे पञ्चदश मालाविलसितम्। यथा–

[2)]कमलिणिपासि, अलिमाला विलसिअ[5] संपइ।
कलरवमिसिण, किर मित्तसमागमु[6] जंपइ॥ १९.१७॥

ओजे अष्टौ समे षोडश पुण्यामलकम्। यथा–

[3)]मइं असरण तुहुं, अइनिद्दय[7] नडसि कुसुमाउह[8]।
जं किर पुण्णा[9], मलयसमीरिण सयल वि कउहं[10]॥ १९.१८॥

ओजे अष्टौ समे सप्तदश नवकुसुमितपल्लवः। यथा–

[4)]कंपिअ निअवि, नवकुसुमिअपल्लव सललिअ लय।
संभरि दइअ, पंथिअसत्थे[11] तक्खणि गय विलय॥ १९.१९॥

एवं नव॥ १९.१९॥

तथा। ओजे नव समे दश मलयमारुतः। यथा–

[5)]देक्खिवि[12] वेल्लडी, मलयमारुअधुआ[13]।
सुमरिवि गोरडी, पंथिअसत्थ मुआ[14]॥ १९.२०॥

ओजे नव समे एकादश मदनावासः। यथा–

[6)]जं धणलोअण, झसझय चल दीसहिं[15]।
मयणावासउ, तं थणगुड्डुरि[16] सइं॥ १९.२१॥

---

1) निम्मलि गयणीत्यत्र निर्मले गगने समुद्गतश्चन्द्रो विभाति। नावइ इति इवार्थे। विभाव्यते रत्या रचितो मन्मथतिलक इव। 2) कमलिणिपासीत्यत्र कमलिनीपार्श्वे सांप्रतं अलिमाला विलसति। किलेति संभाव्यते। कलरवमिषेण मित्रस्य सूर्यस्य समागमं जपति कथयति। 3) मइं असरण इत्यत्र तस्मात्कारणात् हे कुसुमायुध मां अशरणां खेदयसि यस्मान्मलयसमीरणेन सकला अपि ककुभः पूर्णाः। 4) कंपिअ निअवीत्यत्र कम्पिताः। निअवीति–दृष्ट्वा। कुसुमितपल्लवा. सलीला लता.। स्मृत्वा च दयितां पथिकसार्थः विलयं मरणं प्राप्तः। 5) देक्खिवीत्यत्र दृष्ट्वा। का.। मलयमारुतधुता वल्ली.। ततो गौरी. स्मृत्वा। ता अपि चञ्चलरूपा भवन्ति। पथिकसार्थो मृतः। 6) जं धण इत्यत्र यत् धन्याया लोचनान्येव झषध्वजा· मत्स्यकेतवश्चला दृश्यन्ते। लोचनानि हि चपलत्वात् मीनरूपाणि वर्ण्यन्ते। तत् ज्ञायते मदनावासा. स्तनप्रदेशे सन्तीति।

---

१ निम्मलग॰ A २ समुग्गओ BN ३ रइप॰ N. ४ तिलओ N. ५ विम्मलसिअ N, विलसइ K ६ मेत्त॰ गमु B; मित्रसमागम A ७ अइनिद्दयं N ८ कुसुमहि उह N ९ पुप्फा N, पुन्ना P. १० कओह S. ११ सत्थु E. १२ दिक्खिवि E १३ धुअ BP १४ मुअ BP १५ दीसइ P. १६ घणगुहिर N, थणगुड्डिर AO, थणगुदुरि S

ओजे नव समे द्वादश माङ्गलिका। यथा—

1)प्रिअमहुसंगमि, उअ मंगलिअइं करइ।
किंसुअरूविण, वणसिरि घट्टइं धरइ॥ १९.२२॥

ओजे नव समे त्रयोदश अभिसारिका। यथा—

2)काली रत्तडी, घणिहिं नहंगणु रुद्धउ।
तो वि न वट्टहिं, अहिसारिअजणु खुद्धउ॥ १९.२३॥

ओजे नव समे चतुर्दश कुसुमनिरन्तरः। यथा—

3)सिद्धत्थ पुलय, कुसुम निरन्तरु हसिउ सिउ।
नवदइआगमि, अंगि जि मंगलु धणइ किउ॥ १९.२४॥

ओजे नव समे पञ्चदश मदनोदकम्। यथा—

4)वणरव दूसहा, दूहवइ मयणोदउ हिअउ।
पिअदूरट्ठिआ, पवसिअरमणिअणु कह जिअउ॥ १९.२५॥

ओजे नव समे षोडश चन्द्रोद्द्योतः। यथा—

5)कोइलकलरवु, चंदणु चंदुज्जोअविलासु।
वल्लहसंगमि, अमयरसु विरहि जलिउ हुआसु॥ १९.२६॥

ओजे नव समे सप्तदश रत्नावली। यथा—

6)मालइमालहिं, अलि सहहि नवमयरंदसइंण्ह।
णं रयणावलि, नीलमय पाउसदइइंण दिण्णं॥ १९.२७॥

एवमष्ट॥ १९.२७॥

तथा। ओजे दश समे एकादश भ्रूवक्रणकम्। यथा—

7)रेहइ तरुणिअणु, भूवंकणचंगउ।
आणावइ नाइ, तिहुअणजइ अंगउ॥ १९.२८॥

---

1) प्रियमहुसंगमीत्यत्र उअत्ति—पश्य। वनश्रीः प्रियो वल्लभो यो मधुर्वसन्तस्तस्य संगमे संबन्धे माङ्गलिकानि करोति। किंशुकरूपेण घट्टयुगलं दधाति। घटो घाटडीनि प्रसिद्धा। 2) काली रत्तेत्यत्र रात्रिः कृष्णा तथा गगनाङ्गणं घनैः रुद्धं तथापि मार्गे अभिसारिकाजनो न क्षुब्धः। भीत्यभाव इत्यर्थः। 3) सिद्धत्थेत्यत्र पुलका एव सिद्धार्थाः। सितं हसितं कुसुमानि। निरन्तरं नवदयितसंगमे अङ्गे मङ्गलं भार्यया कृतम्। 4) वणरव दूसहेत्यत्र वनानां रवा दुःसहा। दुनोति मदनोदयो हृदयम्। प्रियदूरस्थितः दूरस्थितधनिकः। प्रोषितानां रमणीजनः कथं जीवति। 5) कोइलकलेत्यत्र कोकिलकलरवः चन्दनं चन्द्रोद्द्योतविलासः एतान्येव वल्लभसंगमे अमृतरसः। विरहे सति तान्येव ज्वलितो हुताशः। 6) मालइमालहिं इत्यत्र मालतीमालायां अलयः शोभन्ते। कीदृशा अलयः। नवमकरन्दसतृष्णाः। किमित्यध्याहारः। प्रावृड्-दयितेन दत्ता नीलेन्द्रमयी रत्नावलीव। णं इति उपमानार्थं। 7) रेहइ इत्यत्र राजते तरुणीजनः भ्रूचक्रेण चङ्गः। इव उत्प्रेक्षते। त्रिभुवनजयी अनङ्गः आज्ञापयति जनानामिति शेषः।

---

१ ओअ NS २ घट्टय P. ३ रुद्धउं D, रुद्धओ N. ४ खुद्धओ N. ५ किसउ D ६ कहि B ७ सयण्ह P. ८ णं K, तं E, न N ९ पाउसदयइण B, पाओसदइसदा S १० दिन्न A ११ भ्रूचक्र० DKN; १२ तरुणिअणू S १३ भूचंकणचंगओ DN १४ जयि A.

ओजे दश समे द्वादश मुक्ताफलमाला । यथा–

[1)]तारावलि भणि मा, भणि मुत्ताहलमाली ।
रइकलहिण त्रुट्टी, ससिरयणिहिं[१] सुविसाली[२] ॥ १९.२९ ॥

ओजे दश समे त्रयोदश कोकिलावली । यथा–

[2)]कोइलावलिकिए, संगीअइ नच्चावउ ।
नवलयविलयाओ[३], मलयानिलु[४] नट्टावउ ॥ १९.३० ॥

ओजे दश समे चतुर्दश मधुकरवृन्दम् । यथा–

[3)]फुल्लिअलय निअवि, महुअरवंद्रिण[५] गीउ तह ।
वाहोल्लयनयण[६], पयमवि पहिअ न दिंति जह ॥ १९.३१ ॥

ओजे दश समे पञ्चदश केतकीकुसुमम् । यथा–

[4)]विचालिउ भुवणु, नवकेअइकुसुमपराइँण[७] ।
नं अहिवासिअउं, मयरद्धयकम्मणजोइण ॥ १९.३२ ॥

ओजे दश समे षोडश नवविद्युन्माला । यथा–

[5)]ओ चलचलंतिआ, विप्फुरेइ नवविज्जुमालिआ ।
मेहरक्खसस्स[८], जीहिअव्व[९] दीहरकरालिआ ॥ १९.३३ ॥

ओजे दश समे सप्तदश त्रिवलीतरङ्गकम् । यथा–

[6)]दीहरच्छिआए[१०], पेच्छ[११] सहए तिवलीतरंगयं ।
कयतिहुअणविजए[१२], लीहतिअं पिव कामिण कड्ढिअं[१३] ॥ १९.३४ ॥

एवं सप्त ॥ १९.३४ ॥

तथा । ओजे एकादश समे द्वादश अरविन्दकम् । यथा–

[7)]प्रिअहि[१४] मुहु अरविंदु, चलनयण इंदिदिरु ।
दंतकंति केसरु[१५], लच्छिविलासमंदिरु[१६] ॥ १९.३५ ॥

1) तारावलीत्यत्र हे सुभग तारावलीं मा भण । किं तर्हि मुक्ताफलमालां भण । रतिकलहेन त्रुटितां शशिरजन्योः सुविशालाम् । 2) कोइलावलीत्यत्र कोकिलावलीकृते संगीतके नर्तयतु नवलतावनिताः कर्म । मलयानिल एव नर्तकः । 3) फुल्लिअलयेत्यत्र पुष्पितलता. नियवि दृष्ट्वा मधुकरवृन्देन तथा गीतं यथा वाष्पार्द्रितनयनाः पदमपि न ददति । के । पथिकाः । 4) विचालिउ इत्यत्र । नूतनकेतकीपरागेण भुवनं विंचालिउत्ति–व्याप्तम् । नमिति–उत्प्रेक्षायाम् । मकरध्वजकार्मणयोगेनाधिवासितमिव । 5) ओ चलेत्यत्र विस्फुरति नवविद्युन्मालिका । इवोत्प्रेक्षते । मेघराक्षसस्य दीर्घा कराला जिह्वेव । 6) दीहरच्छिआए इत्यत्र दीर्घाक्ष्याः पश्य राजते त्रिवलीतरङ्गितं त्रिभुवनविजये कृते कामेन रेखात्रिकमिव कर्षितम् । न मत्सदृशो भुवनत्रये कोऽपि जयीति भावः । 7) प्रिअहि मुहु इत्यत्र प्रियायाः मुख कमलं वर्तते चलनेत्रौ(त्रे) भ्रमरौ दन्तकान्तिः केसराणि लक्ष्मीविलासमन्दिरम् ।

१ रयणिहुं CDN, २ सुविसालि N ३ वणिआओ A ४ मलयानिल D ५ वंदिण S; वइण C. ६ वाहुल्लयन० B ७ परायण D ८ महर० N ९ जोहिअव्व N १० दीहरच्छीआए AN ११ पिच्छ E १२ तिहूअण A १३ कड्ढिअ N. १४ प्रियहि AB, पियहि E १५ केसर A १६ विलासिमं० B. विलासनंदिरु A.

ओजे एकादश समे त्रयोदश विभ्रमविलसितवदनम्। यथा–

1)कुइ धन्नु[1] जुआणउ, विअसिअदीहरनयणिए[2]।
माणिज्जइ तरुणिए, विब्भमविलसिअवयणिए[3]॥ १९.३६॥

ओजे एकादश समे चतुर्दश नवपुष्पन्धयम्। यथा–

2)सहि पंकोप्पन्नु[4] वि, कमलु तं सलहिउँ[5] बुहसइहिं।
जं रसउद्धुसिअहिं[6], पिज्जइ नवफुल्लंधुअहिं॥ १९.३७॥

ओजे एकादश समे पञ्चदश किन्नरमिथुनविलासः। यथा–

3)अविरहिअहं मुइअहं, हरिणहं जि रइसुहु सलीसए।
पर एम्वइ केम्वँइ[7], जसु किन्नरमिहुणविलासए॥ १९.३८॥

ओजे एकादश समे षोडश विद्याधरलीला। यथा–

4)मुद्धइ गिज्जंतउं, तुहुं कण्णरसायणु[8] गीउ सुणि।
जिण ओहामिज्जइ, विज्जाहरलीलागीइझुणि॥ १९.३९॥

ओजे एकादश समे सप्तदश सारङ्गः। यथा–

5)भीरु वि चंदट्ठिओ[9], वरि परिमुणिअनामु[10][11] सारंगओ।
सीहु न सलहिज्जइ[12], जइ वि हु दलिअमत्तमायंगओ॥ १९.४०॥

एवं षट्॥ १९.४०॥

तथा। ओजे द्वादश समे त्रयोदश कामिनीहासः। यथा–

6)मणहरु[13] तुहं[14] मुहसररुहु[15], रयणीअरविब्भमु धरइ।
कामिणि हास[16]विलासु वि, जोण्हापसरहु[17] अणुहरइ[18]॥ १९.४१॥

1) कुइ धन्नु इत्यत्र कोऽपि धन्यो युवा विकसितदीर्घनयनया तरुण्या मान्यते। कीदृश्या। विभ्रमविलसितवदनया। तस्या. रूपोत्कर्षः। 2) सहि पंकोप्पन्नु वीत्यत्र हे सखि तत्कमलं बुधशतैः सलहिउं श्लाघितं यत् रसोद्धुषितैः पुष्पंधयैः पीयते। पङ्कोत्पन्नमिति निन्दा। 3) अविरहिअहं इत्यत्र अविरहितानां मुदितानां हरिणानामेव रतिसुखं श्लिष्यति भवनानि। परमेवमेव कथमपि यश. किन्नरमिथुनविलासे। दम्पत्यो. प्रीत्युपरि तस्योपमानात्। 4) मुद्धइ गिज्जंतउं इत्यत्र मुग्धया गीयमानं त्वं कर्णरसायनं गीतं शृणु। येन गीतेन विद्याधरलीलागीति. पराभूयते निराक्रियते इत्यर्थ.। 5) भीरु वीत्यत्र भीरुरपि चन्द्रस्थितः वरः प्रधानः। कः। विख्यातनामा सारङ्गो हरिण.। पर सिंहो न श्लाघ्यते यद्यपि दलितमत्तमातङ्गः। 6) मणहरु तुहेत्यत्र हे सुभगे तव मुखसरोरुहं रजनीकरविभ्रमं धरति। हे कामिनि तव हास्यं ज्योत्स्नाप्रसरं अनुहरति तच्छीलं भजतीत्यर्थः।

१ धण्णु A. १९.३६ is dropped in D. २ नयणीए AS. ३ वयणीए AS. ४ पंकुप्पन्नु वि AB. ५ लसहिओ N. ६ उद्धुसिएहिं S. ७ कीम्वइ ABDN, काम्वइ S. ८ नमु S ९ कन्न ACDNP. १० ठ्ठिउ-गउ-गउ BE. ११ नामु AC; नाउं P; नाम्नु DS १२ सलहिज्जउ P १३ मणहर C. १४ तुहु ACDN. १५ सररुह AN. १६ हासुवि० P १७ पसरह P; पसरहो B. १८ अणुसरहु A.

ओजे द्वादश समे चतुर्दश अपदोहकः । यथा—

[1)]एत्थु[1] करिमि भणि काइं, प्रिउ[2] न गणइ लग्गी पाइ ।
छड्डेविणु[3] हउं मुकी, अवदोहय जिम्व किर गावि[4] ॥ १९.४२ ॥

ओजे द्वादश समे पञ्चदश प्रेमविलासः । यथा—

[2)]कित्तिउँ[5] वण्णउं मयणु, किअउ जिण सो वि नारायणु[6] ।
तहुँ[7] गोवालीअणहु, घणपिम्मविलासपरायणु[8] ॥ १९.४३ ॥

ओजे द्वादश समे षोडश काञ्चनमाला । यथा—

[3)]दीसइ सुरधणुलट्ठी, साम्वलगोरवण्ण[9]सोहिल्ली ।
मरगयकंचणमाली, णं घणलच्छिहि कंठि नवल्ली ॥ १९.४४ ॥

ओजे द्वादश समे सप्तदश जलधरविलसिता । यथा—

[4)]पेक्खिऊण[10] गयणयलि, नवजलहरविलसिअ चलविज्जुल ।
संभरंति निअपिअहं[11], पहिअदइअ गलिअंसुअकज्जल ॥ १९.४५ ॥

एवं पञ्च ॥ १९.४५ ॥

तथा । ओजे त्रयोदश समे चतुर्दश अभिनवमृगाङ्कलेखा । यथा—

[5)]नहयलवराहदाढिआ, वारुणिवहूइ णिडालिआ ।
अहिणवमिअंकलेहिआ[12], उप्पेइ[13] पीइं निहालिआ[14] ॥ १९.४६ ॥

ओजे त्रयोदश समे पञ्चदश सहकारकुसुममञ्जरी । यथा—

[6)]वणलच्छिकणयरसणिआ[15], कुसुमाउहविजयपडाइआ ।
सहयारकुसुममंजरी, उअह[16] महुसमएण पयडिआ ॥ १९.४७ ॥

---

1) इत्थु करिमि भणीत्यत्र हे सखि अत्रार्थे किं करोमि । भण कथय । प्रियो न गणयति । मामिति शेषः । किम् । पादपतिताप्यहं त्यक्त्वा(क्ता) । मुक्ताऽपदोहका दोहविहीना यथा गौर्मुच्यते । 2) कित्तिउं वण्णउं इत्यत्र मदनं कियद्वर्णयामि । येन सोऽपि नारायण. तथा कृत॰ । तथेति कथम् । गोपालिकानां घनप्रेमपरायण. । तत्परः इत्यर्थः । 3) दीसइ सुरेत्यत्र दृश्यते सुरधनुर्यष्टिः श्यामलगौरवर्णेन शोभनशीला । णमिति इवोत्प्रेक्षते । मरकतकाञ्चनमाला वनलक्ष्म्या. कण्ठे नूतना । 4) पेक्खिऊणेत्यत्र प्रेक्ष्य गगनतले नवजलधरविलसितं चलविद्युत् स्मरन्ति निजप्रियान् स्वकीयप्रियान् पथिकदयिताः गलिताश्रुकज्जलाः । 5) नहयलेत्यत्र अभिनवमृगाङ्कलेखा निभालिता दृष्टा सती प्रीतिमर्पयति । इयं किं नभस्तलवराहदाढिका अथवा वारुणीदिग्वध्वाः ललाटिका तिलकिका इत्यर्थः । 6) वणलच्छिकणयेत्यत्र हे सुभगे उअह पश्य त्वम् । मधुसमयेन सहकारमञ्जरीः प्रकटिताः । इवोत्प्रेक्षते । वनलक्ष्मीकनकमेखला अथवा कुसुमायुधविजयपताकिका ।

---

१ इत्थु BKP. २ पिउ A ३ छड्डेविणु NS. ४ गाइ ABP ५ कित्तिओ N ६ नरायणु S. ७ तह P ८ पेम्म॰ BP, पिम्मविलासुप्प॰ A ९ गोरवण N, गोरवन्न ABP १० पिक्खि॰ CDNS ११ प्रियहं A. १२ मयंगले॰ A १३ अप्पइ KP, उप्पहि S १४ निडालिआ B १५ रमणिआ N. १६ ओअहु A, ओअह N

ओजे त्रयोदश समे षोडश कामिनीक्रीडनकम् । यथा–

[1]नहलच्छिभालतिलअओ,[1] दिसिकामिणि[2]कीलणगंडुअओ[3] ।
रेहइ पुण्णमयंकओ,[4] मयणाहिसेअअमयकलसओ ॥ १९.४८ ॥

ओजे त्रयोदश समे सप्तदश कामिनीकङ्कणहस्तकः । यथा–

[2]कवणु सु धन्नउ जिण विणु, कामिणिकंकण हत्थउ[5] विअलहिं ।
[6]अन्न कि एम्वइ ससिमुहि, हिंडइ[7] उन्नमिईहिं[8] करकमलिहिं ॥ १९.४९ ॥

एवं चत्वारः १९.४९ ॥

तथा । ओजे चतुर्दश समे पञ्चदश मुखपालनतिलकः । यथा–

[3]इह माहवि वम्महनिलय, मलयानिलहल्लिरकिसलय ।
ओ दीसहिं कुसुमाउलय,[9] कामिणिहुं[10] मुहवालण तिलय ॥ १९.५० ॥

ओजे चतुर्दश समे षोडश वसन्तलेखा । यथा–

[4]कुविदो मयणो महाभडो, वणलच्छी अ वसंतरेहिआ ।
कह जीवउ[11] मामि विरहिणी, मिउ[12]मलयानिलफंस[13]मोहिआ ॥ १९.५१ ॥

ओजे चतुर्दश समे सप्तदश मधुरालापिनीहस्तः । यथा–

[5]सुन्दरु तं किउ एहु[14] सहि, पिउ जं मन्निउ[15] विणयनिसण्णउ[16] ।
तसु अवराहहं सव्वहं वि, महुरालाविणि[17] हत्थु[18] विइण्णउ[19] ॥ १९.५२ ॥

एवं त्रयः ॥ १९.५२ ॥

1) नहलच्छिभालेत्यत्र पूर्णमृगाङ्कः शोभने । इवोत्प्रेक्षते । नभस्तललक्ष्मीभालतिलकं दिक्कामिनीक्रीडनगेन्दुकः दडउ (?) इति प्रतीतम् । अथवा मदनाभिषेकायामृतकलशः । 2) कवणु सु धन्नउ इत्यत्र कः स धन्यो येन विना कामिन्याः कङ्कणानि हस्ताद्विगलन्ति । अन्याः मुग्धाः हे शशिमुखि हिण्डन्ते उन्नमिति–ऊर्ध्वीकृतैः करकमलैः? अपि तु न काप्येवं हिण्डते । त्वं तु ऊर्ध्वीकृतकरकमला हिण्डसे । तेन ज्ञायते तव करकङ्कणानि गलन्ति हस्तयोः । 3) इह माहवि वम्महेत्यत्र इह माधवे वसन्ते मन्मथनिलयमलयानिलचलत्किसलयाः दृश्यन्ते कुसुमाकुलकाः कामिनीनां मुखवालनाः तिलका वृक्षाः । कामिनीना मुखवालना इति कोऽर्थः । गच्छन्त्योऽपि मुखं पश्चादभिमुखं कृत्वा निरीक्षन्ते । 4) कुविदो मयणो इत्यत्र कुपितो मदनो महाभटः । च पुनः । वनलक्ष्मीर्वसन्तेन रेखिता शोभिता । मामीति मन्ये । इदानीं मृदुमलयानिलस्पर्शमोहिता विरहिणी कथं जीवतु । अपि तु नेति 5) सुन्दरु तमित्यत्र सुन्दरं एतत्कृतं तत्सखि यत्प्रियो मानितो विनयनिषण्णोऽवनतः सन् । तस्य प्रियस्य सर्वेषामप्यपराधानां मधुरालापकेन हस्तो वितीर्णः । कृतजलाञ्जलिरित्यर्थः ।

१ निलयउ B २ कामिणी C. ३ गिंडुअओ P, कंदुअओ A, गंदुअओ N; गंदुअउ B ४ पुप्फम० N; पुग्गमयंगओ A; पुण्गमटंकओ P ५ हत्थओ AN. ६ अन्नु वि A, ७ हिंडहि P. ८ उन्नमिअहि P. ९ कुसुमाओलय N. १० कामिणिहि BE ११ जीवह A १२ मउस० BE १३ फुंस० A १४ किओ एहू N. १५ मणिउ NS, मण्णिउ CD. १६ विणयनिसणउ A, विणयनिसन्नउ P विणयनिसण्णओ N. १७ लाविण P. १८ हत्थ A. १९ विइण्णओ N, विइन्नओ P.

तथा । ओजे पञ्चदश समे षोडश मुखपङ्क्तिः । यथा –

[1]परनरमुहपेच्छणविरयए[2], पयनहमणिपडिविंबिअ जि परि[3] ।
दहमुहमुहपंति पलोइआ, सीअइ[4] भयविम्हयहासकरि ॥ १९.५३ ॥

ओजे पञ्चदश समे सप्तदश कुसुमलतागृहम् । यथा –

[2]जलइ जइ[5] वि कुसुमलयाहरु, तवइ चंदु जँह गिम्हि दिवायरु ।
तुवि ईसाँभरपरितरलिअ[6], पिअसहिवयणु न मन्नइ बालिअ ॥ १९.५४ ॥

एवं द्वे १९.५४ ॥

ओजे षोडश समे सप्तदश रत्नमाला । यथा –

[3]करवालपहारिण उच्छलिअँ[7], करिसिरमुत्ताहलरयणमाल[8] ।
रेहइ समरंगणि[9] जयसिरिए[10], उक्खिविअ नाइ सयंवरमाल ॥ १९.५५ ॥

अत्रैकः । एवं पञ्चपञ्चाशद्भेदाः ॥ १९.५५ ॥

व्यत्यये सुमनोरमा-पङ्कज-कुञ्जर-मदनातुर-भ्रमरावली-पङ्कजश्री-
किङ्किणी-कुङ्कुमलता-शशिशेखर-लीलालयाः (१०)। चन्द्रहास-गोरो-
चना-कुसुमबाण-मालतीकुसुम-नागकेसर-नवचम्पकमाला-विद्याधर-कुञ्ज-
ककुसुम-कुसुमास्तरणाः (९) । मधुकरीसंलाप-सुखावास-कुङ्कुम-
लेखा-कुवलयदाम-कलहंस-सन्ध्यावली-कुञ्जरललिता-कुसुमावल्यः (८)।
विद्युल्लता-पञ्चाननललिता-मरकतमाला-अभिनववसन्तश्री-मनोहरा-क्षि-
सिका-किन्नरलीलाः (७) । मकरध्वजहास-कुसुमाकुलमधुकर-भ्रमरवि-
लास-मदनविलास-विद्याधरहास-कुसुमायुधशेखराः[11] (६) । उपदोहक-
दोहक-चन्द्रलेखिका-सुतालिङ्गन-कङ्केल्लिलताभवनानि[12] (५) । कुसुमित-
केतकीहस्त-कुञ्जरविलसित-राजहंस-अशोकपल्लवच्छायाः (४)। अनङ्ग-
ललिता-मन्मथविलसित-ओहुल्लणकानि (३) । कज्जललेखा-[13]किलि-
किञ्चिते (२)। शशिबिम्बितं चेति (१)। तावद्वा ॥ २० ॥

1) परनरमुहेत्यत्र परनरमुखप्रेक्षणविरतया सीतया पदनखमणिप्रतिबिम्बितैव दशमुखमुखपङ्क्तिः परं केवलं प्रलोकिता। नापरा। कथंभूता। भयविस्मयहासकरी। भयं परपुरुषदर्शनात्। विस्मयहास्ये च बहुमुखत्वेन। 2) जइ जलईत्यत्र यद्यपि कुसुमलतागृहं ज्वलति चन्द्रोऽपि ग्रीष्मे दिवाकरवत् तपति तथापि भर्तुरन्यत्र गत्वागतत्वात् बालिका भर्तृसखीवचनं नाङ्गीकुरुते। कीदृशी। ईर्ष्याभरेण परितरला चञ्चला। कोपप्रादुर्भावे चञ्चला भवति। 3) करवालेत्यत्र समराङ्गणे करवालप्रहारात् करिशीर्षात् उच्छलिता मुक्ताफलरत्नमाला इह शोभते इवोत्प्रेक्षते। जयश्रिया स्वयंवरमाला उत्क्षि[illegible] ऊर्ध्वीकृता। नाइ इवार्थे।

१ मुहु N २ विरअए B ३ पहनह S ४ सीअए ACDN ५ जड A ६ ईसाभरि BP. ७ उच्छलिल N. ८ माला ACDNP ९ समरगिणि C १० जयसिरिइ BEP ११ शेषरा P १२ किकिल्लिभवनानि H; कंकोलिलताभुवनानि G १३ किलकिञ्चिते H

व्यत्यय इति समे सप्ताद्याः षोडशान्ताः कला ओजे सैकाद्याः सप्तदशान्ताः प्रत्येकं पूर्ववत्सुमनोरमादिसंज्ञाः चतुष्पद्यो भवन्ति । तत्र समे सप्तकलाः ओजे अष्टौ यत्र भवन्ति सा सुमनोरमा । यथा–

[1]केआरावु, करि मोर मा ।
दूरि स गोरी, सुमणोरमा ॥ २०.१ ॥

समे सप्त ओजे नव पङ्कजम् । यथा–

[2]निअवि वयणु तहिं, विब्भमपउँ ।
नं विहिण खित्तु, द्रहि पंकउ ॥ २०.२ ॥

समे सप्त ओजे दश कुञ्जरः । यथा–

[3]गज्जइ घणमाला, घणघडहड ।
नं मयणनिवइणो, कुंजरघड ॥ २०.३ ॥

समे सप्त ओजे एकादश मदनातुरः । यथा–

[4]खलिअक्खरउं वयणु, मुहुं पंडरु ।
तुह अक्खइ सहि मणु, मयणाउरु ॥ २०.४ ॥

समे सप्त ओजे द्वादश भ्रमरावली । यथा–

[5]ओ रणझंणंत भमइ, भमरावलि ।
मयणधणुह गुणवल्लि, णं सामलि ॥ २०.५ ॥

समे सप्त ओजे त्रयोदश पङ्कजश्रीः । यथा–

[6]तहि भुमयहि पडिछंदुलो, धणु मयणहु ।
नवपंकयसिरि सोअरी, तसु वयणहु ॥ २०.६ ॥

1) केआरावु इत्यत्र हे मयूर त्वं केकारवं मा कुरु । सा गौरी दूरे वर्तते । कीदृशी । अतिशयेन मनोरमा सुन्दरी । 2) निअवि वयणु इत्यत्र दृष्ट्वा वदनं तस्याः विभ्रमो भ्रूसमुद्भवो विलासस्तस्य पदम् । नमिवार्थे । विधिना पङ्कजं ह्रदे क्षिप्तम् । तस्या मुखतुलां दधत् ब्रह्मणा जलाशये क्षिप्तमिति भावः । 3) गज्जइ घणमालेत्यत्र घनो निबिडो घडहड-शब्दविशेषो यस्याः सा घनमाला गर्जति । नमिवार्थे । इवोत्प्रेक्षते । मदननृपस्य कुञ्जरघटा । 4) खलिअक्खरउं इत्यत्र हे सखि वचनं स्खलिताक्षरं मुखं च पाण्डुरम् । उभयं कर्तृ मनः कर्म । आख्याति । मनः कीदृशम् । मदनातुरम् । 5) [ओ] रणरणंतेत्यत्र हे सखि पश्य रणरणन्ती शब्दं कुर्वाणा भ्रमरावली भ्रमति । इवोत्प्रेक्षते । श्यामा मदनधनुषः गुणवल्ली । ज्या इति भावः । 6) तहि भुमयहि इत्यत्र तस्या भ्रुवोः प्रतिच्छन्दो धनुर्मदनस्य । तस्या वदनस्य सोदरा नवपङ्कजश्रीः ।

१ कलाः dropped in A. २ पओ N. ३ न D. ४ खेत्तु BP ५ पंकओ ABN. ६ तं B ७ मइण० BP. ८ महु B. ९ मयणाउर A १० रणरणंत K, तरुणझणंत A ११ तहिं भुमयहिं AB; तहि भुमयहिं P.

समे सप्त ओजे चतुर्दश किङ्किणी। यथा–

[1]ससिणा रयणीए रइभरे, उल्लालिआँ।
ओ किंकिणिआउ न हु इमा, उडुमालिआँ॥ २०.७॥

समे सप्त ओजे पञ्चदश कुङ्कुमलता। यथा–

[2]गोरडिअहिँ उवमिअइ तँ पर, अच्चब्भुअ।
जइ किर हवइ फुल्लिअ फलिअ, कुंकुमलय॥ २०.८॥

समे सप्त ओजे षोडश शशिशेखरः। यथा–

[3]लंघइ सायँर गिरि आरुहइ, तुह अहंग।
ससिसेहरहसिउज्जल नउँखी, कित्तिगंग॥ २०.९॥

समे सप्त ओजे सप्तदश लीलालयः। यथा–

[4]जं सहि कोइल कलु पुकारइ, फुल्लु तिलँउ।
तं पत्तु वँसंतु मासु कामहु, लीलालउ॥ २०.१०॥

एवं दश॥ २०.१०॥

तथा समेऽष्टावोजे नव चन्द्रहासः। यथा–

[5]रेहइ तुह करि, चंदहासउ।
नं रिउसिरीए, केसपासँउ॥ २०.११॥

समेऽष्टावोजे दश गोरोचना। यथा–

[6]गोरोअणगोरी, तुज्झ कओलुँ।
पडिमाइ चुंवइ, ससहरु लोलु॥ २०.१२॥

समेऽष्टावोजे एकादश कुसुमबाणः। यथा–

1) ससिणा रयणीए इत्यत्र शशिना रजन्या रतिभरे क्रीडासमये उल्लालिताः किङ्किणिका घुर्घुरिकाः। न खलु इमाः उडुमालाः नक्षत्रमालाः। 2) गोरडीत्यत्र परं केवलं कुङ्कुमलतया तदा गौर्यः उपमीयन्ते यदि किल भवति सा पुष्पिता फलिता सती अत्यद्भुता। तस्या धर्मद्वयं कविमतेन वर्ण्यते इति। 3) लंघइ सायर इत्यत्र हे राजन् तव कीर्तिगङ्गा अपूर्वा वर्तते। यतः सागरं लङ्घते गिरीनारोहति। कीदृशी। शशिशेखरहसितोज्ज्वला। अभङ्गा अत्रुटितेत्यर्थः। 4) जं सहि कोइलेत्यत्र हे सखि यत्कोकिला मधुरं व्याहरति यत्र [फुलितः] तिलकवृक्षः तत्सम्भाव्यते कामस्य लीलालयः वसन्तमासः प्राप्त इत्यर्थः। 5) रेहइ तुह इत्यत्र तव करे चन्द्रहासः शोभते। इवोत्प्रेक्षते। रिपुश्रियः केशपाशो वेणीदण्डः। 6) गोरोअणेत्यत्र हे गोरोचनागौरि तव कपोलं प्रतिमया प्रतिविम्बेन चुम्बति शशधरश्चन्द्रः। कीदृशः। लोलश्चञ्चलः।

१ रयणीरइ० B. २ उल्लालिअ ABODN; उल्लालिय P. ३ उडुमालिय P ४ न N ५ सायरु ABP. ६ नउक्खी ABODN ७ निलओ-लालओ N ८ वसत P ९ किरि A. १० हासओ–पासओ N. ११ तुब्भ N. १२ कवउलु B.

**ल्लतावतिदीर्घं ढजैः ॥ ५५ ॥**

चतुर्मात्रनवकं त्रिमात्रश्चातिदीर्घम् । ढजैरिति चतुर्दशभिरष्टभिश्च यतिः ।

यथा–

[2]जइ जाहिं सुरसरिअ जइ गिरिनिज्झर सेवहिं[1] जइ पइसहि काणणतरुसंडय ।
रिउ निव तुवि नवि छुट्टहिं पहु तुज्झु[2] पयावहु कालहु अइदीहि[3]र भुअदंडय ॥५५.१॥

**पाचूता मत्तमातङ्गविजृम्भितम् ॥ ५६ ॥**

ढजैरिति वर्त्तते । षण्मात्रद्वयं चतुर्मात्रषट्कं त्रिमात्रश्च मत्तमातङ्गविजृम्भितम् ।

यथा–

[3]पयडिअ[4]लंछणमयलेहिण उल्लासिअकरदंडिण ताराहरणिण निसिअरिण ।
उ[5]अ नीसंकिण भउ विरहिणिजणहु जणिज्जइ असमु मत्तमायंगविअंभिइ[6]ण ॥५६.१॥

**चत्वारिंशत्कला एकद्व्यधिका वा मालाध्रुवकम् ॥ ५७ ॥**

चत्वारिंशन्मात्रा यद्वा एकद्व्यधिका इति एकचत्वारिंशद् द्विचत्वारिंशद्वा माला-ध्रुवकं नाम द्विपदी । यथा–

[1]तुह[7] पुहईसरसेहर कित्ति[8] अकित्तिम सुरहिअदिसिमुह जाम्वहिं सग्गि पइट्ठिअ ।
ताम्वहिं तक्खणि सुरसुंदरिलोअहु[9] सुरतरुकुसुममाल ध्रुवुं[10] हुअ मणउव्विट्ठिअ[11] ॥ ५७.१ ॥

एवमेकद्व्यधिकयोरप्युदाहार्यम् । एवं द्विपदीध्रुवा चतुःषष्टिः ॥ ५७.१ ॥

अयं चात्र विवेकः—

सिंहावलोकितार्थेषु विज्ञप्तौ संविधानके ।
मङ्गले च[12] ध्रुवा प्रोक्ता द्विपद्यन्यत्र[13] कीर्त्यते ॥ ५७.२ ॥ इति ॥

---

1) तुहेत्यत्र तव हे पृथ्वीश्वरशेखर कीर्तिरकृत्रिमा सुरभितदिङ्मुखा यावत्स्वर्गे प्रतिष्ठिता तावत्क्षणे सुरसुन्दरीलोकस्य सुरतरुकुसुममाला ध्रुवं संजाता मनोऽप्रिया अवल्लभेत्यर्थः । 2) जइत्यत्र हे अतिदीर्घ-भुजदण्ड यद्यपि हे नृपवर तव वैरिणः सुरसरितं गङ्गां प्रतियान्ति यदि च गिरिनिर्झराणि सेवन्ते यदि कान्तार-तरुषण्डेषु प्रविशन्ति तथापि काल इव कालात्तव प्रतापान्न च्छुटन्ति । 3) पयडियेत्यत्र पश्य । निशाकरेण विरहिणीजनस्य असमं भयं जन्यते । कथंभूतेन मत्तमातङ्गवद्विजृम्भितं यस्य सः तेन । प्रकटिता लाञ्छनमेव मदलेखा येन सः [ तेन ] । उल्लासितकरदण्डेन । तारा एवाभरणानि यस्य स तथा [ तेन ] । मत्तमातङ्गोऽपि मदलेखां प्रकटयति, करदण्डमुल्लासयति, ताराणि दीप्राणि आभरणानि धत्ते बिभर्ति ।

---

१ सेवइ S; सेवइहिं D. २ तुज्झ ACP. ३ अइदीहिहर० N. ४ पढिडय A. ५ उभ S. ६ वियभिइण A; विअंभिइअ C; वियंभिइण BP. ७ तह DN. ८ कित्तिय कित्तिम A. ९ लोअह P; लोअइं B. १० धुव S. ११ उव्विट्ठिअ N. १२ व ANS १३ द्विपदान्यत्र N.

प्रकारान्तरेण द्विपदीराह ।

**चो विजया ॥ ५८ ॥**

एकश्चतुर्मात्रः पादे चेद्विजया नाम द्विपदी । यथा –

[1)] सजया, विजया ॥ ५८.१ ॥

**पो रेवका ॥ ५९ ॥**

पञ्चमात्रो रेवका ।

[2)] वहुवया, रेवया ॥ ५९.१ ॥

**षो गणद्विपदी ॥ ६० ॥**

षण्मात्रो गणद्विपदी । यथा –

[3)] निअ जुवई, गणदु वई ॥ ६०.१ ॥

**चतौ स्वरद्विपदी ॥ ६१ ॥**

चतुर्मात्रत्रिमात्रौ स्वरद्विपदी । यथा –

[4)] पसरदु [2] वई, अखलिअगई ॥ ६१.१ ॥

**पदावप्सराः ॥ ६२ ॥**

पञ्चमात्रद्विमात्रौ अप्सराः । यथा –

[5)] उअ [3] अच्छरा, गयमच्छरा ॥ ६२.१ ॥

**अष्टौ कला वसुद्विपदी ॥ ६३ ॥**

यथा –

[6)] सु तव सुदु वई, जयंइ नरवई ॥ ६३.१ ॥

**चौ करिमकरभुजा ॥ ६४ ॥**

चतुर्मात्रद्वयं करिमकरभुजा । यथा –

[7)] करिमयरभुओ, उव्वहुअभुओ ॥ ६४.१ ॥

---

1) अथ प्रकारान्तरेण द्विपदीराहेत्यत्र सजया विजयेत्यत्र सजया जयवती विजयादेवी । 2) वहुवया रेवया इत्यत्र वहुवका वहुपया वा रेवया रेवानदी । 3) निअजुवेत्यत्र निजयुवतिं पतिर्गणयतु मानयत्वित्यर्थः । 4) पसरेत्यत्र प्रसरतु पतिः अस्खलितगतिः । 5) उअ एत्यत्र पश्य अप्सरसो गतमत्सराः सन्ति । 6) सु तवेत्यत्र । स तव श्रुतो विश्रुत पतिः । यो जयति नरपतिः । 7) करिमेत्यत्र करिमकरभुक् ऊ(औ)र्वेहुतभुक् ।

---

१ These three words are dropped in P २ पई B, पइ P. ३ उअयच्छरा A.
४ The line is dropped in D

**चलदलाश्चन्द्रलेखा ॥ ६५ ॥**

चतुर्मात्रो लघुर्द्विमात्रो लघुश्च चन्द्रलेखा । यथा—

[1]नवचंदलेह, जिम्वँ मुद्ध एह ॥ ६५.१ ॥

**पतौ मदनविलसिता ॥ ६६ ॥**

पञ्चमात्रस्त्रिमात्रश्च मदनविलसिता । यथा—

[2]मयणविलसिअं, पावववसिअं ॥ ६६.१ ॥

**चपौ जम्भेट्टिका ॥ ६७ ॥**

चतुर्मात्रपञ्चमात्रौ जम्भेट्टिका । यथा—

[3]सा तसु वेट्टिऑं, सुट्ठुं जं भेट्टिऑं ॥ ६७.१ ॥

**पचौ लवली ॥ ६८ ॥**

पञ्चमात्रचतुर्मात्रौ लवली । यथा—

[4]उअ वणावलिआ, फुल्लिअलवलिआ ॥ ६८.१ ॥

**सप्त कला दलौ चामरपुरसुन्दरी ॥ ६९ ॥**

आदौ सप्तकलास्ततो द्विमात्रो लघुश्चामरपुरसुन्दरी । यथा—

[5]अमरपुरसुंदरिहिं, भड वरिअ सयंवरिहिं ॥ ६९.१ ॥

**षचौ काञ्चनलेखा ॥ ७० ॥**

षण्मात्रचतुर्मात्रौ काञ्चनलेखा । यथा—

[6]मणिकंचणरेहिअ, सुरसुंदरि जेहिअ ॥ ७०.१ ॥

**पौ चारुः ॥ ७१ ॥**

द्वौ पञ्चमात्रौ चारुः । यथा—

[7]चारुचंपयरुई, उअँ सोहँइ जुअई ॥ ७१.१ ॥

**तषताः पुष्पमाला ॥ ७२ ॥**

त्रिमात्रषण्मात्रत्रिमात्राः पुष्पमाला । यथा—

---

1) नवेत्यत्र मुग्धा राजते इति क्रियाशेषः । यथा नूतनचन्द्रलेखेह । 2) मयणेत्यत्र मदनविलसितं पापव्यवसितम् । 3) सा तेत्यत्र सा तस्याः वेटी सुष्ठु भेटिता यत् । 4) उअ वेत्यत्र पश्य वनावली पुष्पितलवलिका । 5) अमरेत्यत्र अमरपुरसुन्दरीभिः भटाः वृताः स्वयंवरे । 6) मणीत्यत्र मणिकाञ्चनराजिता सुरसुन्दरी यथा । 7) चार्वीत्यत्र चारु युवतिः शोभते । त्वं पश्य । [ चम्पकरुचिः ] ।

---

१ जिम C. २ जंभेदिका N. ३ वेद्दिआ N, वेठिआ A. ४ सुट्ठु BNS. ५ भेद्दिआ N. ६ ओ AD. ७ साहइ A. ८ जुवई A.

[1]एह ललिअदेह वाल । नाइ जाइफुल्लमाल[1] ॥ ७२.१ ॥

तोमरमित्यन्ये ॥ ७२.१ ॥

एवमन्या अपि त्रिंशन्मात्रापर्यन्ता अभ्यूह्याः । अप्रसिद्धाभिधानत्वात्तु नोक्ताः । यदाह –

चतुर्मात्रादिकत्रिंशत्प्रान्तैरंह्रियुगैः पुनः ।
एकानेकैरन्तवर्णैर्यमके द्विपदीं विदुः ॥ ७२.२ ॥

द्विपदीप्रकरणम् ॥

**गाथात्रानुक्तम् ॥ ७३ ॥**

अत्र शास्त्रे यन्नोक्तं छन्दस्तद् गाथासंज्ञम् ॥ यथा –

दश धर्मं न जानन्ति धृतराष्ट्र निबोधनात्[2] ।
मत्तः प्रमत्त उन्मत्तः क्रुद्धः श्रान्तो बुभुक्षितः ॥
त्वरमाणश्च भीरुश्च लुब्धः कामीति ते दश ॥ ७३.१ ॥

अत्र त्रिभिः षड्भिर्वा पादैः श्लोकः ॥ ७३.१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ
द्विपदीव्यावर्णनो नाम सप्तमोऽध्यायः ॥

ग्रं० १९७; उ० २८०३ ।

* *
*

---

1) एहेत्यत्र एषा ललितदेहा वाला ज्ञायते जातिपुष्पमालेव ।

सप्तमोऽध्यायः संपूर्णः ।

---

१ पुप्फमाल A. २ निबोध तान् P; निबोधि तान् B.

अथ जातिष्वार्याया: प्रस्तारो यथा–

प्रथमस्य गणस्य द्विगुरो: (ऽऽ) आद्यस्य गुरोरधो लघु: स्थाप्य:। तत: परमुपरिसममिति परगुरुसहितद्वितीयादिगणानामधो गुरव: स्थाप्या:। प्राक्पूर्वविधिरिति यावत्य: प्रथमगणे मात्रास्तावत्यो गुरुलघुक्रमेण पूरणीया:। ततश्चतुर्मात्रत्वात्पूर्वगणस्य एका मात्रा प्राक् न्यसनीया। तेन द्वितीयभेदे प्रथमगणो गुर्वन्त: (।।ऽ), अन्ये तु गुर्वात्मका:। पुनराद्यगुरोरधो लघुस्तत: परमुपरिसममिति अन्ये गणा गुर्वात्मका:। प्राक्पूर्वविधिरिति मात्रात्रये प्रथमगणसंबन्धिन्यवशिष्टे यदि लघुपूर्वो गुरुर्दीयते तदा नौजे ज: इति वचनात् समयभेद: स्यात्। ततो गुरुपूर्वो लघुर्दीयते इति तृतीयभेदे गुर्वादि: (ऽ।।) प्रथमो गण:। शेषाश्च तथैव[1]। पुनराद्यगुरोरधो लघुस्तत: परमुपरिसममिति द्वौ लघू शेषाश्च गणा गुर्वात्मका:। प्राक्पूर्वविधिरिति एका मात्रा प्रथमगणे अवशिष्यते। सा प्राक् न्यस्येति चतुर्थे भेदे सर्वलघु: प्रथमो गण: (।।।।), शेषाश्च तथैव। पुनर्द्वितीयगणप्रथमगुरोरधो लघु:। तत: परमुपरिसममिति द्वितीयगणद्वितीयगुरुत आरभ्य सर्वे गुरव:। प्राक् पूर्वविधिरिति यदि लघुपूर्वं गुरुद्वयं दीयते तदा गणनाशात्समयभेद: स्यात्। तदेतन्मा भूदिति द्वितीयगणापेक्षयैव द्वितीयगणलघो: पूर्वो लघुर्देय:। [2]प्रथमश्च गण: सर्वगुरुरिति पूर्वविधिना गुर्वात्मक इति द्विगुरुर्गुर्वन्तश्च पञ्चमे भेदे प्रथमद्वितीयौ गणौ। तत: षष्ठसप्तमाष्टमेषु भेदेषु क्रमेण द्वितीयतृतीयचतुर्थभेदतुल्य: प्रथमो गणो द्वितीयश्च गुर्वन्त एव। ततो नवमे भेदे द्वितीयगणगुरोरधो लघु:। तत: प्राक्पूर्वविधिरिति लघुपूर्वो गुरु: प्राग् देय:। तेन जगणस्तत्र संपन्न:। [3]प्रथमश्च गुर्वात्मक:। उपरितुल्यत्वं पुन: [4]परेषां स्थितमेव। यावद्विंशतितमे भेदे गणद्वयं लघुरूपं संपन्नमिति द्वितीयो गणो विंशत्या निष्ठित:। तृतीयगण: [5]चतुर्भेद: एकैको [6]विंशतिकृत्वोऽशीत्या निष्ठित:। चतुर्थगण: [7]पञ्चभेद: एकैकोऽशीतिकृत्व: चतु:शत्या निष्ठित:। पञ्चमगणश्चतुर्भेद: एकैक: चतु:शतीकृत्व: षोडशशत्या निष्ठित:। षष्ठगणो द्विभेद: एकैक: षोडशशतीकृत्वो

1) तथैव पुनरित्यत्र यथाक्रमं न्यस्ता गुर्वात्मका अन्ये इति। 2) प्रथमश्च गणेत्यत्र गणस्य चतुर्मात्रिकतया नाशो गणनाश:। तथा हि यदि पूर्वं गुरुद्वयं दीयते तदा प्रथमो गणस्त्रिमात्रो द्वितीय: पञ्चमात्र: प्रथमस्त्रिमात्रो वा स्यात्। गणस्तु चतुर्मात्र एव स्थाप्य इति समय:। 3) प्रथम: पाश्चात्य: 4) परेषां स्थितेत्यत्र अग्रेतनानाम्। तथाविधमेव सर्वगुरुरूपम्। 5) चतुर्भेद इत्यत्र जगणरहितत्वात्। 6) विंशतिकृत्वो इत्यत्र विंशतिश्चतुर्भिर्गुणिताशीति:। 7) पञ्चभेदेत्यत्र जगणसहितत्वात्।

१ प्रथमगणस्य BP. २ आद्यगुरो A. ३ अत्रैका मात्रा C, अत्रैकमात्रा BP. ४ प्राक् dropped in A. ५ प्रथमो गणो ABCP. ६ गुर्वादि AN ७ अवशेष्यते AC. ८ सा च BP. ९ चतुर्भेदे N, चतुर्थभेदे C १० द्वितीयगण dropped in A ११ लघुपूर्वोक्तगुरु A १२ गणद्वयलघु॰ C. १३ द्वितीयगणो C १४ असीत्या P. १५ चतुर्थगणपञ्चभेद एकैकाशीतिकृत्व. A.

द्वात्रिंशच्छत्या निष्ठितः । सप्तमगणश्चतुर्भेदः एकैको द्वात्रिंशच्छतीकृत्वो द्वादशभिः सहस्रैः अष्टशत्युत्तरैर्निष्ठितः । अन्त्यो गुरुरेक एव । एकेन गुणितं तदेवेति तावद्भिरेव निष्ठितः । एवं निश्चितं पूर्वार्धम् । परार्धमपि गणविकल्पान्निश्चित्य प्रस्तारयेत् । एवमन्येऽष्वपि मात्राछन्दःसु प्रस्तारो ज्ञेयः इति ॥ २ ॥

समवृत्तानां प्रकारान्तरेण प्रस्तारमाह—

**ग्लावधोऽधो द्विर्द्विरतः ॥ ३ ॥**

समवृत्तानां प्रस्तारे चिकीर्षिते प्रथमपङ्क्तौ यावत्संख्यापरिमाणमेकान्तरितावधोऽधो गुरुलघू स्थाप्यौ । अतः परं द्वितीयादिपङ्क्तिषु द्विगुणद्विगुणा गुरवो लघवश्च अधोऽधः स्थाप्याः । यथा— त्र्यक्षरे छन्दसि प्रथमपङ्क्तौ एकान्तरिताः गुरुलघवः अष्टसंख्यां यावत् स्थाप्याः । द्वितीयपङ्क्तौ द्वौ द्वौ । तृतीयपङ्क्तौ चत्वारश्चत्वारः ।

इति प्रस्तार उक्तः ॥ ३ ॥

समवृत्तानां नष्टमाह—

**नष्टेऽङ्कस्य[1] दले लः सैकस्य गः ॥ ४ ॥**

किंचिद्वृत्तं नष्टं चतुर्थं पञ्चमं वा । तत् समं यदि भवति तदा दलेऽर्धे कृते ल इति लघुर्लभ्यते । पुनर्दले लघवो लभ्यन्ते । अथ वैषम्यात् संख्या अर्धं न ददाति तदा सैकस्य गः इति सैकस्याङ्कस्य दले कृते गुरुर्लभ्यते । पुनस्तथेति[2] नष्टवृत्तमुत्पद्यते[3] । यथा— अत्रैव त्र्यक्षरे छन्दसि पञ्चमं वृत्तं नष्टम् । पञ्च अर्धं न ददतीति सैकाः[4] षट् तदर्धे गुरुः । पुनस्त्रयोऽर्धं[5] न ददति[6] । सैकाश्चत्वारः तदर्धे गुरुः । द्वयोरर्धमेक इति लघुरिति द्वौ गावेको लः ईदृशं पञ्चमं वृत्तं (ऽऽ।) इति ॥ ४ ॥

समवृत्तनष्टविधिरुक्तः । जातीनां नष्टविधिरुच्यते—

**नष्टाङ्के गणैर्हृते[7] शेषसंख्यो गणो देयो**
**राशिशेषे[8] लब्धं सैकम् ॥ ५ ॥**

नष्टस्य वृत्तस्याङ्के स्थापिते गणैर्गणविकल्पैर्हृते यच्छेषं तत्संख्यो गणो देयः । यत्र तु राशिशेषं भवति तत्र लब्धं सैकं कार्यम् । ततः पुनस्तस्मिन्नुत्तरगणैर्[9]विकल्पैर्हृते शेषसंख्यो गणो देयः । यथा—आर्याप्रस्तारे एका कोटिरेकविंशतिर्लक्षाः एकविंशतिः सहस्राः द्वे शते द्वादशोत्तरे इत्येतावत्संख्यं वृत्तं नष्टं कीदृशमिति पृष्टे प्रथमगणश्चतुर्विकल्प[10] इति चतुर्भिर्नष्टाङ्कं हरेत् । लब्धं त्रिंशल्लक्षास्त्रिंशत्सहस्रास्त्रीणि शतानि त्र्युत्तराणि शेषं चत्वारि[1)]

1) शेषं चत्वारीत्यत्र अत्र नष्टाङ्कराशिर्निर्लेपो जात. । परंतु चतुर्भिर्भागो धृतः । ततः शेषं चत्वारि ।

१ नष्टाङ्कस्य N २ पुनस्तद्वत् N ३ उत्पाद्यते C ४ सैका N, सैका A ५ त्रयार्धं N
६ ददाति B. ७ हृतशेष० N ८ राशिषं A ९ गण dropped in A. १० चतुर्थवि० N.
३० छन्दो०

इति तद्विकल्पेषु चतुर्थं सर्वलघुं न्यसेत् (।।।।)। द्वितीयो गणः पञ्चविकल्प इति पञ्चभिर्हरेत्। लब्धं षट् लक्षाः षट् सहस्राः षट्चधिकाः। राशेश्च हृताः शेषं त्रीणि इति तद्गणविकल्पेषु तृतीयं मध्यगुरुं न्यसेत्। ततो राशिशेषं लब्धं सैकं इति वचनाल्लब्धं सैकं कृत्वा तृतीयगणश्चतुर्विकल्प इति चतुर्भिर्हरेत्। लब्धमेकं लक्षमेकपञ्चाशतसहस्राः पञ्चशतानि पञ्चदशोत्तराणि। राशिशेषमेक इति तद्विकल्पेषु प्रथमं सर्वगुरुं न्यसेत्। लब्धं सैकं कृत्वा चतुर्थगणस्य पञ्चविकल्पत्वात् पञ्चभिर्हरेत्। लब्धं त्रिंशत्सहस्राः त्रीणि शतानि त्र्युत्तराणि। राशिशेषमेक इति प्रथमविकल्पं सर्वगुरुं न्यसेत्। ततो लब्धं सैकं कृत्वा पञ्चमगणस्य चतुर्विकल्पत्वात् चतुर्भिर्हरेत्। लब्धं[1] पञ्चसप्ततिः शतानि षट् सप्तत्यधिकानि। शेषं चत्वारीति चतुर्थविकल्पं सर्वलघुं न्यसेत्। ततः षष्ठस्य द्विविकल्पत्वात् द्वाभ्यां हरेत्। लब्धं सप्तत्रिंशच्छतानि अष्टाशीत्यधिकानि। शेषं द्वे इति द्वितीयविकल्पं सर्वलघुं न्यसेत्। ततः सप्तमगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत्। लब्धं नव शतानि सप्तचत्वारिंशदधिकानि। शेषं चत्वारीति चतुर्थविकल्पं सर्वलघुं न्यसेत्। अन्ते नित्यविन्यासं गुरुं न्यसेत्। ततः सप्तमगणाल्लब्धं परार्धादिगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत्। लब्धं द्वे शते षट्त्रिंशदधिके। राशिशेषं त्रीणीति तृतीयविकल्पमादिगुरुं न्यसेत्। ततो लब्धं सैकं कृत्वा द्वितीयगणस्य पञ्चविकल्पत्वात् पञ्चभिर्हरेत्। लब्धं सप्तचत्वारिंशत्। राशिशेषं द्वे इति द्वितीयविकल्पमन्तगुरुं न्यसेत्। ततो लब्धं सैकं कृत्वा तृतीयगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत्। लब्धं द्वादश। शेषं चत्वारीति चतुर्थविकल्पं सर्वलघुं न्यसेत्। ततश्चतुर्थगणस्य पञ्चविकल्पत्वात्पञ्चभिर्हरेत्। लब्धं द्वे। राशिशेषं द्वे इति द्वितीयविकल्पमन्तगुरुं न्यसेत्। ततो लब्धं सैकं कृत्वा पञ्चमगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत्। लब्धं शून्यम्। राशिशेषं त्रीणीति तृतीयविकल्पमादिगुरुं न्यसेत्। षष्ठो नित्यविन्यासो लघुरेव। ततो लब्धं सैकं कृत्वा सप्तमगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत्। लब्धं शून्यम्। शेषमेकमिति प्रथमविकल्पं सर्वगुरुं न्यसेत्। अन्ते नित्यविन्यासो गुरुरेव। स्थापना[7] यथा—।।।।, ।ऽ।, ऽऽ, ऽऽ, ।।।।, ।।।।, ।।।।, ऽ; ऽ।।, ।।ऽ, ।।।।, ।।ऽ, ऽ।।, ।, ऽऽ, ऽ. १२१२१२१२ संख्यतमैषा आर्या।

यदाह—

> नष्टाङ्के प्रथमं भक्ते गणाङ्कैश्चतुरादिभिः[8]।
> शेषसंख्यो गणो देयो लब्धं कुर्यात्सरूपकम् ॥ ५.१ ॥
> पुनर्भजेत्पुनर्लब्धं सरूपं शेषसंख्यया।
> गणान्द्व्याद्गते शेषे गाथायाः प्राग्गणक्रमः ॥ ५.२ ॥

एवमन्येष्वपि मात्राच्छन्दःसु नष्टविधिर्ज्ञेयः। इति नष्टानयनम् ॥ ५.२ ॥

---

१ चत्वारि A २ हृतशेषं AD, हृतशेषत्रीणि C ३ लब्धं dropped in D ४ चतुर्विकल्प A. ५ चतुर्विकल्पं AC ६ पञ्चमेदत्वात् ABD ७ स्थापना to आर्या dropped in ABP ८ चतुरादिकैः DP.

अथोद्दिष्टस्य संख्यापरिज्ञानार्थमाह –

उद्दिष्टेऽन्त्याल्लाद् द्विर्ग्येकं[1] त्यजेत् ॥ ६ ॥

केनचित्प्रस्तारोक्ते वृत्ते कतिथमित्युद्दिष्टे यथा – (ऽऽ।।) एवं गलेषु स्थापितेषु अन्त्याल्लादारभ्य अर्थात् [1)]पश्चानुपूर्व्या अधो द्विरिति द्विगुणोऽङ्कः कार्यः । ग् चेदेकं त्यजेत् । गुरोरधो द्विगुण एकोनः कार्यः । अयमर्थः – अन्त्यस्य लस्याधो योऽङ्कस्तं द्विगुणयेत्[3] । स च निराकाराया आवृत्तेरसंभवात्प्रथमातिक्रमे कारणाभावादेक एव परिशिष्टो द्विगुणीकृतो द्विको जातस्ततस्तस्मादपनीय तत्पूर्वस्य[4] गुरोरधो निधाय द्विगुणीकृतश्चतुष्कः । स एकोनः कृतस्त्रिकः । पुनस्तत्पूर्वस्य गुरोरधो निधाय द्विगुणीकृतः[6] षट्कः । स एकोनः कृतः[7] पञ्चकः । तदीदृशं पञ्चमं वृत्तमिति[8] ॥ ६ ॥

अथ जातीनामुद्दिष्टमाह –

आद्यमन्त्येन[9] हतं व्यधस्तनम् ॥ ७ ॥

स जयति कुमारपालः श्रीमानवनिपतिशतविनुतचरणः ।
निर्मलयशसा धवलितभुवनश्चक्रधरतुल्यौजाः ॥ ७.१ ॥

केनचिदियमार्या कतिथीति पृष्टे अस्या गणान्संस्थाप्य तदधश्चतुःपञ्चादिकां विकल्पसंख्यां यथासंभवं लिखेत् । ततो गणितक्रमेण आद्यमन्त्येन[10] हत्वा व्यधस्तनमिति तत्र दृष्टविकल्पादधस्तनान्[11] विकल्पान् राशेर्व्यपोह्य[2)] संख्यां लब्धामेतावतिथं वृत्तमिति निर्दिशेत्[12] । कथम् । अन्ते न्यस्तस्य अर्धगणस्य[3)] अविकल्पत्वात् एकमङ्कमधो[13] निधाय सप्तमगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हन्यात् । जातानि चत्वारि । इह दृष्टः सर्वगुरुः । तस्याधस्तनान् अन्तगुरु-आदिगुरु-सर्वलघून् त्रीन् अस्माद्राशेः पातयेत् । शेषमेकम् । षष्ठश्चाविकल्पः । [4)]पञ्चमे चतुर्भिर्हते अधस्तने चैकस्मिन्सर्वलघौ त्यक्ते त्रीणि । चतुर्थे पञ्चभिर्हतेषु पञ्चदश । [5)]अधस्तनेषु त्रिषु त्यक्तेषु द्वादश । तृतीये[14] चतुर्भिर्हतेषु अष्टचत्वारिंशत् । त्याज्यं नास्ति । द्वितीये[15] पञ्चभिर्हतेषु त्रिषु त्यक्तेषु द्वे शते सप्तत्रिंशदधिके । प्रथमे

1) पश्चानुपूर्व्या अधो द्विरित्यत्र लघो· प्रान्त्यसबन्धिनोऽधो द्विगुणः । यदा प्रान्ते गुरुर्भवति तदा द्विगुणं अङ्कं कृत्वा एकं पातयेत् । 2) व्यपोह्य अपनीय । 3) अर्धगणेत्यत्र अर्धगणं हि एकगुरुत्वात् । 4) पञ्चमे चतुर्भिर्हते अधस्तने दले पञ्चमे स्थाने यश्चतुर्लक्षणोऽङ्कः स एकेन अवशिष्यताङ्केन गुण्य. । जाताश्चत्वारः । तदनन्तरमत्र पञ्चमे स्थाने सर्वलघु पाश्चात्यो गणोऽस्ति अतः प्रान्त्योऽस्याग्रे स्थित. सर्वलघुसबन्धी चतुर्णां मध्ये निष्काशनीय । अवशिष्टास्त्रय. । 5) अधस्तनेषु इत्यत्र अत्र प्रान्तगुरुरस्ति अतो गणसंबन्धि अङ्कत्रयं पातयेत ।

१ द्विग्चेक B द्विर्येकD, द्विर्गेकं ANP २ यथा ।ऽऽ एवं लगेषु CN, यथा ऽऽ। एवं लगेषु A, यथा ।ऽ। एवं लगेषु D ३ द्विर्गुणयेत् B ४ तत्पूर्वगुरो BP ५ कृत dropped in A. ६ कृतपट्क· C ७ कृतः dropped in CD ८ वृत्तं पञ्चममिति A. ९ अन्तेन ABCDGP. १० अन्तेन ADGH ११ अधस्तान् N. १२ निर्दर्शयेत् B १३ एकमङ्कमन्ते निधाय A, एकमधो निधाय B १४ तृतीये स्थाने B. १५ द्वितीये स्थाने B.

चतुर्भिर्हतेषु एकस्मिन् त्यक्ते नव शतानि सप्तचत्वारिंशदधिकानि । पूर्वार्द्धान्त्यार्धगणश्चाविकल्पः । सप्तमे चतुर्भिर्हतेषु सप्तत्रिंशच्छतान्यष्टाशीत्यधिकानि । त्याज्यं नास्ति । षष्ठे द्वाभ्यां हतेषु पञ्चसप्ततिः शतानि षट्सप्तत्यधिकानि । त्याज्यं नास्ति । पञ्चमे चतुर्भिर्हतेषु त्रिंशत्सहस्रास्त्रीणि शतानि चतुरुत्तराणि । त्याज्यं नास्ति । चतुर्थे पञ्चभिर्हतेषु चतुर्षु त्यक्तेषु लक्षमेकमेकपञ्चाशत्सहस्राः पञ्च शतानि षोडशाधिकानि । तृतीये चतुर्भिर्हतेषु त्रिषु त्यक्तेषु षट् लक्षाः षष्टिशतानि एकषष्ट्यधिकानि । द्वितीये पञ्चभिर्हतेषु द्वयोस्त्यक्तयोस्त्रिंशल्लक्षास्त्रिंशत्सहस्रास्त्रीणि शतानि त्र्युत्तराणि । प्रथमे चतुर्भिर्हतेषु त्याज्याभावादेका कोटिरेकविंशतिर्लक्षाः एकविंशतिः सहस्राः द्वे शते द्वादशोत्तरे एतावतिथीति[१] निर्दिशेत् ।

यदाह–

गणानुद्दिष्टगाथायाः संस्थाप्य तदधो लिखेत् ।
चतुःपञ्चादिकां[२] संख्यां स्थानस्थानोचितां ततः ॥ ७.२ ॥
हत्वा हत्वा[३]द्यमन्त्येन चोपरिस्थ[४]गणादधः ।
[1]पृथग्धृतगणेभ्योऽथ गणसंख्यां विकल्पयेत्[2] ॥ ७.३ ॥
हताद्वार्योचितात्[५] तावद्यावदाद्याङ्कसंभवः ।
तत्संख्यामुद्दिष्टेद्गाथामुद्दिष्टप्रत्यये बुधः ॥ ७.४ ॥

एवमन्यास्वपि जातिषु यथास्वविकल्पं ज्ञेयम् ॥ इत्युद्दिष्ट[६]संख्यानयनम् ॥७॥

अथ सर्वैकादिगलक्रियापरिज्ञानार्थमाह –

**वर्णसमानेककान्सैकानुपर्युपरि[७] निक्षिपेन्**
**मुक्त्वान्त्यं सर्वैकादिगलक्रिया ॥ ८ ॥**

वर्णसमान्वर्णतुल्यान् । यावन्तो वर्णास्ताव[८]तः एककान् सैकानेकेन सहितान् वि[९]न्यस्य उपर्युपरि[१०] निक्षिपेदन्त्यं मुक्त्वा । इयं सर्वैकादिगलक्रिया । सर्वगा[११]णां सर्व[१२]लानां एकादिगानामेकादिलानां च परिज्ञानाय क्रियाकरणमित्यर्थः । यथा चतुरक्षरे छन्दसि पञ्चै[१३]कका उपर्युपरि न्यसन्ते ।

१ १ १ १ १ १   ततोऽधस्तनो द्वितीये क्षिप्यते । द्वितीयोऽपि तृतीये ।
१ १ १ ४ ४ ४   तृतीयोऽपि चतुर्थे । मुक्त्वान्त्यमिति वचनादन्त्यो वर्ज्यते ।
१ १ ३ ३ ६ ६   पुनरधस्तनो द्वितीये क्षिप्यते द्वितीयोऽपि तृतीये अन्त्यं
१ २ २ २ ३ ४   मुक्त्वा । पुनरधस्तनो द्वितीये क्षिप्यते । जातम् । (See
१ १ १ १ १ १   the last row in the table). अत्र प्र[१४]थममेकं सर्वगुरु

1) पृथग्धृतगणेत्यत्र पृथक् कृतां मण्डितगणेभ्यः । 2) विकल्पयेदित्यत्र षष्ठगणानुसारेण गणसंख्यां विचारयेत् । कोऽर्थः । अवशिष्यमाणगणसंख्याङ्कं हतादङ्कात् पातयेत् ।

१ एतावतिथीमिति ABP २ चतुष्पञ्चा° CDN. ३ one हत्वा dropped in B. ४ चोपरिष्टगणात् A ५ वार्योचिता तावत् CN ६ इत्युद्दिष्टानयनम् A ७ उपर्युपरि क्षिपेत् CDFGHN. ८ तावन्त· CDP. ९ विनस्य B १० उपर्युपरि क्षिपेत् BCNP. ११ सर्वगाना P १२ dropped in A १३ पञ्चैका B १४ प्रथमकं N.

(SSSS) । चत्वार्येकलघूनि त्रिगुरूणि (।SSS; S।SS; SS।S; SSS।) । षट् द्विलघूनि द्विगुरूणि (।।SS; ।S।S; S।।S; ।SS।; S।S।; SS।।) । चत्वारि त्रिलघूनि एकगुरूणि (।।।S; ।।S।; ।S।।; S।।।) । एवमेकं[2] सर्वलघु (।।।।;) । इयमेव[3] सर्वैकादिगलक्रिया प्रथमषष्ठैकादशषोडशसमवृत्तहान्या त्र्यक्षरार्ध-समस्य । यथा–४, ४, ४ । अत्र चत्वारः एकलघवश्चत्वारो द्विलघवश्चत्वारस्त्रिलघवः । एवमन्येष्वप्यर्धसमेषु ज्ञेयम् । तथा अष्टाक्षरजातेः[5] सर्वैकादिगलक्रिया त्र्यक्षरसमवृत्तहान्या चतुरक्षरार्धसमहान्या च त्र्यक्षरविषमस्य । यथा–८, २६, ५२, ६६, ५२, २६, ८ । एवमन्येष्वपि विषमेषु ज्ञेयम् ॥ ८ ॥

अथ जातीनां सर्वैकादिगलक्रियामाह–

**आद्यभेदानधोऽधो न्यस्य परैर्हत्वाग्रे क्षिपेत् ॥ ९ ॥**

आर्यायामाद्यगणस्य भेदान् अलघु[6]-द्विलघु-चतुर्लघून् एकं द्वौ एकं च इत्यधः स्थापयित्वा परैर्द्वितीयगणभेदैः अलघु-द्विलघु-चतुर्लघुभिः एक-त्रि-एकसंख्यैः कपाट-सन्धि[7]क्रमेण स्थापितैः । [8]यथा (१, २, ११, ३, १) । पृथक् पृथग् गुणयित्वा[9] अग्रे क्षिपेदिति । एकेन गुणिते[10] जातमग्रतः स्थाप्यम् १, २, १ । अत्र [11]त्रिभिर्गुणितं (३, ६, ३) क्षिपेत् । जातं[12] (१, ५, ७, ३) । पुनरेकेन (१, २, १) गुणितमत्र क्षिपेत् । जातं (१, ५, ८, ५, १) । अत्र एको लघुः पञ्च द्विलघवः अष्टौ चतुर्लघवः पञ्च षड्लघवः एकश्च सर्वलघुरिति । पुनरस्य राशेरनयैव दिशा तृतीयगणविकल्पैर्घाते जातस्य परस्मिन् राशौ क्षेपे जातं[12] (१, ७, १९, २६, १९, ७, १) । पुनरस्य राशेरनयैव दिशा चतुर्थ-गणविकल्पैर्घाते जातस्य[13] परस्मिन्राशौ क्षेपे जातं (१, १०, ४१, ९०, ११६, ९०, ४१, १०, १) ॥ ९ ॥

अथ संख्यामाह–

**ते पिण्डिताः संख्या ॥ १० ॥**

ते सर्वैकादिगलाङ्काः पिण्डिताः एकीकृताः संख्या भवन्ति । तद्यथा–अस्मिन्नेव चतुरक्षरे छन्दस्येकं चत्वारि षट् चत्वारि एकमिति षोडश वृत्तानि भवन्ति । एवमर्ध-समेषु विषमेषु मात्राच्छन्दःसु च ज्ञेयम् ॥ १० ॥

---

१ dropped in A. २ एकमेकं CN ३ द्वयमेव A. ४ ग dropped in A. ५ अष्ट अक्षरजाते B, अष्टाक्षरजातौ A. ६ लघु-द्विलघु N. ७ सन्धि dropped in B. ८ यथा १,३,११,२,१ A, १,२,११,२,१ BP ९ गणयित्वा A १० गुणितेन N ११ त्रिभितत् क्षिप्यते A, त्रिभिर्गुणित तत् क्षिपेत् B १२ जातं यथा B. १३ घातेऽस्य A.

अथ प्रकारान्तरेण समवृत्तानां [1]संख्यामाह—

**वर्णसमद्विकहतिः[2] समस्य ॥ ११ ॥**

समवृत्तस्य पादे यावन्तो वर्णास्तावतां द्विकानामन्योऽन्यघातः समवृत्तानां संख्या। तत्र उक्तायां द्विकस्यान्योऽन्यघातो न संभवतीति द्विभेदैव । अत्युक्ता द्विकद्वयघाते चतुर्भेदा। मध्या द्विकत्रयघाते अष्टभेदा। प्रतिष्ठा द्विकचतुष्टयघाते षोडशभेदा। एवं यावदुत्कृतेः षड्विंशतेः द्विकानामन्योऽन्यघाते षट् कोट्यः एकसप्ततिर्लक्षाः अष्टौ सहस्राण्यष्टौ शतानि चतुःषष्ट्यधिकानि ॥ ११ ॥

**ते [3]द्विगुणा द्विहीनाः सर्वे ॥ १२ ॥**

ते विवक्षितजातिभेदा द्विगुणा द्विहीनाः उक्तादयो विवक्षितजातिपर्यन्ताः [4]सर्वे भेदा भवन्ति। [1]यथा उत्कृतिभेदाः एव द्विगुणा द्विहीनाः सर्वजातिभेदास्त्रयोदश कोट्यः [5]द्वाचत्वारिंशल्लक्षाः [6]सप्तदशसहस्राः सप्तशतानि षड्विंशत्यधिकानि भवन्ति । यथा [7]वा गायत्र्यां [8]चतुःषष्टिर्भेदा द्विगुणा द्विहीना गायत्रीपर्यन्ताः षड्विंशत्यधिकं शतमुक्तादिजातिभेदा भवन्ति। एवमन्यास्वपि वाच्यम् ॥ १२ ॥

अथ प्रकारान्तरेण [9]अर्धसमसंख्यामाह—

**समकृती राश्यूना अर्धसमस्य ॥ १३ ॥**

सममिति समवृत्तसंख्योच्यते। तस्य कृतिर्वर्गः । सा राश्यूना समवृत्तसंख्याहीना । अयमर्थः । समवृत्तसंख्यागुणिता समवृत्तसंख्या राश्यूना अर्धसमस्य संख्या भवति। यथा चतुरक्षरसमवृत्तसंख्या षोडश। तत्कृतिर्द्वे शते षट्पञ्चाशदधिके समार्धसमभेदाः। ते राश्यूनाः शुद्धार्धसमस्य संख्या भवन्ति। द्वे शते चत्वारिंशदधिके ॥१३॥

अथ प्रकारान्तरेण [10]विषमवृत्तसंख्यामाह—

**[2]तत्कृतिर्विषमस्य ॥ १४ ॥**

तस्याः समकृतेः कृती राश्यूना विषमवृत्तस्य संख्या । यथा—अस्मिन्नेव चतुरक्षरे छन्दसि समकृतिर्द्वे शते षट्पञ्चाशदधिके। तस्याः कृतिः पञ्चषष्टिः सहस्राः पञ्च शतानि षट्त्रिंशदधिकानि समार्धसमविषमसंख्या। अस्यां समार्धसमराश्यूनायां पञ्चषष्टिः सहस्राः द्वे शते अशीत्यधिके ॥ १४ ॥

1) यथोत्कृतिभेदाः एवेत्यत्र उत्कृतिभेदाः ६७१०८८६४ द्वाभ्यां गुणने १३४२१७७२८ द्विहीना १३४२१७७२६। 2) तत्कृतिरित्यत्र चतुरक्षरसमराशि १६ चतुरक्षरार्धसमराशिः २४०, द्वयो राश्योर्मिलितयोः २५६ एष राशिः ६५५३६ एतस्मात् पात्यते। ततः चतुरक्षरपादस्य विषमवृत्तस्य प्रस्तारसंख्या ६५२८० रूपा भवन्ति। सर्वगुरु १ द्विलघु १० चतुर्लघु ४१ षट् लघु ९० अष्टलघु ११६ दशलघु ९० द्वादशलघु ४१ चतुर्दशलघु १० षोडशलघु १। अष्टमोऽध्यायः संपूर्णः ॥ इति छन्दोऽनुशासनस्य छन्दश्चूडामण्यपराह्वयस्य पर्यायाः संपूर्णाः। संवत् १६५९ वर्षे वैशाखशुदि १५ दिने लिखिताः ॥ पं० रत्नचन्द्रगणिभिः।

१ समवृत्तसंख्यामाह B  २ द्विकसहति D.  ३ द्विगुणद्विहीना. N; द्विगुण dropped in A.
४ सर्वभेदा O  ५ द्विचत्वा० लक्षा. BO; द्वाच० लक्ष्या. A.  ६ सप्तदश सहस्राणि A.  ७ च A.
८ चतुःषष्टिभेदा. BN.  ९ अर्धसमसंख्या B.  १० विषमवृत्तसंख्या A.

अथ मात्रावृत्तानां प्रकारान्तरेण संख्यामाह –

**विकल्पहतिर्मात्रावृत्तानाम् ॥ १५ ॥**

मात्रावृत्ते या गणविकल्पसंख्या सा अन्योऽन्यहता मात्रावृत्तस्य संख्या भवति । सा च यथास्थानं प्रागेवोदाहृता ॥ १५ ॥

अथ मात्राविकल्पानां संख्यामाह –

**अङ्कान्त्योपान्त्ययोगः परे परे मात्राणाम् ॥ १६ ॥**

अङ्कानामेकद्व्यादीनां यौ अन्त्यौपान्त्यौ तयोर्योगः परस्परमीलनं परे परे स्थाने न्यस्तौ मात्राणां संख्या भवति । यथा – द्व्येकयोरन्त्योपान्त्ययोर्योगे त्रयः परस्थाने न्यस्तास्त्रिमात्रस्य विकल्पसंख्या । द्विकत्रिकयोर्योगे[1] पञ्च परे स्थाने न्यस्ताश्चतुर्मात्रस्य विकल्पसंख्या । पञ्चकत्रिकयोर्योगेऽष्टौ परे स्थाने न्यस्ताः पञ्चमात्रस्य विकल्पसंख्या । अष्टकपञ्चकयोर्योगे त्रयोदश परे स्थाने न्यस्ताः षण्मात्रस्य विकल्पसंख्या । त्रयोदशकाष्टकयोर्योगे एकविंशतिः परे स्थाने न्यस्ताः[2] सप्तमात्रस्य विकल्पसंख्या । एकविंशतित्रयोदशयोर्योगे चतुस्त्रिंशत्परे स्थाने[3] न्यस्ताः अष्टमात्रस्य विकल्पसंख्या । स्थापना[4] – १ । २ । ३ । ५ । ८ । १३ । २१ । ३४ । एवमुत्तरत्रापि ॥ १६ ॥

अथाध्वयोगमाह –

**द्विघ्नानेकाध्वयोगः ॥ १७ ॥**

द्विघ्ना द्विगुणा एकेन रूपेण हीना संख्या अध्वयोगो भूमिमानं भवति । त्र्यक्षरे छन्दसि अष्टौ प्रस्ताराः । ते द्विगुणिताः षोडश । तत एकस्मिन् पातिते पञ्चदश । पञ्चदशाङ्गुलायां भुवि त्र्यक्षरं छन्दः प्रस्तार्यते । एकमङ्गुलं वर्णेनावष्टभ्यते । एकं चान्तरालं चाध्वमानम् । इह च प्रस्तारसंख्ययोरेवोपयोगो नष्टादयस्त्रयश्चित्रमात्रम् । अध्वयोगस्तु पुरुषेच्छानुविधायित्वेन अनियतः । न च क्षेत्रनियमे फलमस्ति[5] इति निरुपयोगः । पूर्वाचार्यानुसरणात्त्वस्माभिरुक्तः[6] ॥ १७ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ

प्रस्तारादिव्यावर्णनो नामाष्टमोऽध्यायः समाप्तः ॥ ८ ॥

संपूर्णं छन्दोऽनुशासनमिति ।

ग्रंथाग्रं २०५ ॥ उभयग्रं० श्लोकसंख्या ३००८ ॥



---

१ त्रिकद्विकयो P २ न्यस्ता D. ३ परिस्थाने D ४ The word and the figures are dropped in D ५ किमपि फल० E. ६ अस्माभिरप्युक्त A.

# परिशिष्टम् ।

## जानाश्रयी-छन्दोग्रन्थान्तर्गत-प्राकृतवृत्तवर्णनम् ।

## INTRODUCTORY NOTE

*Jānāśrayī* is an old work on Sanskrit metres composed by some Pandit at the court of King Janāśraya, who is generally identified with Mādhavavarman I of the Visnukundin dynasty who ruled over the districts of Krishnā and Godāvarī towards the end of the sixth century A. D The work consists of six chapters which respectively deal with the Saṁjñās, the Visama Vrttas, the Ardhasama Vrttas, the Sama Vrttas, the Mātrā Vrttas and the Prakriyās such as the Prastāra and others. The Mātrā Vrttas in the fifth chapter are defined under four different heads or Prakaranas, namely, the Vaitālīya, the Mātrāsamaka, the Āryā, and the miscellaneous. Among these the last is the most important one for the history of ancient Prākrit prosody, it consists of Sūtras 45 to 75, which describe about nineteen metres of which eleven are strophic, the others being single ones. These are defined and illustrated as Sanskrit metres, but the commentator tells us that they are 'a few *Jātis current among the people* Many of these metres with their names are found in Virahānka's *Vrttajātisamuccaya* and ought to leave no doubt that they are old metres which properly belong to the Prākrit prosody In the Āryā Prakarana too, there are two or three new varieties, most important among them is the Gītikā which played a very important part in the construction of strophic metres and had retained its peculiarities for a long period during which it was very popular with the poets (as the diminutive termination *lā* in its name suggests), until Hemacandra formally obliterated the difference between it and the Gīti. Hemacandra, as a matter of fact, has treated the Gītikā as a kind of the Gīti, giving different names to its three varieties, probably following his great predecessor Svayambhū in this respect.

2 I have published this portion of the *Jānāśrayī*, namely Sūtras 39 to 44 from the Āryā Prakarana and 45 to 75 from the last Prakarana, with an exhaustive introduction in the Sārdhaśatābdī Volume of the Bombay Asiatic Society, Bombay 1957, but I am reproducing it here owing to its importance for the Prākrit metres, whose origin and development I have tried to trace in the introduction to the present volume of Hemacandra's *Chandonuśāsana.* As said in the abovementioned

article, I have generally followed the Trivandrum edition of the work; but now and then I have adopted the readings mentioned in the foot-notes of that edition and given from the three manuscripts on which the edition is based, designated as *ka*, *kha* and *ga*. Where no help could be obtained either from the readings adopted in the edition or from those noted in the foot-notes, I have suggested emendations, showing the readings of the edition (ed.) or of the manuscripts, as the case may be, in the foot-notes. Words or letters newly added by me to complete the sense are shown in the rectangular brackets.

3. *Jānāśrayī* has made use of eighteen different Mātrā or Varṇa Gaṇas for its definitions of metres, employing a double set of symbols to convey them I have discussed these along with those employed by another work on Sanskrit metres, namely, the Ratnamañjūṣa, in the introduction, paras 3–5. Here in the following portion, only the following are used –

आ – आकार (सातवत्) = SII, इ – इकार (विभानिक्) = ISI ई – ईकार (धीवराग्) = SIS; क् – ककार (विभातिक्) = ISI, द् – दकार (नचरतिद्) = IIII; व् – वकार (तेश्रीःक्वव्) = SSI; भ् – भकार = S; य् – यकार (कमलिनीय्) = IIS, स् – सकार (गङ्गास्) = SS; ह् – हकार = I.

(I signifies a short letter or one Mātrā, S signifies a long letter or two Mātrās.)

4. At the end of the text I am reproducing also the translation of it from the abovementioned article in the Sārdhaśatābdī Volume owing to the somewhat obscure nature of terms employed here. I am thankful to the authorities of the Society for giving me permission to reproduce the portions of that article here.

## जानाश्रयी-छन्दोविचिगत-पञ्चमाध्यायसूत्राणि ३९–७५

### वामनिकाद्ये षष्ठो हः ॥ ५.३९ ॥

आर्याया आद्येऽप्यर्धे पष्ठो गणो लघुरेव केवलो भवति चेत्, वामनिका नाम भवति ।

यथा–

प्रविततताारककुमुदे गतमेघे शरदि सौम्ये च ।
चन्द्रो विभाति संप्रति हंस इव नभःसरस्येषः ॥ ५.३९.१ ॥

### गीतिरन्त्ये दि वा ॥ ५.४० ॥

आर्याया अन्त्येऽप्यर्धे पष्ठो गणो दकार इकारो वा भवति चेत्, गीतिर्नाम भवति ।

यथा–

भ्रमदलिकुल[ कल ]विरुतप्रविततकमला विभान्ति कमलिन्यः।
भासुरमरकतमणिनिभकोमलमृदुचारुवर्णसंछन्नाः ॥ ५.४०.१ ॥

**ध्रुवोभयोर्नौ ॥ ५.४१ ॥**

सैव गीतिश्चतुर्थे गणे यतिरुभयोरर्धयोर्भवति चेत्, ध्रुवा नाम भवति। यथा–

ललनाननानि नीलालकानि ललितानि [ लोलनयनानि ]।
राजन्ति बन्धुजीवाधराणि रतिभोगसारसहितानि ॥ ५.४१.१ ॥

**गीतिका सप्तमो यी वा ॥ ५.४२ ॥**

सैव गीतिर्गीतिका नाम भवति सप्तमो गणो यकार ईकारो वा भवति चेत्। यथा–

त्वामिह धन्यं मन्ये विचित्रधर्मार्थकामसंश्रयासु।
यस्य चरितं तव मतं विद्वज्जनवल्लभासु गीतिकासु ॥ ५.४२.१ ॥

**क्वचित् तृतीयश्च, पञ्चमोऽपि ॥ ५.४३ ॥**

क्वचित् प्रयोगान्तरे उभयोरप्यर्धयोस्तृतीयश्च पञ्चमश्च गणो यकार ईकारो वा भवति। अपि शब्दादेकस्मिन्नप्यर्धे भवति। प्रयोगे यत्नः कार्यः ॥ ५.४३ ॥

**पूर्णार्धार्यागीतिः ॥ ५.४४ ॥**

सैव गीतिः पूर्णार्धा आर्यागीतिर्नाम भवति। यथा–

एतत्तद्भुजयुगलं मन्दरगिरिभित्तिघट्टिताङ्गदवलयम्।
अस्ति तुमुलशरपाटितवर्म रुधिररागसंभृतचर्म ॥ ५.४४.१ ॥

## इत्यार्याप्रकरणम्।

आर्याजातिः सोपजातिरुक्ता। इदानीमन्याश्च काश्चिज्जातयो लोके प्रचरन्त्यो वक्ष्यन्ते।

**प्रतिपादं पञ्चार्धं च गलितम् ॥ ५.४५ ॥**

पञ्च गणा गणस्यार्धं च पादे पादे भवन्ति चेत्, गलितं नाम भवति। यथा–

न स्मरसि किं त्वदीरित-शर-भासुर-तानाम्,
अटवीषु चोग्र-केसरि-शरभासु-रतानाम्।
अथवा वसन्तदृष्ट्या निशातदन्तस्य,
प्रातर्बोधाय शरन्निशा तदन्तस्य ॥ ५.४५.१ ॥

**चत्वारो निर्धायिका ॥ ५.४६ ॥**

चत्वारो गणाः प्रतिपादं भवन्ति चेत्, निर्धायिका नाम भवति ॥ ५.४६ ॥

---

१ मरतक ed २ ललनावनानि ed. ३ धन्या ed. ४ मनो ed. ५ अत्ति तुमुलसरपातितकर्म ed, (तन्म for कर्म–कग) ६ वसन्तकस्य दृष्ट्या (कग), अथवान्तकस्य सृष्ट्या–Ratnamañjūsā. ७ प्राता बोधाय Ratnamañjūsā.

**यी वान्त्यः ॥ ५.४७ ॥**

अन्त्यो गणश्चतुर्णां पादानां निर्धायिकाया यकारो वा ईकारो वा भवति ॥ ५.४७ ॥

**क तृतीयः ॥ ५.४८ ॥**

तस्याः निर्धायिकायाः प्रतिपादं तृतीयो गणः प्रायेण ककारो भवति । यथा–

वाले बालेन्दुखण्डधारिणा,
क्रोधाद् दग्धोऽपि मन्मथाधमः ।
सकलं लोकं हि चण्डमानसो,
निशितैर्वर्णैर्भिनत्ति मर्मसु ॥ ५.४८.१ ॥

**पञ्च नर्कुटकम्[8] ॥ ५.४९ ॥**

प्रतिपादं पञ्च गणा भवन्ति चेत्, नर्कुटकं नाम भवति ।

**[ यी वा द्वितीयतृतीयौ ॥ ५.५० ॥]**

तस्यैव नर्कुटकस्य द्वितीयतृतीयगणौ यकार ईकारो वा भवंतः[9] ॥ ५.५० ॥

**तृतीयो व् वा ॥ ५. ५१ ॥**

तस्यैव नर्कुटकस्य[10] तृतीयो गणो वकारो वा भवति । यथा–

उपरि विधृतभसनिकरं[11] प्रवरसुरभितं,
श्रवणभुजङ्गचक्रमरुता दहनकणमुचा ।
धवलितमिन्दुखण्डकिरणैः क्षरदमृतलवैः,
कपिशमयूखसिन्नतिमिरं नयनमवतु वः ॥ ५.५१.१ ॥
इदं[12] "वरं विजृम्भमाणः कुमुदानन्दः,
स तु नवनीतपिण्डसदृशास्तिमिरविमथनः ।
रजनिकरो[13]ऽप्युपैति शनैर्गगनं नीलं[14]",
सरस इव [ च सरो ] नीलं [ खु ] विपुलं हंसः ॥ ५.५१.२ ॥

**षडधिकाक्षरा ॥ ५.५२ ॥**

प्रतिपादं षट् गणा भवन्ति चेत्, अधिकाक्षरा नाम भवति ॥ ५.५२ ॥

**युङ् न क् ॥ ५.५३ ॥**

तस्या अधिकाक्षरायाः प्रतिपादं युग् गणः ककारो न भवति ॥ ५.५३ ॥

**क तृतीयः ॥ ५.५४ ॥**

तस्या अधिकाक्षरायाः प्रतिपादं तृतीयो गणः ककार एव भवति ॥ ५.५४ ॥

---

८ नकुटकम् ed; ( नकुक्कुटकं–ख, नकुर्टकम्–क ). ९ भवति ed. १० नकुर्टकस्य–क; ११ निकरप्रवरसुरभित ed. १२ इदं वर एष विजृ° ed. १३ रजनीकरो ed. १४ नील ed.

## घी वान्त्यः ॥ ५.५५ ॥

तस्या अधिकाक्षरायाः प्रतिपादमन्त्यो गणो यकार ईकारो वा भवति ॥ ५.५५ ॥

## क्वचिदाद्योऽपि ॥ ५.५६ ॥

तस्या अधिकाक्षरायाः क्वचित् प्रयोगान्तरे आद्योऽपि गणो यकार ईकारो वा भवति। यथा–

विकसितनीलोत्पला[15]र्चितं मदनवाणदीपनं,
[16]ध्रुवंमधुचपकातिशायिनं दयितमुखसमर्पितम्।
सुतनु निषेवितं[17]वतो[ऽधरं] तनुतरंगविह्वलं,
न[18] च वागधिकाक्षरा तथा[19] श्रुतिमनोऽभिनन्दिनी ॥ ५.५६.१ ॥

## शीर्षकं गीतिकापरा ॥ ५.५७ ॥

सैवाधिकाक्षरा गीतिकापरा भवति चेत्, शीर्षक नाम भवति। यथा–

विचरन्ति महेन्द्रगोपका नीलशाड्वलश्रियः,
स्तोकं ग्रहचन्द्रभास्करांश्छादयन्ति नीरदाः।
मेघोद[20]चारिणी च विलसति तटित् समन्ततः,
प्रणदन्ति वनस्थलीषु मुदितमनसश्च चातकाः ॥
कुटचकुसुमाधिवासितां[21]ः सिलिन्ध्रकन्दलवनान्तसेविनश्च।
वान्ति पवनाः प्रवासिनां कुर्वन्ति च सोत्सुकानि मानसानि ॥ ५.५७.१ ॥

## एकैकवृद्ध्या ललित-सुभद्रा-विद्रुम-वंशपत्र[22]-कुञ्जर-पुष्पदन्त-मालाः ॥५.५८॥

इत्येवंनामकानि[23] सप्त शीर्षकाणि भवन्ति। तत्र ललितस्य पादः सप्त गणा भवन्ति, अन्ते गीतिका च। सुभद्राया अष्टौ, अन्ते गीतिका च। एव शेषाणि शीर्षकाणि एकैकवृद्ध्या ज्ञेयानि ॥ ५.५८ ॥

## निर्धायिकामध्यं त्रिकलयम् ॥ ५.५९ ॥

उक्तप्रकारं शीर्षकं निर्धायिकामध्य भवति चेत्, त्रिकलयं नाम भवति। आदावधिकाक्षरा मध्ये निर्धायिका अन्ते गीतिका एवमेतास्तिस्रस्त्रिकलयमिति ॥ यथा–

विकसितकुसुमं निशागमे [पूर्ण]चन्द्रबोधितं[24],
संकोचमुपैति पङ्कजं भ्रमर एष[25] सोत्सुकः।
विनदन्ति मनोहराणि केदारोदरसंस्थिताः,
कान्तासहिता विचिन्त्य किमपि कलहंससारसाः ॥

---

१५ नीलोत्पलार्चितमदन° ed  १६ ध्रुव मधुचपकाद्यतिशयिनं ed.  १७ निषेवितवति (निषेवित यवति–खग) रतिरहस्तनु° ed  १८ नववाग° ed  १९ यथा च श्रुति° ed  २० मेघोदकचारिणी ed.  २१ वासितसिलिन्ध्र° ed.  २२ वंशपुष्प (खग).  २३ नामानि (खग)  २४ वोधितं ed. २५ एव ed.

शार्दूल[२६]रूढैरिवेन्द्रगोपकैः,
पुष्पैर्विभान्ति च वन्धुजीवकाः ।
शर्वर्य इव [ च ] विकीर्णतारका,
विकसितकुसुमा विभान्ति शीर्षकाः ।
सं[२७]सच्छदमकरन्दमुद्विहाय कुसुमातिपातिलोलुपानि ।
मधुकरकुलानि सादरं श्रयन्ति कुमुदानि रेणुपाण्डराणि ॥ ५.५९.१ ॥

**गणास्त्रयो भङ्गद्विपदी ॥ ५.६० ॥**

त्रयो गणाः प्रतिपादं भवन्ति चेत्, भङ्गद्विपदी नाम भवति । गणाधिकारे वर्तमाने पुनर्गणग्रहणं चतुर्लघूनां पञ्चलघूनां च सर्वेषां गणानां चाभेदेन ग्रहणार्थम् । इतरथा हि चतुर्लघूनामेव ग्रहणं स्यात् ॥ ५.६० ॥

**चत्वारः पञ्च षट् सप्त वा ॥ ५.६१ ॥**

तस्या भङ्गद्विपद्या न केवलं त्रय एव गणा भवन्ति । चत्वारो वा पञ्च वा षड् वा सप्त वा भवन्ति ॥ ५.६१ ॥

**भान्ते वा ॥ ५.६२ ॥**

तस्या भङ्गद्विपद्याः प्रतिपादं गुरुरन्ते भवति वा न वा ॥ ५.६२ ॥

**त्रिंशद्वा परमा ॥ ५.६३ ॥**

त्रिंशल्लघवो यस्या भङ्गद्विपद्याः सा भवति त्रिंशद्वा परमा अधिका भङ्गद्विपदी । ततः सर्वाभ्यो भङ्गद्विपदीभ्यो या परमा सा त्रिंशद्वा भवति । तदधिका नास्ति ॥ ५.६३ ॥

**द्विपदी गीतिकापरा ॥ ५.६४ ॥**

सैव भङ्गद्विपदी द्विपदीत्युच्यते गीतिकापरा भवति चेत् । उदाहरणम्—

क्षीणमम्बु वापीषु सरित्सु च सांप्रतं,
रक्ष्यमाणं[२८]बहुधनमिव भाग्यविपर्यये ।
तप्तपांसुरेषा च विशु[२९]ष्कवनद्रुमा,
वद्धचोरमातेव मही परितप्यते ॥
अवसीदति श्रमासहं गात्रं महिपस्य घर्ममूर्च्छितस्य ।
वहुपोष्यबालपरिजनं गृहतन्त्रमिवातुरं निरुद्यमस्य ॥ ५.६४.१ ॥

इयमपरा द्विपदी—

करुणाकर निष्करुणेन वायुना,
रिपुवार[ण] वारणदानगन्धिना ।
वहुवल्लभ [वल्लभ]विप्रयोजितो,
जनकान्तं[३०] जनश्चरताद्य दूयते ॥

---

२६ शालारूढै° ed. २७ सप्रच्छमदकरन्दं विहाय ed, ( -मकरन्दमविहाय-खग ). २८ रक्ष्यमाणं बहुधनमिद ed. २९ मन एव ed. ३० जनकान्तो ed.

अधुना मधुकरवन्धुना वन्धूकेन सरजस्ककेसरेण ।
भवतेव जगद्वन्धुना कुलमण्डन मण्डितानि भूस्थलानि ॥ ५.६४.२ ॥

**क्वचिद्विदारी मध्ये ॥ ५.६५ ॥**

क्वचित्प्रयोगान्तरे भङ्गद्विपदीगीतिकयोर्मध्ये विदारी भवति । विदारीलक्षणमुत्तरत्र वक्ष्यति । यथा—

अभिनवकन्दलीकुसुमकेसरलोलै[३१]वरस्थलीमुखाः,
कुसुमितकुटै[३२]जसुरभिपरागविराजितसानुकाननाः ।
समदमयूरमधुर[३३]केकारवपूरितकन्दरोदराः,
ससलिलमुखरजलदमलिना गिरयो रमयन्ति मानसम् ॥
केतकसूचिभिदा मरुता,
वकुलरजांसि समुद्वहता ।
अभिमुखदयितजनोऽपि जनः,
सोत्सुक एव बलात् क्रियते ॥
अवनुन्नातपरेणुना करेणुनाथमलिनेन तोयदेन ।
उपगिरिमुदन्तविद्युता सकलं जगदर्घ्यते मनोभवाय ॥ ५.६५.१ ॥

**विदारी भान्ताश्चतुर्दश लघवः ॥ ५.६६ ॥**

[गुर्वन्ताश्चतुर्दश लघवः] प्रतिपादं भवन्ति चेत्, विदारी नाम भवति ॥ ५.६६ ॥

**मिश्रः पञ्चमः प्रायः ॥ ५.६७ ॥**

तस्या विदार्याः प्रतिपादं पञ्चमो लघुः पूर्वेण वा लघुना परेण वा मिश्रो गुरुर्भवति प्रायः ॥ ५.६७ ॥

**उपान्त्ये[३४] आ ॥ ५.६८ ॥**

प्रायः इति वर्तते । तस्या विदार्याः प्रतिपादमन्त्यस्य समीपे प्राय आ[३५]कारो भवति । अ[न्य]त्रानियमः ।

सायसुरभिरजधूसरया, मृदुमलयानिलझंपित[३६]या ।
कामिजनो नवमालिकया, वि[३७]गलितमानमनाः क्रियते ॥

**त्रयोविंशतिर्भङ्गुरासकम् ॥ ५.६९ ॥**

भान्ता इति तु वर्तते । गुर्वन्तास्त्रयोविंशल्लघवो यथेष्टं मिश्रिता भवन्ति चेत्, भङ्गुरासकं नाम भवति ॥ ५.६९ ॥

---

३१ लीलाधर–ed. ३२ कुटच ed. ३३ मधुकरकेकाराव ed ३४ उपान्त्या mss ; एउपान्त्यः ed. ३५ एकारो ed. ३६ क्षपितया ed. ३७ यदपि विगलित mss.

**द्वादशावलम्बनम् ॥ ५.७० ॥**

[ द्वादश लघवः प्रतिपादं भवन्ति चेत्, अवलम्बनं नाम भवति । ]

**[ स्रोऽन्ते ] ॥ ५.७१ ॥**

तस्य प्रतिपादमन्ते प्रायः सँकारो भवति ॥ ५.७१ ॥

**उभे रासकम् ॥ ५.७२ ॥**

उभे भञ्जुरासकावलम्बने सहिते रासकमित्युच्यते । यथा—

कँथं वाहुसूलत्रिकदेशनिवेशितानि,
गूहसेऽद्य वसनेन किमङ्ग नखक्षतानि ।
लक्ष्मङ्कनालिङ्गनलक्ष्मनङ्गसाक्षि,
झर्पलक्ष्मा तव भरति तृतीयसिवेदमक्षि ॥
दशनद[ल]-प्रेंचितेन, क्षतजलवारुणितेन ।
शोभितेवाँधरेण, त्वमसि विलासधरे[ण] ॥ ५.७२.१ ॥

**गाथा ॥ ५.७३ ॥**

गाथेदानीं वक्ष्यते ॥ ५.७३ ॥

**आर्षी ॥ ५.७४ ॥**

सा च गाथा आर्षीति ज्ञेया । ऋषेरेवेयमित्यार्षी । पञ्चस्वनुष्टुबादिजगत्यन्तेषु सा गाथा भवति ॥ ५.७४ ॥

**पादैश्चतुर्भिः पड्भिर्वा ॥ ५.७५ ॥**

सा गाथा चतुर्भिर्वा पड्भिर्वा पादैः स्वजातीयैर्वा विजातीयैर्वा भवति । यथा—

पश्यसि पश्यसि परदोषमात्मदोषं न पश्यसि ।
भर्तारमथ धनं च कुलं च हित्वा किं किं हससि ॥ ५.७५.१ ॥
दश धर्मं न जानन्ति धृतराष्ट्र निवोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
त्वरमाणश्च भीतश्च कामी चोरश्च ते दश ॥ ५.७५.२ ॥

**इति जानाश्रय्यां छन्दोविचित्यां जात्यध्यायः पञ्चमः समाप्तः ॥**

---

३८ चोऽन्ते ed ३९ चकारो ed. But the letters may even be छोऽन्ते and छकारो. ४० कया ed. ४१ नपजन्मा ed. ४२ दशनदष्टचितेन ed. ४३ शोभितेन वाधरेण ed.

# Adhyaya V, (Sūtras 39 to 75)

[N. B. See Introductory note para 3 for the meanings of the technical terms like *d* or *dakāra* and the like.]

*It is Vāmanikā, when the sixth (Gaṇa) is h, (even) in the first (half of the Āryā) 39.*

If the sixth Gana even in the first half of an Āryā consists merely of a single short letter, it is called Vāmanikā. As.–

'At present in the autumn, this moon shines brightly like a swan in the lake-like sky, where stars resembling night-lotuses are scattered everywhere, from which the clouds have departed and which looks lovable (on that account).

(Note :- All the three adjectives in the first half must be taken with the word *nabhah-sarasi* in the second half and not with *śaradi* which is fem. in gender; further, both the words *pravitata-tāraka-kumude* and *nabhah-sarasi* are to be taken as Upamā-Samāsas and not as the Rūpaka ones, as shown by the adjective *gata-meghe* in particular. That an Upamā, and not a Rūpaka, is meant in the stanza, is also clear from the simile *hamsa iva.*)

*(The Āryā is called) Gīti, if the sixth (Gaṇa) in the latter (half) is either d or i. 40.*

If (even) in the latter half of the Āryā the sixth Gana is either *dakāra* (i. e., III) or *ikāra* (i. e., ISI), it is called Gīti: As –

'The lotus plants shine beautifully, having their lotuses surrounded by the sweet humming of the swarms of the hovering bees and being covered with a soft, delicate, lovely colour resembling that of a bright emerald gem.'

*It is called Dhruvā when in both (the halves), (the Yati is) after the fourth (Gaṇa). 41.*

The same Gīti is called Dhruvā when the Yati is after the fourth Gana in both the halves. As –

'The graceful faces of the lovely ladies, possessed of bluish locks, tremulous eyes, (and) lower lips which resemble a Bandhujīva flower, shine beautiful, being endowed with the essence of the enjoyments of Love'. 41. 1.

*(The Gīti is called) Gītikā when the seventh Gaṇa is y or ī. 42.*

That same Gīti is called Gītikā when the seventh Gana is either *yakāra* (i. e., IIS) or *īkāra* (i. e., SIS). As –

'I regard you fortunate, whose deeds are highly valued in the pretty songs which are dear to learned men and which are based on wonderful (topics pertaining to) Dharma, Artha and Kāma'. 42. 1.

*Sometimes, even the third and also the fifth (Gaṇa is so). 43.*

Sometimes, in an alternative employment, even the third and also the fifth Gana in both the halves are either *yakāra* (IIS) or *īkāra* (SIS). By the word *api* (it is suggested that) this happens even in one half (only). Efforts should be made for (finding out) such an employment.

*When the half is made whole it is called Āryāgīti. 44.*

That same Gīti is called Āryāgīti when its half (Gana i. e., the 8th) is made whole. As :-

'This is that pair of arms, whose armlets have been rubbed against the walls of the Mandara mountain, whose armour is torn by the fierce arrows and whose shield is tinged with the redness of blood'. 44. 1.

Here ends the section on Āryā.

The Jāti called Āryā together with its sub-divisions is defined. Now hereafter, some other Jātis which are in vogue among the people shall be defined.

*(That metre is called) Galita when there are five and a half (Gaṇas) in every Pāda. 45.*

If there are five full Gaṇas and a half of it more, the metre is called Galita. As :-

'Do you not remember the flashes (*bhāsvratā*) of the arrows discharged by you, when they devoured the lives of fierce lions and Śarabhas in the forest ... ... ?

*(If there are) four (Gaṇas in each Pāda) it is Nirdhāyikā. 46.*

If there are four Ganas in each Pāda it is called Nirdhāyikā

*Its last (Gaṇa) is either y or ī. 47.*

The last Gana of all the four Pādas of Nirdhāyikā is either *yakāra* (IIS) or *īkāra* (ISI).

*k is the third 48.*

The third Gana in every Pāda of that Nirdhāyikā is generally a *kakāra* (ISI). As :-

'The wicked Manmatha (God of Love) of fearful intentions strikes all people with sharp arrows at their vitals, even though he was angrily burnt to ashes by the wearer of the young crescent moon, oh young girl.'

*(If there are) five (Gaṇas in a Pāda, it is called) Narkuṭaka. 49.*

In every Pāda, if there are five Ganas, it is called Narkutaka.

*(Its) second and third (Ganas) are y or ī. 50.*

Of that same Nirkutaka, the second and the third Ganas are *yakāra* (IIS) or *īkāra* (SIS).

*Or, its third (Gaṇa) is b. 51*

Of that same Narkutaka, the third Gana may optionally be a *bakāra* (i. e., SSI). As -

'May the (third) eye (of Śambhu) protect you, which has the clouds of ashes above it blown off and which is rendered fragrant by the puffs from the mouth, releasing sparks of fire, of the serpent placed on the ear, which is whitewashed with the rays of the crescent moon from which drops of nectar are oozing out and which has dispelled the darkness by its tawny lustres.' 51. 1.

'But that moon too gradually rises up to the blue skies, as a swan moves from one lake to another blue and expansive lake, now gracefully growing in lustre, crushing the darkness, looking like a ball of fresh butter and being the delight of the night lotuses' 51. 2

*(If there are) six (Ganas in a Pāda, it is) Adhikākṣarā 52.*

If there are six Ganas in each Pāda, it is called Adhikāksarā.

*The even (Gana) is never k. 53.*

Of that Adhikāksarā, the even Gana in each Pāda is not *kakāra* (i. e., ISI)

*(But) the third must be k. 54*

Of that Adhikāksarā, the third Gana in each Pāda is *kakāra* (ISI) alone.

*y or ī is its last (Gana). 55*

Of that Adhikāksarā the last Gana in each Pāda is either *yakāra* or *īkāra* (i. e., IIS or SIS)

*Sometimes even the first is so. 56*

Of that Adhikāksarā, sometimes, i. e., in some employment, even the first Gana is either *yakāra* or *īkāra* i e., IIS or SIS. As —

'Oh fairbodied girl, while I enjoy your lower lip, which is covered with blooming blue lotuses, which inflames the shafts of the god of Love, which surpasses an unfailing goblet of wine, which is offered in the mouth of the lover, (and) which is restless owing to slight throbbing, (your)

speech containing many letters is not so gladdening to the ear and the mind (as this lip).'

(Note —The adjectives of *adhara*, which is evidently meant, are intended to be applicable to both the *adhara* and the *madhu*, yet the qualities of the former excel those of the latter, as said in the first adjective in the second line. The blue lotuses in the case of the *adhara* are the dark-blue glances from the half-closed eyes of the girl. In the end, the speaker says that the profuse words of love from the mouth of the fair one are not so delightful as her lower lip when it is in the lover's mouth, though this latter makes her absolutely silent and unexpressive of her love.)

*(It is) a Śīrsaka, when followed by a Gītikā. 57.*

If this same Adhikākṣarā has a Gītikā immediately following it, it is called a Śīrṣka. As :—

'The red insects which are the beauty of the green verdure, move about; the rain-clouds slightly cover the planets, the moon and the sun. Now the lightning moving in the interior of the cloud flashes all around and then the Cātaka birds raise their notes in the sylvan regions, with delighted minds.

And then, as soon as the winds begin to blow, surcharged with the fragrance of the Kutaja flowers, gently embracing the tops of the beds of the sprouts of the Silīndhra flowers, so soon they make the minds of the journeying lovers uneasy'.

*By the addition of one (Gaṇa) each time (are obtained) Lalita, Subhadrā, Vidruma, Vaṁśapatra, Kuñjara, Puṣpadanta and Mālā (Śīrṣakas). 58.*

There take place seven Śīrṣakas as named above. Among them, seven Gaṇas make the Pāda of Lalita and there is a Gītikā at the end; eight Ganas make that of Subhadrā and a Gītikā at the end. Thus the remaining Śīrṣakas should be known by the addition of one Gaṇa every time.

*It is a Trikalaya when it has a Nirdhāyikā in the middle. 59.*

If the Śīrṣaka as described above has a Nirdhāyikā in the middle of it, it is called a Trikalaya. Thus in short, first an Adhikākṣarā, then a Nirdhāyikā in the middle, (and) finally a Gītikā at the end, these three form a Trikalaya. As :-

'At the advent of the night, the day-lotus which had its flower open, now closes itself, being oppressed by the full moon. This bee has

become uneasy. The Kalahaṁsas and the Sārasas accompanied by their mates, raise their pleasant voices, being stationed in the inside of the Kedāras and thinking about something.

Here, the Bandhujīvaka trees appear very charming with their flowers looking like the Indra-gopa insects mounted upon the green verdure. There, the Śirsaka plants with their open flowers resemble the nights bespangled with stars.

The swarms of bees, having left behind them the juice of the Saptacchada flowers and being extremely greedy, after neglecting (other) flowers, fondly resort to the night lotuses, turned whitish with their pollen. 59. 1.

*Three Ganas (make a Pāda of a) Bhaṅga-dvipadī. 60.*

If there are three Gaṇas in each Pāda, it (i e, the metre) is called Bhaṅgadvipadī. The mention of a Gana again (in the Sūtra), even when the governing word *gaṇa* is still available (from Sūtra 15), is meant for the adoption of all the Ganas, whether the Caturmātras or the Pañcamātras, without any distinction Otherwise, the Caturmātras alone (which are meant by the word *gana* in Sūtra 15) would have been available.

*Or four, or five or six or seven (Ganas make its Pāda). 61.*

Of that Bhaṅga-dvipadī, there are not merely three, but also four, five, six or even seven Ganas.

*A bh (i. e, a long letter) stands optionally at its end. 62*

Of that Bhanga-dvipadī, a long letter may or may not be at the end of every Pāda.

*The longest (among them) contains 30 h (i e, short letters) 63*

That Bhaṅga-dvipadī which has thirty short letters (i. e., Mātrās) is the last, the longest, among them. Hence the one which is longer than all the other Bhanga-dvipadīs, contains thirty Mātrās There does not exist any which is longer than that. *Note h* or a *laghu* signifies both a short letter and an aksara Mātrā, see Introductory, Note, para 3.

*It is (called) a Dvipadī, when a Gītikā follows it immediately 64.*

That same Bhanga-dvipadī is called Dvipadī, if it is immediately followed by a Gītikā. Illustration :—

'The water in wells and rivers is now exhausted like the ample treasure, though well protected, at the (evil) turn of one's fortune.

And this earth, with the forest trees completely dried up and its dust well heated, pines away like the mother of an imprisoned thief.

The body of the wild buffalo, who is oppressed by heat, droops down, being unable to bear any exertion, like the troubled household affairs, which require the feeding of many children and dependents, in the case of an idle man.' 64. 1.

Here is another Dvipadī –

'By the ruthless breeze, which moves about being charged with the odour of the elephant's rut, are tortured the persons who are separated from their dear ones, today, oh compassionate one, oh conqueror of your enemies, oh lord of many beloved ladies and beloved of your people !'

(Note. Every line begins with a vocative).

Now are the spots on the earth adorned by the Bandhūka flower, whose filaments are covered with pollen and which is a friend of the bees, as they (i. e., spots) are adorned by you, who are the friend of the world, oh ornament of your family'. 64. 2.

*Sometimes a Vidārī is (put) between (the two). 65.*

Sometimes, in a different employment (of the metre), a Vidārī is placed between the Bhaṅga-dvipadī and the Gītikā. The definition of a Vidārī (the author) will give later. As :—

'The mountains, looking darkish owing to the water-filled thundering clouds, please the mind, as they have their lovely table-lands looking wavy owing to the filaments of the fresh flowers of the Kandalī plants, their topmost forests overspread with the fragrant dust of the flowering Kuṭaja plants, (and) the interiors of their caves filled with the sweet notes of the impassioned pea-cocks.

A (loving) person, though his beloved mate is in front of him, is yet made uneasy by the breeze, which is opening the Ketaka buds and wafting with itself the pollen of the Bakula flowers.

The whole world is worshipfully offered to the god of love by the rain-cloud, which is dark like the lord of a she-elephant, which has dispersed the day-light resembling the dust, and which is prominently displaying its lightning, in the vicinity of the mountain.' 65. 1.

*Vidārī (is a metre, where) there are fourteen short letters (i. e., Mātrās, in a Pāda) with a long letter at the end. 66.*

If there are fourteen Mātrās (the last two consisting of a long letter) in a Pāda, the metre is called Vidārī. 66.

